## सनत्कुमार उवाच

ततस्तु प्रहसन् देव सन्प्रश्नशिथिलीकृत[1] ।
पार्वतीवदनाम्भोज क्षणमात्र ददर्श ह ।। १०

ब्रह्माद्या देवता सर्वा श्रवणाकुलमानसा[2] ।
गौरी सस्मितगम्भीर प्रोवाच स्मरनाशन ।। ११

## श्रीशङ्कर उवाच

यथावत् सर्ववृत्तान्तमाद्यादाद्यतर वरम् ।
शृणुध्व देवता सर्वा शृणु देवि ! मम प्रिये ! ।। १२

क्षीणायुष गते लोके दुर्भिक्षे भयपीडिते ।
राजधर्मे निराधारे उत्पातेऽशुभदर्शने ।। १३

चण्डवायुप्रभवने निर्वृक्षे तृणवर्जिते ।
प्रलयादित्यसन्तापे शुष्कतोये च सागरे ।। १४

प्राकृते सकले लोके नष्टे स्थावरजङ्गमे ।
उल्काज्वालाकुले घोरे प्रदहन्ति दिशो दश ।। १५

ज्वालामालाकुले भीमे धूमान्धपटलच्छदे ।
रौद्रनादे जगत् दग्धे पातालतलगोचरे ।। १६

उच्छ्रिते दु सहे नाशे कालाग्नौ प्रलयान्तिके ।
आब्रह्मस्तम्बपर्यन्ते भस्मीभूते चराचरे ।। १७

प्रलीना अमरा सर्वे भूतग्रामाश्चतुर्विधा ।
अधोर्ध्वं मध्यपर्यन्त निर्वीर्या अवतस्थिरे ।। १८

विसर्पितस्तदा वह्नि शिखाकुटिलभासुर ।
युगानि दशपञ्चाशन्नैव शान्ति प्रयच्छति ।। १९

स्वतेजो ज्वलन काले धर्षयित्वा सुरासुरान् ।
स्वय प्रशान्ततेजोऽभूद्भस्मीकृत्य चराचरम् ।। २०

प्रशान्ते हुतवाहे वै ऊर्ध्वे निम्नसमे स्थले ।
महाप्रलयसम्पन्ने [3]निस्पन्दस्तिमितोऽह्यभूत् ।। २१

---

1 A₁, B₁, C—पप्रच्छ शिथिलीकृतः ।

2 A₁, B₁, C—श्रवणीकृतमानसा ।

3 A₁, B₂, C—निष्फेन ।

सूक्ष्ममव्यक्तसजात भूयस्त्रिशद् युगानि च ।
युगानि परिवर्त्तन्ते पञ्चाशद्दश ते पुन' ॥ २२

पूर्वापरस्य नेच्छन्ति अत्र सख्यामत जना ।
अतिशून्ये निराभासे अनक्षत्रे अगोचरे ॥ २३

शतसध्या गते काले विकारप्रलभो वभौ ।
स्ववीर्यात् स्वेच्छया सौम्यो जगत् सौम्यमुपालभन् ॥ २४

स्तुतमत्यन्तदिव्याप्सु प्लावन पावनं परम् ।
दुर्लक्ष्यादद्भुत जातमजातजनित शुभम् ॥ २५

चित्र शङ्खशशाङ्काभ नीरमध्ये स्वयम्भुवम् ।
आसप्तपातालतल नीरेणाप्लावित जगत् ॥ २६

आब्रह्मस्तम्बपर्यन्तमेकार्णवमभूत् जगत् ।
अण्डमात्रमनुद्भूत[1] विश्व विश्वात्मना तदा ॥ २७

काल ग्रसति भूतेश परमेश स्वयम्भुव. ।
जलत्व[2] जायते स्वाङ्गे वितनोति भुव स्वयम् ॥ २८

निरञ्जनाद् यतो जात नीरनाम प्रकीर्त्तितम् ।
सर्वलोकविनाशार्थ महाप्रलयक त्विदम्[3] ॥ २९

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयन तस्य ता पूर्वं तेन नारायण स्मृत ॥ ३०

आपूर्यमाण सलिलै. स्थित लोक चराचरम् ।
स्तिमित सलिल ध्मान्त सुचिर भूतवर्जितम् ॥ ३१

शतसन्ध्या गते काले व्याप्तमाविरभूज्जगत् ।
पूर्णे वर्षसहस्रान्ते चुक्षुभुः सलिलाशयाः ॥ ३२

ततस्तु जगता नाथो देवदेव सदाशिव. ।
सृष्टिहेतौ मनो दध्रे कृत्स्न क्षोभमजीजनत् ॥ ३३

क्षोभाज्जातो महासूर्य्यो वुद्वुदो रजतोपमः ।
जाते वुद्वुद्सकाशे स्वय वीजमभूत्प्रभु ॥ ३४

---

1 A₁, B₂, C—अनुद्रक्तम् ।

2 A₁, B₂, C—जलता ।

3 B₂ महाप्रलयशान्तिद ।

आत्मयोनिः स्वयं वीज क्षेत्रज्ञश्चात्मसम्भवः ।
एताभ्या क्षेत्रवीजाभ्या प्रलयान्तेऽभवज्जगत् ।। ३५

अण्डोदरगते विश्वे सोमसूर्यविवर्जिते ।
निशा स दीर्घयामास सर्वभूतानुकारिणीम् ।। ३६

तदा जागर्त्ति भूतात्मा एकश्चैव महेश्वर ।
योगमूर्त्तिस्थितो नित्यो योगक्षेमप्रवर्तक ।। ३७

दिव्ययोग समास्थाय सृष्टिहेतोर्निरञ्जन ।
सहस्रयुगपर्यन्त तदण्ड भेदयस्त्वयम् ।। ३८

तयो शकलयोर्मध्ये ह्यव्यक्तो व्यक्तता गत ।
वायव पञ्चधा चैव पञ्चात्मकगुणै सह ।। ३९

सत्त्व रजस्तमश्चेति शरीरप्रभवा गुणा ।
अदेहो देहवान् जज्ञे त्रय एव त्रिशूलधृक् ।। ४०

पूर्वजावरजौ भेदौ न विदुर्गुणरूपत ।
हिरण्यभाण्डकापालाधरोत्तरविधौ स्थिता ।। ४१

य ऊर्ध्वं स सुवर्णोऽभूत्तदूर्ध्वं ते तु पर्वताः ।
यो रस स समुद्राश्च मेदो मेदिनिता गत ।। ४२

मासाशा द्वीपाः सजाताः गौश्च जज्ञे स्वतेजसा ।
असृक् सोममयो जातो जात विश्व विभावरी ।। ४३

अभावा भावसजाता भावना वा पृथक् पृथक् ।
एव पञ्चात्मको दिव्यो ज्वलन्निव च पावक ।। ४४

विपुले च तथा शुभ्रे दिव्यपारावतस्थिते ।
चतुर्वाहुरदीनात्मा अक्षसूत्रकमण्डलुः ।। ४५

मेखलाजिनशक्त्यादीन् दधान परमेश्वर ।
यज्ञोपवीतरक्ताङ्ग चतुर्वदनपङ्कजः ।। ४६

कौपीनाच्छादितो व्यक्तस्त्वासीदेक[1] परस्तदा ।
मौनी बीरासनध्यानप्राणायाममुपस्थितः[2] ।। ४७

---

1 $B_2$ व्यक्तस्वामी ।

2. $B_2$ —वीरासनी ध्यानप्राणायमपथि स्थिता· ।

अन्यश्चतुर्भुजश्चासीदिन्द्रनीलसमप्रभ ।
शङ्खचक्रगदापद्म विभ्रत्पीताम्वर शुभम् ॥ ४८

किरीटहारकेयूरवनमालाविभूषित ।
दिव्यचन्दनलिप्ताङ्गो नासालोकनतत्पर ॥ ४६

अपर परमेशान शङ्खकुन्देन्दुसत्प्रभ ।
पाण्डराम्वुदसकाश शुद्धस्फटिकनिर्मल ॥ ५०

दिग्वासा विगतव्रीड प्राशुरत्यन्तसुप्रभ. ।
व्यालयज्ञोपवीती च ज्वलत्तेजोऽग्निमण्डल ॥ ५१

महाहिभूषणोपेतो विश्वमूर्त्तिरमूर्त्तिमान् ।
दिक्षु सव्यापिदोर्दण्ड[2] पृथुस्कन्धो महोरसः ॥ ५२

पिनाकशूलशक्त्यादीन् दधानो व्यक्तमाप्तवान् ।
जटामण्डलमत्यर्थं दधान शुणितेतरम् (?) ॥ ५३

कर्णाभरणपूर्णेन मूर्त्तिमाश्च त्रिलोचन ।
रुद्राक्षमाली स श्रीमान् सर्वतेजोनिवर्हण ॥ ५४

प्रस्फुरन्निर्मलज्योति कोटिभास्करसन्निभ· ।
विश्वभूतात्मना वन्द्यो विश्वस्याधार ईश्वर ॥ ५५

सहस्रशिरस देव सहस्राक्ष शिरोमुखम् ।
सहस्रबाहूरूपादेमनन्त लोकसाक्षिणम् ॥ ५६

विश्वमूर्त्तिधर रुद्रमनादिनिधनाव्ययम् ।
अधरोत्तरमध्यान्त सुव्यक्त भूतसग्रहम् ॥ ५७

अखण्डमण्डलाकार कृत्स्न व्याप्त चराचरम् ।
पूर्णमक्षोभ्यमनघ शिव सर्वाश्रय विभुम् ॥ ५८

एव दृष्ट्वा महेशान शिवद शिवमव्ययम् ।
विष्णुर्जिष्णुर्हृषीकेशस्तद्देह स्वयमाविशत् ॥ ५६

शिवदेह गतो विष्णु सव्ये भास्करयाश्रित[3] ।
निर्भेदस्तत्र लीनोऽसौ क्षीरे नीर विशेद्यथा ॥ ६०

1. $B_2$ उपवीत

2. $A_1$, $B_1$, C दिक् सन्तापसुदोर्दण्ड

3. C भास्वराश्रितः

ततो ब्रह्मा समुद्विग्नो नैव दृष्ट्वा जनार्दनम् ।
कृताञ्जलिपुटो भूत्वा हर स्तोतु प्रचक्रमे ॥ ६१

## ब्रह्मोवाच

जयत्वादिरनादिस्त्वं जन्ममृत्युजरापह ।
जगत्वास प्रतिष्ठाता विश्वयोनिरयोनिज ॥ ६२
कर्त्ता भर्त्ता च हर्त्ता त्व कारणोऽव्ययमक्षय ।
अविभक्त विभक्तोऽसि देवाना प्रपितामह ॥ ६३
जगद्बीजमनन्तस्त्वं जगदाधार ईश्वर ।
बृहन्मूर्त्तिरमूर्त्तिस्त्व परत परमेष्ठिन ॥ ६४
असक्षेय अनाधृष्य अपार परमेश्वर ।
अप्रमेय अनाद्यन्त बहुरूप नमोऽस्तु ते ॥ ६५
नम स्वयम्भो ! भगवन् ! द्वन्द्वमोहप्रशान्तिद !
को भवाननुगच्छामि पश्यामि विदिशोपमम् ॥ ६६
मुग्धोऽस्म्यहं विरूपाक्ष न वेद्मि चरित तव ।
प्रसीद सुमुखं नाथ इच्छामि त्वा च वेदितुम् ॥ ६७
अत स्वरूपं देवेश विभूति भवतोऽद्भुताम् ।
कि नाद श्रूयते देव ! त्वद्देहेऽस्मिन् पितामह! ॥ ६८

## श्रीशङ्कर उवाच

इत्युदाहृतमाकर्ण्य प्रोक्तोऽह गिरिनन्दिनि! ।
ब्रह्माण परया भक्त्या बुद्धिसयोगयोजितम्[1] ॥ ६९
मदीय परमं ज्ञान मया दत्त वरानने !
चक्षु पारमिका विद्या[2] पश्यता तेन पश्यति ॥ ७०
तत प्रभृत्यह ब्रह्मा अनुभूत यथा पुरा ।
पृच्छस्व तं वरारोहे ! स्फुटं वेत्ति पितामहः ॥ ७१

---

1 $B_2$ बुद्धिसयोगयोगजम् ।

2 $A_1$, C—मदीयां परमा दिव्या ।

स्वतः परतरं वेत्ति विदितं निखिल जगत्[1] ।
पर्यवस्थानमस्माक स्वरूपं सार्वदैहिकम् ॥ ७२

पुराणवादान् ब्रह्मा च कथयिष्यति साप्रतम्[2] ।
प्रश्नस्यास्य वरारोहे ! दिव्य सम्बोधनोत्तरम् ।
भक्त्या चार्व्याभिचारिण्या प्रणिपातेन पृच्छ तम् ॥ ७३

## सनत्कुमार उवाच

इत्युक्त्वा च महादेव पार्वती प्राणवल्लभाम् ।
सभाया तत्र शम्भुश्च तूष्णी तस्थे द्विजोत्तमा ॥ ७४

य इदं शृणुयाद्भक्त्या पठेत् वा शुचिमानस ।
प्राप्नोति परमामृद्धि मही स्फीता[3] गुणावलीम् ॥ ७५

शिववक्त्रादिद वाक्य निसृत लोकपावनम् ।
शृण्वन् नाशयते पाप सप्तजन्मान्तरार्जितम्[4] ॥ ७६

स्वर्ग्यं यशस्यमारोग्य शत्रुघ्न विजयप्रदम् ।
सवाद शिवशक्त्यास्तु दुर्लभ भुवनत्रये ॥ ७७

परम सुहृदे देयं रहस्य निखिल त्विदम् ।
नाश्रद्धधानारूपाय नास्तिकायार्जितात्मने ॥ ७८

पितामह त्वभिमतस्त्वनामयो भवाब्धितारक सदाश्रितानाम् ।
सकलजगदनुग्रहो हरस्त्वपहरतु चिरैर्नकि शिवो न

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहितायां प्रथमेऽशे गौरीशङ्कर सवादो नाम तृतीयोऽध्याय ॥

1. Al, C—वेदितु निखिल पुरा ।

2 B₂ पुराणपुरुष विद्वान् ब्रह्मा च कथयिष्यति ।

3. A₁, C—इहेप्सित ।

4 B₂ कोटिजन्मान्तरार्जितम् ।

# चतुर्थोऽध्यायः

## सनत्कुमार उवाच

एव वेदपतेर्वाक्य श्रुत्वा श्लक्ष्ण मनोहरम्[1] ।
अघौघप्रशमार्थ[2] च प्राणिनामजितात्मनाम् ॥ १

## पार्वत्युवाच

गिरिराजसुता देवी ब्रह्माणममितद्युतिम् ।
प्रोवाचावनता भूत्वा स्मित शान्त पितामहम् ॥ २

आचक्षस्व सुरश्रेष्ठ वृत्तान्त विदित यथा ।
देहे देवस्य यद्दृष्ट सम्भव ब्रूह्यशेषत. ॥ ३

## सनत्कुमार उवाच

तमुवाच ततो ब्रह्मा समाजे ऋषिदैवतान् ।
ईशानप्रमुखान् सर्वान् भवानीं शिवसन्निधौ ॥ ४

## ब्रह्मोवाच

जगन्मात ! शृणुष्वेद पुराणप्रवर महत् ।
नाख्यात कस्यचित् देवि ! कल्पकोटिशतैरपि ॥ ५

विदित यन्मया सम्यक् देहे देवस्य चाखिलम् ।
आदित शृणु कल्याणि ! सर्वपापभयापहम् ॥ ६

त्रीन् देवान् गुणजान् वेद्मि न च वेद्म्यशरीरकम् ।
विश्वतेजोमयश्चैकोऽपरश्चास्यानुयास्यत ॥ ७

अह च दक्षिणे तस्य वामे विष्णुर्व्यवस्थित ।
एष एव विभक्तात्मा तिस्रश्चैव तु जज्ञिरे ॥ ८

---

1. $A_1$, $B_1$, C—महोदय ।
2. $A_1$, $B_1$, C—प्रशमायार्थं

ववन्दिरे तदा चैक तेजसातीव दुःसहम् ।
रूपमत्यद्भुत यस्य मूर्खोऽहं साध्यसाधत ॥ ९

वासुदेवोऽपि भगवान् विवेश सुचिराच्छिवम् ।
शिवदेहगत विष्णु दृष्ट्वा मे व्यथित मन ॥ १०

तद्गतस्तन्मना भूत्वा तन्निष्ठस्तत्परायण ।
आर्त्तो सविनया वाचा रुद्र स्तोत्रमुदाहरन् ॥ ११

दशवर्षसहस्रान्ते तुतोष भगवान् हर ।
उवाचाम्वुदनिर्घोषो महादेवो जगत्पति ॥ १२

मद्भक्तेन त्वया दिव्य ब्रह्मन् सम्वत्सराङ्कितम् ।
विग्रह सतत मह्य सर्वंलोकाधिवासकम् ॥ १३

उद्दिष्ट चानन दिव्य मम गच्छ पितामह ।
इति देवेन आदिष्ट प्रविष्ट स्वनिकेतवत् ॥ १४

अटमानो निरातङ्क महायोगेश्वर हरिम् ।
ददर्श लिङ्गमप्येक सौम्यमत्यन्तसुप्रभम् ॥ १५

अङ्गुष्ठोदरमात्रन्तु सुव्यक्त कुशयोनिजम् ।
मध्ये तस्य वरेण्यस्य ज्वलित तेजसाद्भुतम् ॥ १६

य सहस्रशिराश्चिन्त्य सहस्राक्ष सहस्रपात् ।
तस्योदरगत विश्व पर्यायेण निवोध भो ! ॥ १७

पाताला सप्त स्वर्गाश्च लोकालोका ससागरा. ।
दिशश्च विदिशश्चैव भूमिरापोऽनलोऽनिल' ॥ १८

भूधरा'[1] सरितो रम्या पुण्याश्रम-विभूषिता ।
सागरा विविधा स्फीता. क्षीरोदाद्या. पृथक्-पृथक् ॥ १९

अन्तरीक्षग्रहा नागा ध्रुव सप्तर्षिभि सह ।
दक्षाद्या मुनय सर्वे ऋतवश्च सदक्षिणा ॥ २०

ऋग्यजु.सामसघानि साङ्गोपनिषदानि च ।
शब्दविद्या [2] प्रमेयाश्च खण्डज्ञानादिमिश्रिता. ॥ २१

---

1  $B_2$—भूधरात् ।

2. $B_2$—विद्वाद्विद्या ।

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणा ।
बर्हीशो वरुण शक्र' प्रेताधीशः समीरणः ॥ २२

लोकपालादिविख्याता वायुश्चन्द्रो हुताशन ।
साध्याः पितृगणा यक्षा सिद्धविद्याधरोरगा ॥ २३

गन्धर्वाप्सरसो सघा मित्रावरुण एव च ।
रक्षो गुह्यकभूतानि ये केचिद्दिविचारणा ॥ २४

मानवा पशवो वृक्षा ग्राम्याणि विषयानि च ।
वसन्ति आदिभूतानि ग्राम्यारण्यनिवासिन ॥ २५

कृमयो जलभूतानि सुखदु खानि यानि च ।
तिर्यगूर्ध्वं च पाताल वास विषयगोचरम् ॥ २६

तोयदा विद्युत स्पष्टा रोहितेन्द्रधनुस्तथा ।
उच्चै श्रवोऽमृतो रत्न पारिजात सुरद्रुम ॥ २७

विष कालात्कलप्रख्य कालाग्नि प्रलयान्तकृत् ।
दहनाऽप्यायना वेतावतीतानागतास्तथा ॥ २८

वर्त्तमानाश्च वर्त्तन्ते कालत्रयविभागशः ।
वृत्तयश्चात्र वृत्तान्ता फलान्योषधयो वनम् ॥ २९

मन्त्राश्च विविधा विद्या वैदिका लौकिकाश्च ते ।
मुहूर्त्ता मूर्तिरूपेण अणिमादिगुणास्तथा ॥ ३०

इत्यादिक समासेन निबोध गिरिनन्दिनि ! ॥
शिवप्रसादादखिल दृष्टोऽह देहमध्यगम् ॥ ३१

नारायण शरीरस्थ दृष्ट्वाह परमेश्वरम् ।
अभेदरूपमाहात्म्य तदा चक्रे स्वय विभो ॥ ३२

य. शिव. सर्वशक्ति स या शक्ति स महेश्वर ।
धार्यधारकभावौ तावनन्तरगताविमौ ॥ ३३

त्व देवि ! विष्णुभावेन त्वसौ देवो महेश्वर ।
मूढ भेद प्रकुर्वन्ति ज्ञानवुद्धिबहिष्कृता ॥ ३४

न विष्णुशिवयोर्भेद एष धर्मः सनातन ।
परिपाल्य इम धर्मं नरो मुक्तिमवाप्नुयात् ॥ ३५

न वज्राम्बुजशङ्खाद्यैश्चक्रेण मूसलेन च ।
शिवशक्त्याङ्कित लोक वाङ्मय सचराचरम् ॥ ३६

दम्पती सुखमेधेते अपि कीटपतत्रिषु ।
एष धर्म स्थितो नित्य वर्णाश्रमविभागशः ॥ ३७

सर्वे च योनिलिङ्गाभ्या देवगन्धर्वकिन्नराः ।
यतयश्च प्रसूयन्ते वशिष्ठप्रमुखा. किल ॥ ३८

एतन्मे विदित कृत्स्न देहे देवस्य पार्वती ।
पश्चाद् बहिर्गतोऽह च देवदेवमुखाम्बुजात् ॥ ३९

अविज्ञेयमविज्ञान[1] प्रत्यक्षः तमुपालभम्[2] ।
तेनैव मुक्तोऽह देवि ! प्रसन्नेन शिवेन च ॥ ४०

जगत्स्रष्टा भवानेष ब्रह्मा भवितुमर्हति ।
प्रजापतित्व प्राप्नुहि सृजन् लोकाश्चराचरान् ॥ ४१

इत्याज्ञाप्य महादेव शिवस्तु परमेश्वर. ।
अन्तर्द्धान गत सद्यस्त्वहमेको व्यवस्थित ॥ ४२

अधरोत्तार च पश्यामि सर्वभूतमिद जगत् ।
ध्यातोऽह सुचिर तस्य महादेवस्य भाषितम् ॥ ४३

आज्ञासम्पादनार्थाय दक्षिण पाणिमुद्धतः ।
तस्याङ्गुष्ठात्ततो जज्ञे दक्षो नाम प्रजापति ॥ ४४

मन.सकल्पजा. सप्त तयोर्जाता महर्षय ।
द्वे चैवास्य प्रजेऽभूता वृद्धियोगादुभे पुनः ॥ ४५

तपोनिष्ठे च ते जाते द्वादशैता महाप्रजा ।
तासा पुत्राश्च पौत्राश्च अविच्छिन्ना च सन्तति. ॥ ४६

धारयेच्च जगत्कृत्स्नमधरोत्तारवत्तु यत् ।
एता उत्पादिता भूयः सृष्टिहेतोर्निरञ्जनात् ॥ ४७

---

1 B₂ सर्वज्ञ तत्त्वविज्ञान ।

2. B₂. समुपालभम् ।

उशनोऽङ्गिरसागस्त्यो मन्त्रतत्त्वार्थबोधका[1]।
अथ खण्डकपालस्य शिरो भित्वा मदोत्कटौ[2] ॥ ४८

जातौ दैत्यौ महावीर्यौ महामोहाञ्जनप्रभौ।
पापवुद्धी[3] दुराचारौ धर्मविघ्नोपपादकौ ॥ ४९

सर्वभूतविरोधात्मौ महामत्तौ भयङ्करौ।
हरित्श्मश्रू लोहिताक्षौ धूम्रावरुणपिङ्गलौ ॥ ५०

सितदष्ट्रोत्कटौ रौद्रौ शङ्कुकर्णौ महाहनू।
विरूपौ विकटौ[4] घोरौ दारुणात्मकभाविनौ ॥ ५१

महामायाविनौ दुष्टावुग्रावत्यन्तदु सहौ।
एकाकिन च मा दृष्ट्वा ह्यन्तर्द्धान गते शिवे ॥ ५२

मदन्तिकमिमौ प्राप्तौ दानवौ युद्धदुर्मदौ।
प्राहतु को भवानिति केन जातोऽसि शस नौ ॥ ५३

कथमुग्रतप[5] प्राप्तौ येनावामवमन्यसे।
अपसर्प सुदुर्बुद्धे परित्यज्य मही क्रमात् ॥ ५४

अहं धूम्रस्त्वसौ चोल्का. क पुन त्वमिहोच्यताम्।
वधयोग्यस्त्वनार्यस्त्व कि न भाषसि मूढधे ॥ ५५

युद्ध वा यदि वा पूजा प्रयच्छ यद्द्रुत हितम्।
आद्यमभिमतो दोर्भ्यामह रुद्र नमस्कृत. ॥ ५६

तत्तापास्तन्मना भूत्वा तद्गतिस्तत्परायण।
अन्तरात्मन्नविदितो तव वाचातिसङ्कटे।
इत्युक्तो वर्णमुच्चार्य रुद्र शरणमागत.[6] ॥ ५७

---

1 $B_2$ कोविदा

2 $B_2$ मदोत्करौ।

3 $A_1$, $B_2$—पापवुद्धि।

4 $B_2$ विकृतौ।

5 $A_1$, $B_1$, C—कथमग्रतम।

6 $A_1$, B—शरणमागत।

## ब्रह्मोवाच

ॐ नमोऽस्त्वादिप्रकृतये ह्यव्यक्ताय महात्मने।
नमः परममेध्याय त्वचिन्त्याय नमोऽस्तु ते ॥ ५८

जय आदिरनादिस्त्व जय जन्मजरापह।
जय सूक्ष्म जय स्थूल जय शान्त जयाक्षय ॥ ५६

विश्वेश्वर जगद्धातर्विश्वतोऽक्षिशिरोमुख।
अनाश्रय त्वनाधार निरपेक्ष गतज्वर ॥ ६०

ॐ कारस्त्व वषट्कार कारणं क्रतुभुक् क्रतु।
दीक्षा क्षेत्र क्रतोर्यूप होता चाध्वर्युरेव च ॥ ६१

उद्गाता ऋत्विजो दानमाज्यमग्नि श्रुवः श्रुच।
त्वन्मया मन्त्रभूताश्च तृप्तास्तृप्यन्ति देवता ॥ ६१

गुणाय गुणभोक्त्रे च अन्तराय यशस्कर।
गुह्य गूढप्रमेयाय अपर्यायप्रवर्त्तिने ॥ ६३

धमर्थिकामदानाय मुमुक्षोर्मोक्षदायिने।
सर्गस्थित्यन्तकर्त्रे च लोकसाक्षी हृदि स्थित ॥ ६४

अपराजिदनाद्यन्त अनन्त पुरुषाव्यय।
योगनिष्ठापरेशान ज्ञाननिष्पत्तिहेतवे ॥ ६५

प्राज्ञ॰ प्राज्ञवता श्रेष्ठो वरिष्ठ सर्वज पिता।
विश्वयोनिरयोनिस्त्वं विश्वमुक्तिकर प्रभु ॥ ६६

शुद्धतेजोमता ज्योतिर्माहात्म्य महदुत्तमम्।
अविभिन्नविभिन्नाय त्रिमूर्ते ते नमो नम ॥ ६७

ॐकारप्रभवाद्देवास्तस्मै वेदान्तवेदिने।
सिद्धान्तमतिसिद्धान्त वामदेव नमोऽस्तु ते ॥ ६८

सव्यदक्षिणमार्गस्थ सद्य पूर्णेन्दुवर्चसे।
तत्त्व तत्पुरुष श्रीमान्! त्रिपुरघ्न नमोऽस्तु ते ॥ ६६

शिखरीन्द्रसुताकान्त कन्दर्पमथन प्रभो।
ईशान जगता नाथ सद्योजात नमोऽस्तु ते ॥ ७०

त्रैलोक्यक्रमणक्रान्त अन्धक-द्विप केशरिन् ।
त्रैलोक्यभुवनस्तम्भ गङ्गाधर ! नमोऽस्तु ते ।। ७१

वरेण्यो वरदश्चाऽसि ब्रह्म-विष्णु-शिवात्मक ।
योगिध्येय नमस्तुभ्य दक्षक्रतुविनाशिने ।। ७२

ब्रह्मचर्यव्रतासक्त नित्य शक्तिमता वर ।
व्यालाभरणसर्वाङ्ग व्यालयज्ञोपवीतिने ।। ७३

भवभीतिहरेशान देवानामार्त्तनाशन ।
त्र्यम्वकाय नमस्तुभ्य भक्ताना भक्तवत्सल ।। ७४

जय शान्त प्रभो श्रेष्ठ अघोर परमेश्वर ।
अविभिन्नविभिन्नाय पञ्चब्रह्म नमोऽस्तु ते ।। ७५

पुराणपुरुष नित्य त्वामाहुर्ब्रह्मवादिन. ।
गोप्तार गोद्विजादीना सुब्रह्मण्य नमोऽस्तु ते ।। ७६

आम्नाय विधिसस्थाय रुद्रमूर्ते नमो नम ।
बहुरूप नमस्तेऽस्तु कपर्दी नीललोहित ।। ७७

नीलकण्ठ नमस्यामि नम सोमार्द्धधारिणे ।
मन सरसि हंसस्त्व पर ब्रह्म सनातन ।। ७८

वृद्धबालस्वरूपोऽसि हृत्पद्मविक्रसोज्ज्वल ।
अनाख्येय अनालोक शब्दस्पर्शरसादिभि ।। ७९

हेयाहेयविनिर्मुक्त निर्वाण परमेश्वर ।
निष्प्रपञ्च निराभास देहे देहभृतावर ।। ८०

पञ्चात्मकं गुणाश्चैव वायवश्चेन्द्रियाणि ये ।
शरीरे च गुणा ये च ये च वागुपलक्षिता ।। ८१

त्वद्विभूत्या इद विश्व त्वत्तो नान्या गतिर्मम ।
प्रसादसुमुखो भूत्वा त्राहि मा शरणागतम् ।। ८२

अन्नं हि प्राणिना नाथ जीवनायैव केवलम् ।
आर्त्ताना शरणं देव आश्रिताना च केवलम् ।। ८३

ब्रह्मोवाच

इति परमपदगतोऽह वै बहुस्तुतिवचनोपहारवृन्दै[1] ।
स्वमनसि शिवसकल्पभूत प्रियमुपगतस्त्रिभुवनारिकण्टकोऽथ[2] ॥ ८४

गगनतलममल सत्त्वस्थितमति कृपया वेधसो ममाऽव्यय ।
त्राता मूर्ति पुरतो वभूव मा भै प्रीतोऽस्म्यनुद्यमोऽहमित्याह[3] ॥ ८५

समाश्वास्य[4] तु मामेव प्राह दैत्यौ महेश्वर ।
धिग्वा पापसमाचारौ दानवाववि‌वेकिनौ ॥ ८६

विचार्यमाणौ ब्रह्माणमत्त्‌ु कमलसम्भवम् ।
समस्तलोककर्त्तार समाधिस्थ च मत्परम् ॥ ८७

या गति हिंस्रका यान्ति परपीडाकृता नरा ।
द्विषन्तो या गति यान्ति तान्नयामि न सशय ॥ ८८

मित्रद्रोह अविश्वस्त परदारापहारिणाम् ।
भ्रूणहा गुरुतल्पादि महापातकिना गतिम् ॥ ८९

युवा वै यास्यथ पापौ क्रूरौ क्रूरतरा गतिम् ।
अवश्य नात्र सदेहो वचन शृणुत मम ॥ ९०

श्रुत्वा जहसतुस्तौ तु वचन रुषितेक्षणौ[5] ।
तावुभौ घनवृन्दाभौ विद्युज्जुष्टौ जगर्जतु ॥ ९१

वज्राङ्गावुद्यतोन्मुष्टी लेलिहानौ च सृक्कणीम् ।
तमभ्यासगतावेतौ हन्तुकामौ दुरासदौ ॥ ९२

सव्यदक्षिणमावृत्य मध्ये कृत्वा त्रिलोचनम् ।
आससादतुरन्योऽन्य कृष्णावर्त्ताविवार्ककम् ॥ ९३

1 $A_1$, C—हृद्यै
2 $B_2$, त्रिभुवनारिकण्ठादथ
3 $A_1$, $B_2$, C—अनुत्तमोक्तिमित्याह ।
4 $A_1$, C—समाख्यास्य ।
5. $A_1$, $B_2$. श्रुत्वा तद्वचन तौ तु जहसतु रुषितेक्षणौ ।

वराहाविव लोकेते देव सौदामिनीमिव ।
दुर्लक्ष्यमतिविक्रान्तौ ब्रह्मग्रहणगर्जितौ ॥ ९४

प्रक्रोशन्ति च गर्जन्ति निपतन्त्युत्पतन्ति च ।
भ्रमन्ति गतिभीम च त्रासमुत्पादयन्ति च ॥ ९५

त्रस्तोऽह तमपश्यस्तु[1] ह्यभूत लोमहर्षणम् ।
तत प्रमथनाथञ्च हरस्तत्र मुदीरितम् ॥ ९६

जयस्व विश्वभूतात्मन् बृहत्काय महोदर ।
जयस्वाशेष जेता त्व भूर्भुव. स्थाणु जङ्गमान् ॥ ९७

प्रवाहकाल कालज्ञ वीर्यं वीर्यवता वर ।
अप्रमेय अनाघृष्य तेजस्तेजो यशोवह ॥ ९८

सर्वमायानिवृत्तिश्च गोप्ता त्व जगता सदा ।
अशरण्य शरण्यश्च एकश्चात्मा ममाशुभा.[2] ॥ ९९

त्राहि मा भो विरूपाक्ष जहि पापौ महासुरौ ।
धर्मान्तकरणावेतौ त्व हि धर्म सनातन ॥ १००

इत्येव देवमीशान स्तुतमार्त्तहर परम् ।
अस्तौषिष तदास्माक जगता रक्षणाय च ॥ १०१

मया स्तुतेन तेनाथ देवदेवेन धीमता ।
तत्क्षणादतिदीप्त च स्वरूप प्रकटीकृतम् ॥ १०२

प्रवर्द्धित महत्तेजो दृष्ट्वा भीमतम तदा ।
भस्मीभूताविमौ दैत्यौ धूम्रोल्कौ सुरतापिनौ ॥ १०३

तत पुनरह देवमस्तुव परमेश्वरम् ।
जगद्भीतिहर भीम कोटिभास्करवर्च्चसम् ॥ १०४

नम सर्वाय शर्वाय सर्वरूपधराय च ।
भवोद्भवाय देवाय सर्वनाम्ने नमो नम ॥ १०५

---

1 $B_2$ तमपाहृन्त ।

2 $A_1$, $B_2$ C—ममाशुभात् ।

3. $B_2$ भववाम्ने ।

सृष्टिसस्थितिकर्त्रे च मृडाय शशिमौलये ।
सर्वसृष्टिविनाशाय हराय च नमोऽस्तु ते ॥ १०६

नमस्त्रिगुणवाह्याय शिवायामृतदायिने ।
पर ब्रह्म नमस्तेऽस्तु सच्चिदानन्दविग्रह ॥ १०७

नमस्ते रिपुभीमस्त्व भीमनामाप्रतिष्ठित ।
चित्स्वरूपाय देवाय चन्द्रार्द्धशेखराय च ॥ १०८

चिदशायाचलेशाय चराचरभृते नम ।
इत्येव भक्तियुक्तेन देवदेव स्तुतो मया ॥ १०९

ध्रियता भो प्रयत्नेन शिवप्रीतिकरी सदा ।
सर्वपापक्षयकरी ब्रह्मगीतेयमम्बिके ॥ ११०

न देया यस्य कस्यापि शृणु देवि ! शिवप्रिये !
प्राणवद्रक्षणीया च आज्ञया हि पिनाकिन ॥ १११

ये इमा च पठेद्भक्त्या शृणुयाद् वा समाहित ।
ब्रह्मगीता प्रयत्नेन षड्मासात्सिद्धिमाप्नुयात् ॥ ११२

एककाल द्विकाल वा पठनाल्लभते ध्रुवम् ।
सिद्धि पारमिका गौरि ! त्रिकाल शिवतत्पर ॥ ११३

प्राप्नोत्यभिमतान् भोगान् प्रेत्य चाभिमत फलम् ।
सर्वकामसमृद्धात्मा सदा चिन्तामणेरिव ॥ ११४

विद्यार्थी लभते विद्या बृहस्पतिसमो भवेत् ।
प्रभाते पठनादस्या शिवस्याज्ञाप्रमाणत ॥ ११५

मध्याह्ने पठनाद्देवि ! द्रव्यवान् जायते नर ।
सायकाले तथा शम्भु प्रीतिवान्नात्र सशय ॥ ११६

कन्यार्थी लभते कन्या सुतार्थी सुतमाप्नुयात् ।
राज्यार्थी राज्यमाप्नोति सदा शत्रुनिषूदन ॥ ११७

चतुर्द्दश्या विशेषेण पठेद् यस्तु शिवाग्रत ।
स लभेच्छिवसायुज्य सत्य सत्य हि पार्वति ! ॥ ११८

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया प्रथमेऽशे ब्रह्मगीताकथन नाम चतुर्थोध्याय ॥

---

# पञ्चमोऽध्यायः

## सनत्कुमार उवाच

प्रजापतिवच श्रुत्वा पर सारामृतोपमम् ।
चरित देवदेवस्य पौराणमृषिसम्मतम् ॥ १

उत्फुल्लनयनाः सर्वे आनन्दाश्रुगतानना[1] ।
ववन्दिरे महात्मानमीशान वृषभध्वजम् ॥ २

ऊचु प्राञ्जलय सर्वे वेदगुह्य-पदाक्षरम्[2] ।
नाकौकसा गणा सर्वे श्रोतुकामा व्यवस्थिताः ॥ ३

तान् समीक्ष्याथ वै दुर्गा इत्युवाच पितामहम् ।
भूय कथय मा तात! न हि तृप्यामि शृण्वती ॥ ४

ततोऽपर्णामुवाचेद सर्वभूतहिते रतम् ।
परमेष्ठी हसन् वाक्य शमयित्वा त्रिलोचनम् ॥ ५

## ब्रह्मोवाच

शृणुष्वावहिता देवि! अघौघोपशम परम् ।
शिवप्रसादजनक पुराणचरित शुभम् ॥ ६

धूम्रोल्कौ च हतावेतौ हरेणामित्रघातिना ।
सर्वदेवप्रसादेन स्वर्णपिङ्गकपर्दिना ॥ ७

ततो भूय समाश्वास्य मामाह परमेश्वर ।
चतुर्वक्त्र! महाप्राज्ञ! प्रिय किं करवाणि ते ॥ ८

इति तस्य वच. श्रुत्वा महादेवस्य पार्वति!
मया चोक्तो गुणातीत.[3] शशाङ्ककृतशेखर. ॥ ९

---

1. $B_2$ आनन्दाश्रु परिप्लुता ।
2. $A_1$ देवगुह्य पदाक्षरम् ।
3. अह चोक्तगुणातीत ।

यदि प्रसन्नो देवेश ! यद्यनुग्रहतास्ति मे ।
प्रयच्छ प्रवरा विद्या सर्वमोहप्रशान्तिदाम् ॥ १०

तव स्वरूप जानिष्ये कालत्रयमुमापते ।
परिज्ञान यथा सम्यगेवमेव मयोदितम् । ११

यत्काल च निवृत्ति च भूताना वृत्तिमेव च ।
प्रसीद सुमुखो नाथ विद्यामेता प्रयच्छ मे[1] ॥ १२

इति मद्वचन श्रुत्वा प्रत्युवाच महेश्वरः ।
ददामि निखिलान्नेतानन्याश्चापि मनोरथान् ॥ १३

प्राप्तो वेद षडङ्गाश्च विवेकविदिन जगत् ।
वेदान्त निखिल ज्ञातमृग्यजु सामसहितम् ॥ १४

अथर्वणगतो वेद शब्दराशेरनेकधा ।
भविष्यति तव ब्रह्मन्नमोघत्व तथास्तु ते ॥ १५

इति दत्वा महाज्ञान शस्त कल्याणमीश्वर ।
मह्य मातर्महेशानि तत्रैवान्तरधीयत ॥ १६

श करोतीति भगवास्तस्माच्छङ्करता गत ।
सर्वज्ञतामह प्राप्त परितुष्टे च शङ्करे ॥१७

विष्णुः शक्तित्वमालभते[2] यस्मिस्तुष्टो महेश्वर[3] ।
दैव्यान्तकरण साक्षाद् यस्मिन् व्याप्त जगत्त्रयम् ॥ १८

तन्मायया त्वय लोक[4] को न मुह्यति पण्डित ।
ब्रह्मेन्द्रचन्द्रा ईशान प्रभविष्णुर्जनार्दन ॥१९

बलेन बलिनो यज्ञ उपायज्ञस्तथा च य ।
दुष्टदैत्यनिहन्तासौ देवानामार्त्तिनाशन ॥२०

देहिना वसनाद्देहे वासुदेवेति विश्रुत ।
भवपत्नी पुरा जाता स एव भगवान् हरि ॥२१

नानारूपगतिर्भूत्वा स्वेच्छया चरते जगत् ।
त्व देवि! विष्णु सूर्योऽसि तव मूर्त्तिस्तथाऽच्युत ॥२२

---

1 $A_1$, $B_1$, C—मा ।

2 $A_1$, $B_2$, C—शक्तित्वमालेभे ।

3 यस्य तुष्टो महेश्वर ।

4. $A_1$, C—तस्य मायामिमा लोक ।

न भेदश्चानयोरस्ति प्रवदन्ति विचक्षणा ।
तेन विष्णु शिवश्चैव एकदेहो द्विधाकृत ॥२३

अर्द्धनारीश्वरो देवो या नारी स जनार्दन ।
न विदुर्देवि[1] भेद वो यो विष्णु स महेश्वर ॥२४

भेद य कुरुते मूढ स पापी निरपत्रप ।
ईशान सर्वदेवाना प्रभु प्रभवता वर॰ ।
सत्य विष्णु विनापर्णे[1] क्षणैक न च वर्त्तते ॥२५

न शङ्करादस्त्यपरो हि देवो न शङ्करादस्त्यपरो गुरुर्न॰ ।
न शङ्करादस्त्यपर पवित्र[1] नमोऽस्तु तस्मै वृषभध्वजाय ॥२६

आद्य वरेण्य वरद विभु[2] च चराचराधारशशाङ्कमौलि ।
ज्ञेयस्त्वमाद्य प्रकृते परो यो नमाम्यचिन्त्य शिवशाश्वत च ॥२७

अनादिमाद्य पुरुष पुराण मुमुक्षुभि सेवितपादपद्मम् ।
ससारचक्रे परिवर्त्तनस्य जनस्य बन्धच्छिदमीशमीडे ॥२८

शास्ता च गोप्ता स्वयमेव कर्त्ता धर्त्ता च हर्त्ता हविरध्वरेषु ।
योक्ता च मोक्ता मुनिभिर्मनासि देवादिदेव परमोऽपि वन्द्य ॥२९

भूय एव महेशानि सृष्ट्या उत्पादने रत ।
नियोगाद्देवदेवस्य रुद्रस्यामिततेजस ॥३०

अस्तुवन्त शिव शान्त भक्तियुक्तेन चेतसा ।
रुद्रेण रुद्र तमजमहमेकादशेन च ॥३१

प्रत्यक्षोऽभूत्ततो रुद्र सान्निध्य दर्शित. स्वयम् ।
किमिच्छसीति मा प्राह सुप्रीतेनान्तरात्मना ॥३२

ब्रूहि दास्यामि ते काम मनोरथफलप्रदम् ।
सत्य सत्य पुन सत्य मद्वाक्य शृणु पद्मज[1] ॥३३

एतच्छ्रुत्वाहमक्तस्त सृष्टिहेतोर्निरामयम् ।
इच्छामि तव देवेश विभक्ताङ्ग विशेषत॰ ॥३४

मखकर्मादि यत्रोक्त त्रयीधर्मा प्रतिष्ठिता ।
प्रयच्छात्मस्वरूपेण त्रयी चाश्रयिणी विभो ॥३५

---

1 $B_2$. च तृत्व ।

2. $B_1$ प्रभु ।

भूताना च हितार्थाय मम शम्भो विशेषत ।
प्रसीद सुमुखो भूत्वाऽनुग्रह कर्त्तुमर्हसि ।।३६

अथो पुरस्ताच्छ्रीशम्भुरित्येव ब्रुवतो मम ।
स्वकेन विधिदैवेन विभक्तैकादशोऽभवत् ।।३७

तेनैव वेदमन्त्रेण मया रुद्रेण सम्भृता ।
प्रशान्ततेजस सौम्या रुद्रास्त्रिभुवनेश्वरा ।।३८

एकादश सुरश्रेष्ठा पूर्वजाश्च सनातना ।
अजैकपादहिर्बुध्न्य कपाली रुद्र एव च ।।३९

हरश्च बहुरूपश्च त्र्यम्बकश्चापराजित ।
वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ।।४०

एकादशैते कथिता रुद्रास्त्रिभुवनेश्वरा ।
सर्वे सृष्टिप्रकर्तार कर्मशेषप्रवर्त्तका ।।४१

सर्वत सर्वतो नैतत्तेन सर्वं चराचरम् ।
व्याप्त जगदिद कृत्स्न रुद्रेणामिततेजसा ।।४२

शम्भुः प्रभवता श्रेष्ठो वरिष्ठ सर्वमन्त्रवित् ।
ईश्वर सर्वदेवाना प्रभुरस्माकमेव च ।।४३

स्मरणादेव रुद्रस्य पापसघातपञ्जरम् ।
शतधा भेदमायाति गिरिर्वज्रहतो यथा ।।४४

कूष्माण्डाश्च भया रोगा रेवती बुद्धरेवती ।
अवग्रहा विषा सर्पा पिशाचा राक्षसास्तथा ।।४५

मारग्रहाश्चावधूता मातरश्चापिनाकिनी ।
नोपसर्पन्ति पुसस्ते रुद्रस्मरणतत्परान् ।।४६

नामोच्चारणमात्रेण रुद्रेति पुरुषस्य तु ।
नश्यन्ति सकला दुष्टा सत्य सत्य वदाम्यहम् ।।४७

## सनत्कुमार उवाच

रुद्रसृष्टिमिमा श्रुत्वा दिव्या देवी मुदान्विता ।
भूय पप्रच्छ[1] भूताना सर्वेषा हितमुत्तमम् ।।४८

---

1. A₁, C.—पृच्छति ।

मह्यादिमज्जिता[1] पूर्वं सृष्टिं सप्तसुतेजसाम् ।
ब्रह्मक्षत्रविट्शूद्राणां देवाद्या च दिवौकसाम् ॥४९

कथं त्वं जनयस्येतां किञ्चिन्मात्रं ब्रवीमि मे ।
न विस्तरेण भो ब्रह्मन् ! संक्षेपाद् वक्तुमर्हसि ॥५०

## ब्रह्मोवाच

सम्यक् पृष्टं महेशानि दिव्यं कौतूहलं मम[2] ।
शृणुष्वावहिता देवि ! देवानां जन्मसम्भवम् ॥५१

पाणि-दक्षिण-संसर्गाद्दक्षोऽङ्गुष्ठादजीजनत् ।
जातमात्रोऽग्रतो भूत्वोवाच किं करवाणि ते[3] ॥५२

अहं चोक्तः सृजस्वेति प्रजाधर्मेण चानघ !
वाढमित्येव स प्रोक्त्वाऽसृजद्धर्मेण च प्रजा ॥५३

दक्षो दश सहस्राणि मानसानकरोत्सुतान् ।
महाबलान्महावीर्यान् सर्वायुधविशारदान् ॥५४

अतीव बलसम्पन्नान् सर्वलोकभयङ्करान् ।
ते द्विषन्ति सदा रुद्रं न यजन्ति स्तुवन्ति न ॥५५

दस्युमूर्त्तिधरा भीमा स्वधास्वाहाविवर्जिता ।
अब्रह्मण्या महामूढा प्रसूयन्ते द्विषोडश(?) ॥५६

तदा स भगवान् रुद्रो दक्षपुत्रान् शशाप ह ।
भस्मीभूतास्ततः सद्यो दक्षो विस्मयमागतः ॥५७

ध्यानेन विदितं सर्वं पुत्राणां निधनं तथा ।
अन्योन्यो वासृजत्पुत्रान् सहस्रं दश सप्त च ॥५८

षष्ठे रात्रे स रुद्रश्च रुद्रग्रहनियोजितान् ।
क्रमात्तास्तान् ममाराशु सप्ताहर्निशि शङ्कर ॥५९

न लक्षितस्तया तेन दक्षेण तनयक्षय ।
पश्चात्तु विदितो दोषो यथा ते निधनं गताः ॥६०

---

1 $B_2$ महादिमज्जिता ।

2 $B_2$ हि मे ।

3, $A_1$, $B_1$ C—मा ।

अधर्मप्रवला मूर्खा रुद्रस्य त्वपराधिन[1] ।
कामक्रोधमदासक्ता धर्मशान्तिविवर्जिता ॥६१

विदित्वा गतशोकोऽभूत्स तदा मामुपागमत् ।
कल्पनाभिहित चैव उक्तोऽह गिरिनन्दिनि ॥६२

दक्ष ! दक्षोऽसि तत्त्वज्ञ ! प्रजोत्पादनतत्पर ।
आसुरी सा प्रजा जाता हृता कालेन धर्मिणा ॥६३

विदित्वा प्रज्ञया सार्द्ध पुत्र जनय सुव्रत ! ।
जातमोहोऽसि तत्त्वज्ञ ! श्रुतिरेषा पुरातनी ॥६४

देवासुरमनुष्याश्च भूतग्रामाश्चतुर्विधान् ।
भवता दुहितास्तात जनयिष्यन्ति चाखिलम् ॥३५

बाढमित्येव दक्षश्च स स्वदेहादजीजनत्[2] ।
सद्योजातास्ततो दिव्या कन्यास्ता गतकल्मषा ॥६६

अतीव लक्षणोपेता रूपतेजोगुणान्विता ।
इन्दीवरदलश्यामा मीनलोलेक्षणा शुभा ॥६७

वर्णश्रेष्ठान् शृणुष्वेतानस्मद्देहसमुद्भवान् ।
ब्राह्मणास्तु मुखाज्जाता बाह्वो राजन्य एव च ॥६८

वैश्या ऊरुरुहा ज्ञेया पद्भ्या शूद्रस्त्वजायत ।
मरीचिप्रमुखा सप्त ततो जाता पृथक् पृथक् ॥६९

जाता सुबहुशो देव्यो मानसप्रभवा प्रजा ।
सव्ये नारी स्वय भूत्वा दक्षिणे पुरुष स्त्वयम् ॥७०

स्वायम्भुवेन योगेन शिवशक्तिप्रसादत ।
एताश्चान्याश्च बहुश प्रजाः सृष्ट्यर्थमीश्वरि ! ॥७१

उत्पादिता मया दिव्या शिवशक्तिपरायणा ।
दक्षदुहितरो याश्च मया पूर्व प्रकीर्त्तिता ॥७२

ददौ स दश धर्माय कश्यपाय त्रयोदश ।
सप्तविंशति सोमाय चतस्रोऽरिष्टनेमिने ॥७३

द्वे चैव वहुपुत्राय(?) तथैवाङ्गिरसे द्वयम् ।
औशनेय वसिष्ठ च दत्ता दक्षेण धीमता ॥७४

---

1 $B_3$ रुद्रस्यापराधिन , $A_1$—रुद्र वह्वपराधिन ।

2 $B_2$ स्वस्य देहादजीजनत् ।

दाक्षायण्या सकाशे वै कश्यपाद्धि जगत्स्रुतम्[1] ।
देवासुरमनुष्याश्च तिर्यगुद्ध्र्वं च मध्यमम् ॥७५
गन्धर्वोरगयक्षाश्च विद्याधरमरुद्गणान् ।
रक्षान् प्रवरविद्वास साप्सरोगणपन्नगान् ॥७६
रक्षो-भूत-पिशाचाश्च पशुपक्षिसरीसृपान् ।
वृक्षगुल्मलतावल्लीगुह्यकान् हिसकान् समान् ॥७७
तथा पितृन्मनुष्याश्च वायुभूतान्तरिक्षगान् ।
भूतग्रामानशेषास्तान् श्वापदानप्रजान् बहून् ॥७८
जरायुजाण्डजान् सत्त्वान् स्वेदजोद्भिजजास्तथा ।
दिव्यान्तरीक्षभौमादिपातालतलगोचरान् ।
पूर्णं लोकत्रय कृत्स्न कश्यपाद् विद्धि सुन्दरि ॥७९

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया प्रथमेऽशे आदिसर्गो नाम पञ्चमोऽध्याय

1. कश्यपोऽजनयत् सुतान् ।

# षष्ठोऽध्यायः

## ब्रह्मोवाच

मया तत्र महेशानि कल्पित च चतुर्युगम् ।
प्रजा आदियुगे नित्य यजन्ति[1] याजयन्ति च ॥१

स्वकर्मनिरता वर्णा सम्यग् वर्षति वासव ।
सस्यपूर्णा मही जाता रसवन्त फलद्रुमा ॥२

नाकाले म्रियते जन्तुर्न दुर्भिक्ष क्षुधार्दिता ।
न मृषा न च मात्सर्यं हिसाद्रोहोद्भव न च ॥३

न कार्पण्यो शठाचारो वर्णसङ्कर एव च ।
पराश्च नातिक्रामन्ति परस्वे न च तन्मना ॥४

न पाषाण्डरतौ वृत्ता न च देवोपजीविन ।
कन्याशुल्क न गृह्णन्ति न यजन्ति जघन्यजान् ॥५

न पापवृत्तिमासाद्य उपजीवन्ति जन्तव.[2] ।
नारूढा पतिता केचिन्नच वैडालिकव्रता[3] ॥६

नात्यन्तविषयासक्ता दुरुक्ता प्रियवादिन ।
न राज्ञश्चोपभुञ्जन्ति प्राणै कण्ठगतैरपि ॥७

गुरूश्च नावमन्यन्ते नोपहास्यन्ति कस्यचित् ।
धर्मसेतु न लङ्घन्ति नापि चान्यायवर्त्तिन ॥८

न दम्भाश्रितकर्माणो न काम्यन्ति तप फलम् ।
शुद्धा-शुद्धसमाचारा जितरागा जितेन्द्रिया ॥९

जितात्मानो मनोलब्धा रजस्तामसवर्जिता ।
सत्त्वनिष्ठा पराः शान्ता सत्यार्जवगुणान्विता ॥१०

---

1 $A_1$, $B_2$—यजन्ति च ।

2 $B_2$ न हि स्ववृत्तिमासाद्य नोपजीवन्ति जन्तव ।

3 $B_2$ वैतालिका मता ।

कृपया परया युक्ता सर्वभूतहिते रता ।
अगर्हिता विरक्तेष्टा आम्नायविधिमाश्रिता ॥११

धर्मेषु निरता लोका शौचाचारयतात्मका ।
शौचाशौचविवेकज्ञा अधरोत्तरतारका ॥१२

एव कृतयुगे देवि ! प्रजाधर्मपरायणा ।
आधिव्याधिसमायुक्ता न दु खेष्वभियोजिता ॥१३

चतुष्पादेन धर्मस्तु सर्वमावृत्य तिष्ठति ।
न चाधर्मा प्ररोहन्ति कृते धर्ममये युगे ॥१४

त्रेताया पादहीनश्च द्वापरे च पदद्वय ।
प्राप्ते कलियुगे घोरे धर्मश्चरति चैकपात् ॥१५

तदाऽभिभवते धर्ममधर्मप्रभवो युग ।
तत्राधर्ममयी वृद्धिर्दुर्लभा सत्यवादिन ॥१६

विपरीतमयोभावास्तदाचाल्पायुषो जना ।
न शृण्वन्ति पितु पुत्रा न भार्या न च बान्धवा ॥१७
हले युञ्जन्ति सुरभि प्रेषयन्ति द्विजोत्तमान् ।
चाण्डालाश्चैव कपिला दुह्यन्ति च अदन्ति च ॥१८
अलिङ्गिनो लिङ्गवेशा मायादम्भोपजीविन ।
अह योगी त्वह ज्ञानी प्रत्येकैकसनातना ॥१९
न चापि ज्ञानिन सन्ति केवल तद्विडम्बका ।
लोभमोहपरीताश्च पतन्ति नरके जना ॥२०

न कुर्वन्ति क्रियाकाण्ड षट्कर्मपरिवर्जिता ।
यद्यप्यधीतवेदाश्च न च बीर्याद्द्विजोत्तमा ॥२१
श्रुतिशास्त्रपराश्चान्ये अग्निहोत्रपरायणा ।
क्रुद्धा श्लक्ष्ण न शक्यन्ते कालेनात्र हता द्विजा ॥२२

ह्रास्यमाणस्ततो धर्मो ह्यधर्म पर्यवस्थित ।
अधर्मप्रभवाद्राजा क्षिप्रमेव विनश्यति ॥२३
चोरवृत्तिधरो राजा राजवृत्ताश्च दस्यव ।
वैश्यवृत्तिं च कुर्वन्ति शूद्राः शुश्रूषवर्जिता ॥२४
केचिच्छूद्रा भविष्यन्ति द्विजधर्मपरायणा ।
केचित् क्षत्रियवृत्ताश्च स्वधर्मविमुखा शिवे ! ॥२५

वैष्णवी वृत्तिमासाद्य स्ववर्णाचारनिर्गता ।
ब्रह्मनिन्दा करिष्यन्ति पतिष्यन्ति हि रौरवे ॥२६

वेदाचार परित्यज्य तदा ब्राह्मणजातय ।
शूद्रशिष्या भविष्यन्ति दम्भाचारपरायणा ॥२७

कृष्ण कृष्णेति वदने वदन्ति प्रत्यह शिवे[।] ।
हृदये कुटिल तेषा शूद्राणामेव नित्यश ॥२८

केचित्तत्रापि सुजनास्तद्विष्णोर्नाम मङ्गलम् ।
सकीर्त्य शकरस्यापि तरिष्यन्ति भवार्णवम् ॥२९

निन्दन्ति शकर तत्र वैष्णवी वृत्तिमाश्रिता ।
तेऽपि स्वस्य विनाशाय नापरेषा शिवस्य च ॥३०

कलौ तु वैष्णवीभत्वा शिवनिन्दा-परायणा ।
भविष्यन्ति नरा सत्य नरकाय न सशय ॥३१

ब्राह्मण च समाहूय दत्वा चैव कुशोदकम् ।
दक्षिणा च न दास्यन्ति तत्राधर्ममये युगे ॥३२

लोका स्त्रीवशगास्तत्र लौल्याश्चैव तपस्विन ।
केचित्तपस्विन क्रुद्धा क्रोधाच्चैव तप क्षय ॥३३

पाषण्डजनकीर्णा च निष्फला स्याद् वसुन्धरा ।
एव सक्षेपतश्चोक्त युगधर्ममिद वच ॥३४

वर्णधर्माश्च वेदाश्च ये केचिज्जगति स्थिता ।
युगे ह्रासे च ह्रस्यन्ति धर्मे पूर्यन्ति पूर्यंति ॥३५

परिमाण च सर्वेषाँ यथावच्च निबोधत ।
श्वास-त्रयेण निमिषमुन्मेष निमिषत्रये ॥३६

त्र्युन्मेषाद्वै मुहूर्त्त स्यात्त्रिमुहूर्त्तात्क्षण स्मृत ।
क्षणत्रयात् कला ज्ञेया काष्ठास्त्रिशत्कला स्मृता ॥३७

काष्ठात्रयेण स्युर्नाड्यो नाडिके द्वे घटी स्मृता ।
चतस्रो घटिका यामश्चतुर्यामैरह स्मृत ॥३८

अहोरात्राऽष्टयामेन मानोऽय मानव स्मृतः ।
पञ्चदशभिरहोरात्रै पक्षस्तु समुदाहृत ॥३९

पक्षाभ्या मासमित्याहुर्मासाभ्या च ऋतुस्तथा ।
षट्ऋतुभिश्च एकाब्द प्रवदन्ति मनीषिण. ॥४०

सूर्याचन्द्रमसौ देवौ संवत्सरनिरूपिणौ ।
पर्जन्या पृथिवी वृष्टि क्षिपन्त्यद्भिर्यथाक्रमम् ।।४१

सस्य सञ्जायते चोर्व्या तेन जीवन्ति वै प्रजा ।
अधरोत्तर च वर्त्तन्तेऽप्यग्निहोत्रपरायणा ।।४२

तपोभि क्रतुभि शुद्धैस्तैरेषा सम्प्रवर्त्तते ।
सक्रान्ति प्रतिमासी च यदा सक्रमते रवि ।।४३

अयने विषुवे द्वे च दक्षिणोत्तरसज्ञिते ।
पितृणा तदहोरात्र मानेनानेन कथ्यते ।।४४

त्रिशद्भिर्दिवसैर्मासो मासैर्द्वादशभि समा ।
नराणा वत्सरैकेन देवानामह उच्यते ।।४५

द्विगुण तदहोरात्रमेव सख्याविदो विदु ।
मान वै परिसख्यातमृषिभिश्च युगे युगे ।।४६

षोडश चैव लक्षाणि परिमाण कृतस्य च ।
त्रेताया द्वादश लक्ष द्वापरस्याष्टसज्ञितम् ।।४७

चत्वारि च कले प्रोक्त पुराणपुरुषै. पुरा ।
परिवर्त्त युगाना च चतुर्णा वर्त्तन स्मृतम् ।।४८

[1]परिवर्त्तैश्चतुर्भिश्च सकल्प परिकीर्त्तित ।
सकल्पैर्दशभि पुण्यैर्महाकल्प उदाहृतः ।।४९

महाकल्पदशातीते कालदाय स कथ्यते ।
कालदायद्वयेनापि साग्निणा प्रलय स्मृत ।।५०

कूटस्थमधिगच्छन्ति तदा भूतानि पार्वति!
दिव्यमानमिद पुण्य श्रुत्वा पापभयापहम् ।। ५१

पर ब्रह्मणि लीयन्ते ह्यहोरात्रविदा जना ।
मानेनानेन भूतानि प्राप्नुवन्ति च मा शिवे! ।।५२

सक्षेपादिदमाख्यात रुद्रवाक्यप्रसादत ।
मम रुद्र प्रसादाद्हि स्मतिरस्ति शुभेक्षणे! ।।५३

---

1. $A_5$, $B_1$ C—परिवर्ण, $B_2$ परिवर्त्ती ।
2. $A_1$, $B_1$, C—परिवर्णे, $B_2$ परिवर्त्तौ ।

अनुभूतोऽस्मि दृष्टोऽस्मि विश्व रुद्रप्रसादत ।
शिवश्चादौ शिवो मध्ये शिवश्चान्ते प्रतिष्ठित ॥५४

विश्व शिवमय पूर्ण स्फीत सदसदात्मकम् ।
भूमावप्स्वग्निमध्ये च पातालतलगोचरे ॥५५
लोकालोकविलोकेषु दिग्विदिक्ष्वन्तरीक्षके ।
पर्वतेषु च सर्वेषु कानने चोपकानने ।
तन्नास्ति यत्र नो रुद्रस्तथा वाग्विषयेषु च ॥५६

स्वय च स्रष्टारमतो महेश निरञ्जन विश्वविधानभूतम् ।
निरामय शान्तशिवात्मक च परावर पारवर पुरस्तात् ॥५७
भमिस्वरूप ह्यमराप्रमेय ज्ञानार्णव योगविधानभूतम् ।
भूताधिवास परमोपपाद्य शिव सदाह शरण प्रपद्ये ॥५८
न चास्ति प्रज्ञास्तुतिवादहेतुर्न चापि योग भवभावमुक्ति ।
भक्त्यैकया केवल साध्यमान यस्मिन्नयुक्त खलु भावशुद्ध्या ॥५९

भूमे फल तथा चेय कर्मसिद्धि प्रवर्त्तते ।
नान्यत्र लोके कर्त्तास्य कर्मणा फलमाप्नुयात् ॥६०

इह यत् क्रियते किञ्चित् शुभ वाशुभमेव वा ।
भुज्यते परलोके तदेष धर्म सनातन ॥६१

वहुवित्तव्ययान् धर्मान् कायक्लेशमथापि वा ।
कर्मभूमौ प्रकुर्वन्ति स्वर्गभोग वुभुक्षव ॥६२
भोगपूर्ण ततो दृष्ट्वा स्वर्गीय स्वर्गवासिन ।
क्षिप्र पतन्ति वै पुण्य कर्त्तु भूमौ नगेन्द्रजे। ॥६३
य स्मृत्वा तु निज कर्म पश्चात्तापेन दह्यते ।
तस्यैका निष्कृति वक्ष्ये शिवसस्मरण परम् ॥६४

स्वर्गस्थोऽपि हि धर्मेण भूषित सन् भुनक्ति च ।
अधर्मान्निरक गच्छेन्निश्चित शृणु चण्डिके। ॥६५

कर्मणा गुणदोषौ च जन्तूना भवत सदा ।
तस्मात्सर्वप्रयत्नेन कर्मनिष्ठात्मनो हितम् ॥६६

नाशयेदहित कर्म पुनरात्मानमात्मन ।
रिपुरात्मा वन्धुरात्मा भवति स्वेन कर्मणा ॥६७

भूर्लोकाऽवस्थितो धर्मो न धर्मं स्वर्गगोचरः।
भूमिलोकसम लोक तस्मान्नान्यत्र विद्यते ॥६८

यस्या लिङ्गसहस्राणि अयुतान्यर्बुदानि च।
कोटिसख्य क्वचिद्देशे शम्भु सम्भवति स्वयम् ॥६९

देशरूपाण्यनेकानि तीर्थान्यायतनानि च।
भूतग्रामानशेषाश्च धारयत्येव स शिवे! ॥७०

प्रार्थनीया च या नित्य ब्रह्मविष्णुशिवादिभि।
मही ता देवि! कल्याणि! कल्याण कर्त्तुमर्हसि ॥७१

धन्या पुण्या समर्था च सशस्या सा वसुन्धरा।
काश्यपी सर्वजननी शेषदेवशिर स्थिता ॥७२

माहेश्वरी मही पौष्णी वैष्णवी पापनाशिनी।
ब्रह्माणी चैव सा मेध्या लोकधात्री शिवात्मिका ॥७३

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया
प्रथमेऽशे युगधर्मो नाम षष्ठोऽध्याय ॥

# सप्तमोऽध्यायः

## सनत्कुमार उवाच

ततच्छ्रुत्वा चतुर्वक्त्रात्सर्वदेवनमस्कृता ।
उमा प्रोवाच समन्व्य धन्या देवी वसुन्धरा ॥१

सामर्थ्यं तपसस्तस्याः शाश्वत देहधारणा ।
पूज्या चैका नमस्कार्यां सा नित्य प्रपितामह ॥२

पृथिव्या यत् प्रमाण च वर्षद्वीपाननुक्रमात् ।
सागरान् भूधरान् तथ्य वनान्युपवनानि च ॥३

का नद्य के चे देशाश्च अन्तराणि विभागश ।
वर्षद्वीपप्रमाणानि पृथिव्या यानि तानि च ॥४

देवानामधिकान्येव एकैकानि पृथक् पृथक् ।
प्रभवन्ति सुरश्रेष्ठ पर कौतूहल मम ॥५

पृथिव्या यानि तीर्थानि श्रेष्ठान्यायतनानि च ।
सारभूत समाचक्ष्व दिव्यज्ञानात्पितामह ॥६

अन्योन्याश्चर्यभूतानि पृथिव्या यानि कानि च ।
शृण्वन्तु मुनयो ब्रूहि प्रसीद सुमुखाऽब्जज ! ॥७

## सनत्कुमार उवाच

देव्या एव वच श्रुत्वा तुष्टो ब्रह्मा महेश्वरीम् ।
पाणौ बद्धपुट प्राह निबोध जननि ! मम ॥८

## ब्रह्मोवाच

त विभु सर्वभूताना स्थावरस्य चरस्य च ।
त्वत् प्रसूता इमे लोका भौमदिव्यान्तरिक्षगा ॥९

आब्रह्मस्तम्बपर्यन्त व्याप्य लोक सभूर्भुवम् ।
भवत्या वितत चास्य मध्ये विश्वस्थित तदा ॥१०

आब्रह्मनिखिला सर्वा सत्यकर्मादिका क्रिया ।
यजुषस्ते समाचारा श्रुत्याद्यास्तव सम्भवा ॥११
ब्रह्मविद्याध्यात्मविद्या शान्तविद्या मता तव ।
ज्ञानविज्ञानमास्तिक्यमात्मप्रत्ययकारका ॥१२
अणिमादिगुणैश्वर्या सम्भवन्ति तवाज्ञया ।
सम्भवन्ति प्रजाश्चादौ प्रलीयन्ते युगक्षये ॥१३
जगतो जननी चासि पुनासि च जुगुप्ससे ।
वर्त्ते त्वयि प्रसन्नाया त्वत्तो नान्या गतिर्मम ॥१२
भवत्या महिमा एष[1] यद्यजेत पति तव ।
सावधानेन विश्वेशि [2] दर्शयैतत् विशेषत ॥१५
वक्त्री च देवतामन्या कर्त्री चापि जगद्धितम् ।
न शृणोमि न पश्यामि चाद्यापि भवती विना ॥१६
भूलोकस्य प्रमाण यदद्यापि परिपठ्यते ।
ऋषीणा सम्मत पक्ष सक्षेपात् प्रब्रवीमि ते ॥१७
सप्तपातालकादूर्द्धं सप्तद्वीपवती मही ।
सप्तार्णवैर्युता सा च महीध्रै समलङ्कृता ॥१८
अष्टाभिर्दिग्गजेन्द्रैश्च दिक्षु सर्वास्ववस्थिता ।
तेषा नामानि वक्ष्येऽत्र शृणु गौरि शिवप्रिये ॥१९
शङ्खः कुमुदपद्मौ च अञ्जनो वामनोऽनिल ।
ऐरावत पुष्पदन्तस्त्वष्टैते दिग्गजा स्मृता ॥२०
मध्ये तस्या पृथिव्याश्च सर्वदेवनिवासकः ।
जम्बूद्वीप इति ख्यातो लक्षयोजनमण्डल ॥२१
लवणेन समुद्रेण वेष्टित सर्वतो दिश ।
त चापि नववर्षं च चक्रे राजा पृथु पुरा ॥२२
अष्टाभि पर्वतैश्चैव तान् प्रवक्ष्ये समासत ।
हिमवान् हेमकूटश्च निषधश्चेति दक्षिणे ॥२३
नोलश्वेतस्तथा शृङ्गी मेरोरुत्तरतस्त्रय ।
मध्ये मेरु स्थित षण्णा जम्बुद्वीपस्य मध्यतः ॥२४
माल्यवान् पर्वतो ज्ञेयः पश्चिमे गन्धमादन ।[3]
जम्बूद्वीपस्त्वसौ प्रोक्तो लक्षयोजनमण्डल ॥२५

---

1 B₂ भवत्या मही सा एषा ।

2. B₂ देवेशि ।  3 गन्धमादनं ।

सप्तद्वीप-प्रधानोऽय ज्ञापक सर्वदेहिनाम् ।
प्लक्षद्वीपस्तत पुण्यो द्विगुण परिकीर्त्तित ॥२६

अब्धिश्चेक्षुरसस्तस्माद्द्विगुण परिवेष्टित ।
क्रमाद् द्विगुणिता सर्वे शालमली तदनन्तरम् ॥२७

नानासत्त्वनिवासश्च सुराब्धिपरिमण्डित ।
तत कुशो महाद्वीपो घृताब्धिपरिवेष्टित ॥२८

क्रौञ्चद्वीपस्तत ख्यातो दध्यब्धिपरिखीकृत ।
दध्यर्णवात्परः शाक परो द्वीपोऽतिशोभन ॥ २६

क्षीरपूर्णसमुद्रेण वेष्टित सर्वतो दिश ।
शाकद्वीपात्तत ख्यात श्वेतद्वीपो हरिप्रिय ॥ ३०

स्वादुतोयोदधिस्तस्मात्सर्वतः परिवारित ।
जम्बुद्वीपे च ये लोका नानादेव उपासका ॥ ३१

यथेष्टव्रतचर्यास्ते भावाभावपरिग्रहा ।
प्लक्षद्वापे यम देव यजन्ति विधिनोदिता ॥ ३२

शालमल्या च तथा शक्र यजन्ति सतत जना ।
कुशे ब्रह्मात्मिका लोका वेदाध्ययनतत्परा ॥ ३३

यजन्ति विविधैर्यज्ञैर्वर्णक्रममलङ्घका ।
क्रौञ्चद्वीपे च ये लोकाः सर्वे माहेश्वरा स्मृता ॥ ३४

यजन्ति च विरूपाक्ष शिवशक्तिपरायणा ।
शाके रवौ च लोकाना भक्तिरव्यभिचारिणी ॥ ३५

यजन्ति रविमाश्रित्य नान्यभावा कथञ्चन ।
श्वेतद्वीपे च ये लोका नारायणपरायणा ॥ ३६

त यजन्ति सदा भक्त्या सर्व एव चतुर्भुजा ।
एते द्वीपा मया ख्याता विश्वाधारा निरामया. ।
सर्वे स्वधर्मसयुक्ता गुणैश्चैवोत्तरोत्तरा ॥ ३७

## श्रीपार्वत्युवाच

सप्तद्वीपप्रमाण च सम्यक् ब्रह्मन्! श्रुत मया ।
जम्बुद्वीपे च ये वर्षास्तान् वै वद ममाग्रत ॥ ३८

## ब्रह्मोवाच

शृणु गौरि ! प्रवक्ष्यामि नववर्षान् यथार्थत ।
येषा श्रवणमात्रेण पुण्यवान् जायते नर ॥ ३९

आद्यस्तु भारतो नाम तत किंपुरुष स्मृत ।
हरिवर्षस्ततश्चेमे मेरोर्दक्षिणतस्त्रय ॥ ४०

इलावर्षस्ततो मध्ये दिव्य पश्चाद् व्यवस्थित. ।
प्राच्यस्तु पूर्वतो भागे त्रय एते प्रकीर्त्तिता ॥ ४१

नीलवर्षस्तथा प्रावृट् चन्द्रवर्षस्तथोत्तरे ।
स्मर्त्तव्या सतत लोके नवैते पुण्यवर्द्धना ॥ ४२

एषा मध्ये वरो ह्येको वर्षश्रेष्ठो हि भारत ।
एतस्माद् भारत वर्ष निबोध जननि ![1] त्विमम्[2] ॥ ४३

नद शोणश्च विख्यातौ द्रोणश्चापर एव च ।
पृथुलश्चापर श्रेष्ठ कपाल पिङ्गलोदक ॥ ४४

एते पञ्चनदास्तत्र स्मृतिमात्राघहारिण ।
तत्र धर्मान् शृणुष्वाथ वेदोक्तान् शिववल्लभे ! ॥ ४५

शतायुषो नरास्तत्र सर्वभोगसमन्विता ।
युगाश्रया प्रवर्त्तन्ते चनस्र श्रुतयस्तथा ॥ ४६

महेश्वरपरा[3] वर्णा केचिन्नारायणा स्मृता ।
केचित्सौर्यव्रतपरा इतरे च यथेच्छया ॥ ४७

यज्वानो भूरिदातारो धनधान्यसुतान्विता ।
बलवाहनसम्पन्नाः पुत्रपौत्रसमन्विता ॥ ४८

ब्रह्मक्षत्रियविट्शूद्रा एते बर्णचतुष्टया. ।
स्वकर्मनिरता शान्ता सत्ययुक्तास्तपोधनाः ४९

गाव सर्वा क्षीरवत्य शस्ययुक्ता वसुन्धरा ।
यजन्ति विविधान् यज्ञान् समाप्तवरदक्षिणान्[4] ॥ ५०

---

1 $A_1$—पुण्यवर्द्धिता ।

2 $A_1$ $B_2$—जननी त्विमम् ।

3 $B_2$—माहेश्वरपरा ।

4 $A_1$ समाप्तिवरदक्षिणान् ।

वर्षाणामेव सर्वेषा श्रेष्ठो भारत उच्यते ।
कर्मभूमिरिय सम्यक् फलभूमि सनातनी ॥ ५१

कृत्वा कर्म शुभ चात्र भुञ्जते स्वर्गति नरा ।
अनिष्ट कर्म कुर्वन्ति तथा यान्त्यधमा गतिम् ॥ ५२

किंपुरुष तथा वर्षं [1]मेधासत्यन्नसज्ञितम् ।
उच्छ्रित पर्वतप्राय वितत चारुकाननम् ॥ ५३

आम्रक चाम्रकूटाभ विद्युदुद्यतसन्निभम् ।
महाभ्रसदृश शुभ्र नानारत्नचयोपमम् ॥ ५४

अनिन्धनस्त्वथा वह्नि स्वय प्रज्वलतीच्छया ।
सर्वे चाश्वमुखास्तत्र किन्नरा मिथुनाश्रिता. ॥ ५५

हरिवर्षं सुखस्थान किञ्चिद्भाग्य[2] क्वचित् क्वचित् ।
अल्पविद्याल्पपुण्याश्च विवेकविमुखा जना ॥ ५६

श्रूयन्ते न कथास्तैश्च साधूना यज्ञशालिनाम् ।
एव वर्षगुणास्तत्र इलावर्षं निशामय ॥ ५७

मुनिसिद्धसमाकीर्णं किन्नरोरगसेवितम् ।
अप्सरोरगसकीर्णं साक्षात् स्वर्गमनुत्तमम् ॥ ५८

विद्याधरगणा नागा समेत्य विचरन्ति वै ।
नापकर्म प्रकुर्वन्ति कृतमेव हि भुञ्जते ॥ ५९

दिव्यवर्षप्रसूता ये शूद्रा कर्मबहिष्कृताः ।
लोकवृत्तिविहीनास्ते नग्नाश्च मुक्तसाधवः ॥ ६०

अशास्त्रविहिता· सर्वे सर्वज्ञानबहिष्कृता
पत्नी-सहाया नि स्निग्धा हिसका पिशुनाधमा ॥ ६१

अविश्वस्ताश्च लोलुब्धा न स्वकर्मरता सदा ।
ते वसन्ति वनान्तेषु पर्वतेषु गृहेषु च ॥ ६२

अटवी श्वापदाकीर्णा व्यालदष्ट्रा खगाकुला ।
प्रतिनिम्ना नदी तत्र श्यालग्राहझषाकुला ॥ ६३

---

1 $B_2$ सत्येन ।

2 $B_2$ किंचित् भोग ।

दुःसचार-महाभीमा पेयतोया सुपङ्किला ।
यस्या दर्शनमात्रेण महाभीति प्रजायते ॥ ६४
प्राच्यवर्षं निबोधेद दिव्यभोगसमन्विता॰ ।
विमानगतयस्तत्र विचरन्ति दिवौकसः ॥ ६५
न तत्र तरव सन्ति तृणगुल्मादिकीचका ।
दुरारोहस्त्वनाधृष्यो वर्षोऽय जनर्वाजत॰ ॥ ६६
नीलवर्षमयो वक्ष्ये नीलाञ्जनचयोपम ।
नदी जाम्ववती तत्र पौष्णी[1] च मधुरस्रबा ॥ ६७
इरावती नदी पुण्या महास्वेद[2] निवासिनी ।
नातिशुद्धप्रवाहश्च बृहच्छैलसुवर्च्चस ॥ ६८
द्युतिमन्तो जनास्तत्र स्निग्धबन्धुसुहृत्तमा ।
जङ्गलेषु च देशेषु सानुगेषु विशेषत ॥ ६९
उपहास न कुर्वन्ति न व्रत वेदवर्जिता ।
प्रावृड्वर्षस्तु यो नाम प्रावृषारम्भविभ्रम ॥ ७०
तृणोदकमती स्फीता भूमि शाद्वलशालिनी ।
निम्नगाश्च विचित्राश्च प्रयान्ति वहुशस्तदा ॥ ७१
तत्र देवमनुष्याश्च ब्रह्माद्याश्च चतुष्टया ।
सन्ति शान्ता जना शुभ्रा सदाचारपरा शिवा ॥ ७२
शिवभक्ता सदा शान्ता सत्यार्जवदयान्विता ।
गुरुपूजाक्रमासक्ता नासक्ता विषयादिषु ॥ ७३
न दरिद्रा अधनिनो न चान्धवधिरा जडा ।
विद्याहीना न तत्रासन् विषयादिग्रहान्विता ॥ ७४
सुविश्वस्ता सदाचारा हृष्ट-पुष्टा सदा जना ।
दारा अव्यभिचाराश्च पुत्रा शुश्रूषणे रता ॥ ७५
स्निग्धा बन्धुजना सख्या मृषास्तेयादिवर्जिता ।
गर्वाढ्यस्फीतधनिका वृत्ति चात्यर्थसूचका ॥ ७६
चन्द्रवर्षं निवोधेद चन्द्रमोऽत्यन्तपुष्टिद ।
स्वादुमूलफल तत्र शाकमप्यमृतोपमम् ॥ ७७

---

1. $B_1$ पार्ष्णी
2. $A_2$, $B_2$, C महाश्वेत ।

तपोनिष्ठाऽनृताचारा शौचेन्द्रियनिषेधकाः।
वाक्कायमानसैं शुद्धा सर्वे विष्णुपरा जना ॥ ७८

द्वितीय नाधिगच्छन्ति सर्वे वर्णा द्विजातय ।
वैष्णवानि च यज्ञानि यजन्ति द्विजराजका ॥ ७९

न नृशसा न नास्तिक्या नापि मत्सरिणो जना ।
दयालव सदा दान्ता सर्वभूतहिते रता ॥ ८०

अहिंस्रा परमोदाराः क्षमावन्तो वहुश्रुता ।
ज्ञान विज्ञान-सम्पन्ना समलोष्ट्राश्मकाञ्चना ॥ ८१

नष्टवृत्ति विहीनास्ते दीर्घायुर्गतकल्मषा ।
चन्द्रभागा नदी तत्र दुहितृशतशोभिता ॥ ८२

दृषद्वती च कावेरी पुष्पदन्तो महाह्लद ।
सत्यमाचारकर्मादीन् भोगाश्च विधिचोदितान् ॥८३

प्रत्येकमब्द सर्ववर्षाणा शुभलोचने ।
नवैवेते मयाख्याता भूलोकेषु च ये स्मृता ।
एतेषा श्रवणेनैव महापापक्षयो भवेत् ॥८४

इत्यैकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहितायाँ प्रथमेऽशे भुवनकोष-
निर्णये सप्तद्वीपकीर्त्तनो नाम सप्तमोऽध्याय ॥

———

# अष्टमोऽध्यायः

श्रीपार्वत्युवाच

वर्षाणा भारत श्रेष्ठ इति प्रोक्तस्त्वया मम ।
तत्र के पर्वता नद्य काश्च पुण्यवनानि च ॥ १
सरासि च मनोज्ञानि प्रसन्नसलिलानि च ।
सर्वाणि च प्रयत्नेन वद मा पद्मसम्भव ॥ २

ब्रह्मोवाच

साधु पृष्ट महाभागे ! प्राणिना हितमुत्तमम् ।
त्वत्प्रश्न च प्रवक्ष्यामि शृणुष्वेकाग्रमानसा[1] ॥ ३
तत्र श्रीभारते वर्षे देवगन्धर्वसेविते ।
हिमवान् पर्वतश्रेष्ठ सहस्रशिखरोन्नत[2] ॥ ४
तस्य पर्वतराजस्य पत्नी मेना इति स्मृता[3] ।
मेनायास्तनयो जात सागराम्भोनिवासक ॥ ५
त्व हि हैमवती देवी सुरसिद्धैर्निगद्यसे ।
सोऽचलश्रेष्ठतामाप त्वज्जन्मदिवसावधि ॥ ६
तस्यैव नातिदूरे च अवोढ पर्वतोत्तमः ।
अवोढस्योत्तरे भागे मणिमालीति विश्रुतः ॥ ७
ऋषभस्त्वपर शैल परस्तान्नीललोहित ।
तन परे महारण्ये शतयोजनविस्तरे ॥ ८
विष्कुम्भश्च स्थलोप्रायो नानासत्त्वनिवासक ।
पुलिन्दतनयस्फीत कर्णप्रावरण स्मृत ॥९

---

1 $B_2$—शृणुष्व च समाहिता ।

2 $B_2$—सहस्रकिरणोद्यत , $A_1$—सहस्रकिरणो यत ।

3, $B_2$ –इति श्रुता ।

ऋषभस्य च नीलस्य अन्तरे वितता क्षिति ।
योजनैकशतेनैकप्रमाण परिकीर्त्तिता ।। १७

श्वापदैर्गजयूथैश्च ऋक्षगण्डकनर्दकै ।
सिंहैश्च शरभैर्मत्तैर्दृप्तवर्हिणनादितै ।। ११

प्लवगै खरवृन्दैश्च कोलै कन्दरनिर्भरै ।
शोभिता सा महेशानि[1] भीतिदैर्गणनायकै ।। १२

ऋषभस्योत्तरे पार्श्वे गन्धमादनपर्वत ।
गन्धर्वनिलय श्रीमान् शतयोजनविस्तर ।। १३

तत परे महत्यासीत् पुण्यस्थलीति विश्रुता ।
सहस्रैक शत द्वे च योजनाना यथोच्छ्रया ।। १४

ब्रह्मादिसिद्धमनुजै. सेव्यमाना ह्यनेकश ।
नदी पुण्यवहा तत्र मध्ये याति तरङ्गिणी ।। १५

हसकारण्डवाकीर्णा विहङ्गगहनाकुला ।
ऋषिकन्याऽप्सरोजुष्टा कुमुदोत्पलशालिनी ।। १६

सुरदीर्घिकया तुल्या सर्वपापहरा शिवा ।
तस्यास्तूत्तरतो देशे शैलस्ताम्रमयो महान् ।। १७

स षष्ठीयोजनोच्छ्राय· शतयोजनविस्तर ।
ताम्राद्रजतनामा च द्विगुण पृथुलायत ।। १८

शतशृङ्ग इति ख्यात स्वर्गद्वार अनुत्तम. ।
अनेकऋषिसाहस्रै सिद्धगन्धर्वकिन्नरै ।। १९

मुमुक्षुभिश्च यतिभिर्यक्षरक्षमहोरगैः ।
सेव्यमानो ह्यनेकैश्च द्योतमान समन्तत ।। २०

तस्य पर्वतराजस्य पूर्वदक्षिणमाश्रिता ।
पद्मस्थलीति विज्ञेया सुराणा प्रीतिवर्द्धनी ।। २१

प्रासादै परिखाकारैर्नानापुष्पोपशोभिता ।
चन्द्रकान्त्यावभासैश्च हेमवैदूर्यविद्रुमै ।। २२

गुल्मसद्मलताकीर्णै किन्नरोद्गान-नि स्वनै ।
हृद्यमाधुर्य-सगीतैर्वेणुवीणादिनि स्वनै ।। २३

एव प्रमुदितै शुभ्रै र्दिव्यस्त्रीभिरनेकश. ।
नलिन्युत्पलकल्हारै राजहसोपशोभितै ।।२४

मनोज्ञपुलिनै रम्यै सिद्धगन्धर्वसेवितै ।
पद्मस्थली विदूरे च शैल किंपुरुष स्मृत. ॥ २५

शतयोजनविस्तीर्णस्त्वायतो द्विगुणस्तथा ।
किन्नरोरगभूताना निलयो य शिलोच्चयः ॥ २६

महासिन्धुतटे रम्ये प्रख्यात॰ प्राग् दिशि स्थित ।
तस्य शैलस्य प्राग् देशे शरद्घन इति स्मृतः ॥ २७

षष्ठो योजनविस्तारो योजनाष्टशतोच्छ्रय ।
मुनिसिद्धाश्रमाकीर्ण स्वादुमूलफलान्वितः ॥ २८

तस्माद्दक्षिणतो देशे किञ्चित् पश्चिममाश्रित ।
द्रोणो नाम गिरिश्रेष्ठो द्रोणाच्चन्द्रो महाचल ॥ २९

द्रोणचन्द्रकयोर्मध्ये वन श्लेष्मातक स्मृतम् ।
चतुरशीतिसहस्राणा मुनीना स्थानद महत् ॥ ३०

तस्य पश्चिमदेशे तु पृथुशृङ्गो महोज्ज्वल ।
दधिस्रवा नदी तत्र दधिवर्णाश्च देहिन ॥३१

ततः प्राच्यवनो नाम यस्मिन् जातो हि भार्गव ।
सुमन्तु (?) परमस्तस्य अग्रत परतो वर ॥ ३२

तत शीलवन ख्यात पूर्णनामाऽत्रविद्यया ।
महाशैलश्च विख्यातस्तत. श्रीकूट उच्यते ॥ ३३

सानुमाश्च[1] गिरिश्रेष्ठ सुमेरुस्तदनन्तरम् ।
देवेन्द्रस्य च तत्रासौ विख्याते चामरावती[2] ॥३४

पुरी विन्ध्यवती[3] नाम्ना आदित्येन्द्रनिषेविता ।
जाम्बुनदमयी भूमि सिद्धगन्धर्वसेविता ॥ ३५

मध्ये तत्र सरो दिव्यमच्छोद इति विश्रुतम् ।
हेमपङ्कजशोभाढ्य हेमपङ्कजराजितम् ॥ ३६

मन्दाकिनी ततो रम्या मध्ये याति सरिद्वरा ।
मुनिसिद्धाऽप्सरोजुष्टा [4]वसुभिश्चाष्टभिस्तथा ॥ ३७

---

1. $B_2$—भानुमाश्च ।
2. $A_1$, $B_1$, C—देवेन्द्रस्य च विख्यातो तत्रासो चामरावती ॥
3. C—विल्ववती ।
4. $B_2$ दशभि ।

मेरो पार्श्वे सुदूरेण कैलास इति बिश्रुत ।
स्फटिकामलविद्योत शातकुम्भाभ्रमण्डित. ॥३८
इन्द्रनीलामलश्याम सर्वरत्नोपशोभित ।
तत्र देवपति श्रीमान् सदैष स्वयमीश्वर ॥ ३९
सचारणगणैर्जुष्टो भवतीभि सदा बभौ ।
प्रमथगणभूयिष्ठः स्तूयमान सुरासुरै ॥ ४०
कैलासात् पश्चिमे भागे सह्यो नाम्नाचलोत्तम ।
अनेकऋषिसकीर्णो नानाविहगशोभित ॥ ४१
तयोर्मध्ये सुविस्तार योजनाना शतत्रयम् ।
विष्कुम्भपरिमाणेन वन पुष्करसञ्ज्ञितम् ॥ ४२
सुदीपश्च महाशैल साभ्रमन्तस्तत परम् ।
इन्द्राद्रिश्च महाशृङ्गो मेरुश्रृङ्गात् सुदर्शन ॥ ४३
तयोर्मध्ये महच्चासीत् ब्रह्मर्षिभिर्निषेवित ।
ब्रह्मचारी-गृही-भिक्षु वैखानस-तपोधनै ॥ ४४
शिवार्च्चनरतै सर्वै शिवैकगतमानसै· ।
दारुक नाम विख्यात स्वादुमूलफल वनम् ॥ ४५
मन्दरस्तु तत शैलो येनामन्थि तु सागर ।
वन चैत्ररथ तत्र विश्बावसु-निकेतनम् ॥ ४६
ततो नानातरुवरैर्वेष्टितौ स्बर्गरूपिणौ ।
श्रीशैलः पारिजातश्च द्वावेतौ पर्वतोत्तमौ ॥ ४७
तयोर्मध्ये च विष्कुम्भ प्रमाणशतयोजन ।
सन्ति तत्र जना स्फीता प्रभूतजनसाधिता ॥ ४८
माधी (?) नदी[1] सदा तत्र दुहितृशतशोभिता ।
क्रौञ्चशैलोदिता भूमौ शतश्रृङ्गौ महाद्वीपौ ॥ ४९
वराद्रिश्च पृथुद्वीपो रक्षसा निलयस्तत ।
अञ्जनाख्यो गिरिश्रेष्ठ कृष्णपादपशोभित ॥ ५०
सूर्यस्य दुहिता देवी कालिन्दी वरनिम्नगा ।
तस्माच्छैलाद्विनिष्क्रान्ता प्रख्याता ह्लादिनी शिवा ॥ ५१

1 $A_1$, $B_2$ मधुनदी ।

अश्वानना जनास्तत्र एकपादा बलोत्कटा ।
अञ्जनाद्रे परिख्यातो गिरिरर्बुद एव च ॥ ५२

म्लेच्छाश्चान्त्या पुलिन्दाश्च अर्बदाद्रिनिवासिनः ।
विषभद्रा[1] नदी तत्र यथार्थबलिनो जना ॥ ५३

पर्वतश्चारकूटश्च [2]कश्मलश्चात्र पर्वत ।
एते सर्वे जगद्धात्रि ! उत्तरस्या दिशि स्थिता ॥ ५४

दक्षिणस्या तु ये ये तान् शृणु मत्त प्रयत्नत ।
ऐरावतश्च विख्यातो रामाद्रिर्दण्डक वनम् ॥ ५५

अनेकऋषिसङ्घाना नदी गोदावरी शिवा !
पर्णशालावन , तत्र यत्र सीता हृताधुना ॥ ५६

पम्पासर इति ख्यात यद्वालिनिलय परम् ।
महद्रक्षो वन नाम खरादीना वधालयम् ॥ ५७

ऋष्यमूको गिरिर्घोर किष्किन्धा तदनन्तरम् ।
तत्र सिन्धुवती नाम्ना नदी स्वच्छाम्बुवाहिनी ॥ ५८

वानराधिपतेर्धात्री चित्रमत्यन्तसुप्रभा ।
अश्मकूटे स्थिता साद्रौ किष्किन्ध्या परतोऽम्बिके ! ॥ ५९

महावेलावन तत्र ऋषिवृन्दसमावृतम् ।
परिमाण च विख्यात योजनाष्टशत च तत् ॥ ६०

तद्वनात्परम पुण्य मलयाचलविश्रुतम् ।
आश्रम चाप्यगस्त्यस्य ब्रह्मर्षिभिर्निषेवितम् ॥ ६१

महासिन्धुतटे रम्ये ईशानेश्वर-सन्निधौ ।
प्रियङ्गुवनविख्यात तथा कुन्तलकेति च ॥ ६२

एतानेवमतिक्रम्य नदी पाटलश्यामला ।
निषादोर्मिवन तस्मात्त्रिंशद्योजनमायतम् ॥ ६३

नदी प्राशुजला नाम्नी ततो मीनभषाकुला[3] ।
इन्द्रगोप[4] गिरिस्तस्मात् सागराम्भ समीपत ॥ ६४

---

1 $A_1$, $B_2$—विषयाद्या ।
2 $B_2$—कुशल ।
3 $B_2$—मीनसमाकुला ।
4 $B_2$ चन्द्रगोप ।

वनौकसा गणैर्गुप्तो दुसञ्चारो महोच्छ्रय ।
पूर्वस्याश्च दिशस्तस्मान्मणिपर्वत इष्यते ॥ ६५

करवीरपुर नाम्ना तोयनाथावधि स्थितम् ।
दैत्यासुरनिवासोऽसावनाधृष्य. सुरैरपि ॥ ६६

तस्य पूर्वोत्तरे भागे योजनाना शतद्वयम् ।
उत्थित. सागर भित्वा त्रिकूटो नाम पर्वत ॥ ६७

अत्युच्छ्र पृथुलो भीम शतयोजनविस्तर ।
महासिन्धुतटे जातो याम्य नैर्ऋतमाश्रित ॥ ६८

इन्द्रगोपात् परे भागे जनाकीर्णा वसुन्धरा ।
योजनाना शतत्रिशत्सर्वप्राणिपरोऽक्षक ॥ ६९

सामुद्रिकाश्च ये लोकास्तस्मिस्तिष्ठन्त्यनेकश ।
अन्त्यजा· पापिनो म्लेच्छा लोकवृत्तिबहिष्कृताः ॥ ७०

नदी धूम्रारुणा तस्माच्छतधा सागर गता ।
दाक्षिणात्या ह्यनेकाश्च नानावेदाधरोत्तरा ॥ ७१

नानायज्ञकृतारम्भा शौचाचारसमन्विता. ।
नदी चर्मवती तत्र केरलावृतवेणिका ॥ ७२

तुङ्गभद्रा शिवा भीमा नर्मदा च सरिद्वरा ।
दृषद्वती च कावेरी तुल्या गोदावरी तथा ॥ ७३

एताश्चान्याश्च सरितो दक्षिणा दक्षिण गता ।
मलयप्राच्ययोर्मध्ये एते जनपदा स्मृता ॥ ७४

पश्चिमस्यामथ दिशि ये ये तान् शृणु पूर्वजे ।
ग्रीवाजन इति ख्यातो महाजनपद स्मृत ॥ ७५

ग्रीवाजनपदाच्चैव[1] बलवान् दुर्दुराचल ।
महापाषाणपरिघम्तत्र श्वेतवनानि च ॥ ७६

त्रयोदशशतान्येव योजनानि तथोच्छ्रय ।
योजनैकशत चैव योजनैकदशस्थित ॥ ७७

कामवाहा नदी तत्र कामदा मदनोद्भवा ।
तत परे महानासीन्न्यग्रोधवनविश्रुत ॥ ७८

---

1. $B_2$ श्रीवाजन ।

शमीस्थलीवनप्रेख्या उग्ररेखा वनस्थली ।
नदीनदसमाकीर्णा सर्वे जनविवर्जिता ॥ ७६

ईशानगिरिविख्यातो मालवश्च तथापर ।
कीचको वनरम्योऽसौ यत्र शालीचर स्थित ॥ ८०

वानप्रस्थसमाकीर्णं पूर्णमक्लिष्टकर्मण[1] ।
द्वाविशति शतानीति योजनै परिकीर्त्तित ॥ ८१

खेलावर्त्तमिति[2] ख्यात तत खट्वागकाननम् ।
कालिकावनविख्यात यत्र जातासि कालिके ॥ ८२

अत पर निवोधेद मध्ये परममङ्गले ।
वितते च महारम्ये देशे त्वमरसेविते ॥ ८३

सरस्वती नदी तत्र पुष्णाति त्वनिश जनान् ।
सर्वदेवाश्रये रम्ये पुण्यदेशे महेश्वरि ॥ ८४

तस्य गङ्गा सरिच्छ्रेष्ठा मध्ये याति सरिद्वरा ।
नाना जनपदास्तत्र वर्णश्रेष्ठा द्विजोत्तमा ॥ ८५

महेन्द्रादि सुराकीर्णा पर्वता ह्युपपर्वता. ।
वनोपवनरम्याश्च पुण्यस्रोतसरिद्वरा ॥ ८६

न तत्र नास्तिका क्रूरा पाषण्डा धर्मवर्जिता ।
नापि स्तेयरता सत्य न हिंसाशसिनो जना ॥ ८७

न कलि प्रभवेत्तत्र सदाचारा सदा प्रजा. ।
नाकाले जन्तुमरण स्वकर्मनिरता नरा ॥ ८८

एकवेदमधीयन्ते शाखाभेदेन तु क्वचित् ।
न भिद्यते तपो धर्म न च पापरता क्वचित् ॥ ८९

सर्वे निष्कामकर्माण काले वर्षति वासवः ।
नोपसर्पंरुजापीडा क्षेममारोग्यसम्पद ॥ ९०

आयुष्यधर्मभोगादौ वर्द्धमाना क्रमात्किल ।
पूर्वस्या दिशि वक्ष्येऽह लोकाना हितमुत्तमम् ॥ ९१

---

1 $A_1$, $B_1$, C—मण्डल ।

2. $B_2$ खलावर्त्त ।

गङ्गासागरयोश्चैव सङ्गम पावन महत् ।
तत्र स्नात्वा सकल्लोका दिवि मोदन्ति मानवा ॥ ९२

तत्र भुक्त्वा कियत्काल शैव पदमवाप्नुयु ।
दिशि दक्षिणपूर्वस्या दक्षिणाब्धितटे स्थित[1] ॥ ९३

सर्वत्र वालुकाकीर्णो नोलाद्रिमाधव प्रिय ।
तस्माद्दक्षिणतो[2] (?) देशे महादेवप्रियो महान् ॥ ९४

त्रियोजनान्तरे देवि ! स्वर्णकूटाचल स्मृत ।
तत्र सर्वे जना शैवा शिवार्चनपरायणा ॥ ९५

अनन्यभक्त्या ते यज्ञैर्यजन्ति गिरिजापतिम् ।
एव मया समाख्यातो वर्षश्रेष्ठो हि भारत ।
अत. पर महेशानि किमन्यच्छ्रोतुमिच्छसि ॥ ९६

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया प्रथमेऽशे भुवनकोष-निर्णये भारतवर्षानुकीर्त्तन नामाष्टमोऽध्याय ॥

---

1. $A_1$, $B_1$, C—ततः ।
2 $B_2$ उत्तरतो ।

# नवमोऽध्यायः

श्रीपार्वत्युवाच

श्रुत मया प्रयत्नेन भूमिलोक प्रजापते ।
अधुना श्रोतुमिच्छामि पातालाना च निर्णयम् ।। १

ब्रह्मोवाच

शृणु देवि ! प्रवक्ष्यामि त्वत् प्रश्नोत्तरमुत्तमम् ।
भूलोकादधतस्तानि पातालानि विदुर्बुधा ।। २

आदौ भोगवती नाम नागाना निलय महत् ।
कृष्णं क्षितितल दिव्य दीप्यमान स्वतेजसा ।। ३

अष्टैते कुलजा सर्पा सन्ति तस्मिन् पृथक् पृथक् ।
चिन्तयन्ति महेशानि वरद स्थाणुमव्ययम् ।। ४

तत्रासुरा शङ्कुकर्णा महानाद-नमूचय[1] ।
सुरत्नमणि-सुद्योता पर्यटन्ति यथेच्छया ।। ५

ततो मणिवती नाम[2] पाताल स्याद्द्वितीयकम् ।
सर्वभोग-समृद्ध तद्रम्य परमपुष्टिदम् ।। ६

सर्वत्र सुखसचार मनोज्ञ विपुल शिवम् ।
शुक्लक्षितितल सर्पमणिसुद्योतित शुभम् ।। ७

महाजम्भ हयग्रीव कम्बलाश्वतरादय ।
आराधयन्ति तत्रेश नाम्ना च हाटकेश्वरम्[3] ।। ८

पुरअट्टालिहर्म्येषु निवसन्ति सुखेप्सव ।
उद्यानेषु विविक्तेषु नागयोषित्[4]समन्विता ।। ९

---

1 $B_2$ महद्दर्चनसूचय ।

2 $B_2$ भोगवती नामा ।

3 $A_1$, $B_1$, C—हटकेश्वरम् ।

4. $B_2$ नानायोषित् ।

नानाशास्त्रपरा सर्वे शुक्लाम्बरधरास्तथा ।
रमन्ते मुदिताचारा गीतवादित्रनि स्वनै ॥ १०

तत पर निवोधेद पातालाना तृतीयकम् ।
हिरण्यपुरविख्यात विशुद्ध रक्तभूतलम् ॥ ११

पुलोमनामा[1] तत्रासौ दैत्य परपुरञ्जय ।
कालकेयासुरा हृष्टा निवातकवचास्तथा ॥ १२

खरराक्षसशार्दूला निशाचरगणैर्वृता ।
निवसन्ति कृतावासा अनुह्लादाश्च दानवा ॥ १३

हिरण्यकपुराच्चैव[2] पाताल स्याच्चतुर्थकम् ।
दिव्यभोगयुत रम्य सुतल पीतभौमिकम् ॥ १४

तत्रासुराणा किल कालनेमितारागिनकर्यानिनकादिकानाम् ।
यानि हि रत्नानि पुरस्कृतानि तेजस्विना वीर्यवता वरिष्ठे ॥१५

स्वकर्मसञ्जातफलाशनास्तु वसन्ति तत्र प्रमदाजनाश्च ।
वसन्ति देवा किमु मूर्त्तिमन्त शान्ताश्च दान्ता हरिभक्तियुक्ता ॥१६

बलि स्वय क्षत्रसुरापमर्द्दी नारायणप्रीतिविभावनाढ्यः ।
भक्त्या मुरारिं परितुष्टुवेऽसौ स्तोत्रेण दिव्येन महादरेण ॥ १७

हृद्योपचारैर्द्दितिजोऽर्च्चयश्च तिष्ठत्यय केशवदर्शनेन ।
स वामन भूतपति स्मरन्त त्रिविक्रम ब्रह्मसुरेन्द्रवन्द्यम् ॥ १८

सदा हरे शासननित्ययुक्त श्लाघ्यस्थिति सयममेव लब्ध ।
तत्र स्थितो दैत्यपतिश्चकाशे पापावसाने स्वकृत विधत्ते ॥ १९

ततस्तलातल नाम पाताल परिपठ्यते ।
पञ्चम सुतल देवि ! शर्कराञ्चितभूमिकम् ॥ २०

महातमोमय घोर त्वञ्जनाचलसन्निभम् ।
व्यालग्राहभषैर्नक्र-तिमिङ्गिलचयाकुलम् ॥ २१

वैरोचनहिरण्याक्षप्रभृतिना वरानने ! ।
नगाना स्वस्तिकादीना निवासस्तत्र कीर्त्तित ॥ २२

---

1. $A_1$, $B_1$—स्वलोमनामा ।

2. $A_1$, $B_2$—हिरण्यकशिपोश्चैव ।

ततो महातल नाम पाताल तु भयङ्करम् ।
तमोमयमसञ्चार[1] तत्र पातकिना गति ॥ २३

ततो रसातल नाम शिलासङ्घातभूमिकम् ।
वासुकेर्नागराजस्य तत्र चारु महापुरम् ॥ २४

दिव्यद्रव्योपसम्पन्न नागकन्या समावृतम्[2] ।
वासुकेस्तु फणाग्रस्तैर्मणिभिर्दीप्तवर्चसम् ॥ २५

शोषक[3] सर्वभूताना काले सजनयत्स्वयम् ।
द्विसप्ततियुगावर्त्ते तत्र रौद्रानल हर ॥ २६

कालेनैवान्तमायाति कालाग्नि प्रलयान्तकृत् ।
दिव्य[4] भूतलपातालान् नागान् शैलान् सकाननान् ॥ २७

आब्रह्मस्तम्बपर्यन्त तेन दीप्तेन तेजसा ।
पावको निदहेत्सर्वं त्रैलोक्य सचराचरम् ॥ २८

प्रलयान्ते शिखा तस्य सप्तमार्द्धामृतालया[5] ।
तामेव कारण प्राहुर्नानासत्त्वोद्भवाय च ॥ २९

तत्रासौ पृथिवी देवी लोकधात्री यशस्विनी ।
भूयः सजनयेल्लोकान् यावत पूर्वसज्ञितान् ॥ ३०

शिवात्मक पर बीज सोमोऽमृतमहारस. ।
अक्षयश्चाव्ययश्चासौ दुर्विज्ञेय सुरासुरै ॥ ३१

अमूर्त चेति यो विद्यात्स शिव प्राप्नुयाद् ध्रुवम् ।
सर्वपापविमुक्तात्मा न भूयो योनिजो भवेत् ॥ ३२

ज्ञानिन शिवसङ्क्रान्त्या विश्व शिवमय विदु ।
अधरोत्तरपर्यन्त सर्वकारणकारणम् ॥ ३३

आधाराधेयभावेन व्याप्तो लोकाश्चराचरान् ।
शिवस्यानुमतो भूत्वा लोकानवदधार स. ॥ ३४

---

1 $B_2$—मलाचार ।

2. B—नागकल्पसमावृतम् ।

3 $B_2$—शोषाक ।

4 $A_1$, $B_1$, C—दिवि ।

5. $A_1$, $B_1$; G—सप्तम्याह्यमृतालया ।

तस्याज्ञया[1] शिवस्यैव अक्षयश्च पृथु श्रुतः ।
दधार सकलान् कूर्म शिवशक्तिपरायण ॥ ३५

सर्वाधार शिवः साक्षाद् यज्ञाध्ययनकर्मण ।
सर्वंग सर्वदर्शी च महाशक्तिपरायणः ॥ ३६

स्वाहाकार स्वधाकारः वषट्काराश्च ये स्मृता ।
धृत तेन जगत्सर्वं शिवेनैव न सशय ॥ ३७

एतत्पुण्य मयाख्यात पवित्र पापनाशनम् ।
ज्ञानद सर्वलोकाना शकरात्मकमेव च ॥ ३८

पातालानामथो मान वक्ष्ये मुनिमत शृणु ।
श्रोतव्य विदित तत्तु लोकद्वयफलप्रदम् ॥ ३९

आद्य भोगवती नाम भूमियोजनविस्तरम् ।
ततोऽप्यधस्तादयुत पञ्च च स्याद्‌द्वितीयकम् ॥ ४०

तृतीय चायुत त्रीणि योजन सप्ततिस्तथा ।
सार्द्धायुत तथा मान चतुर्थस्य प्रकीर्त्तितम् ॥ ४१

अयुत पञ्चमस्यापि प्रमाण शिववल्लभे ! ।
षष्ठ चाष्टसहस्र हि सप्तम षट् सहस्रकम् ॥ ४२

पातालानामिद मान पुराणे[2] परिकीर्त्तितम् ।
भेदोऽनेक पुराणेषु तत्र पातकिना गति ॥ ४३

तदध पापिनो यान्ति नरकानेकविशतिम् ।
स्वकर्मभि सदा दुःख प्राप्नुवन्त्यविवेकिन ॥ ४४

दह्यन्ति चाथ क्लिश्यन्ते विश्लेषन्ति रुदन्ति च ।
यमस्य ? किङ्करैर्घोरै क्लिश्यमानाग्निसञ्चये ॥ ४५

विलपन्ति न मुञ्चन्ति यमदूता भयङ्करा ।
लोकाना तत्र देवेशि ! न च त्राता तु विद्यते ॥ ४६

हाहा तात हतोऽस्मीति हाहा पुत्रक पुत्रक ।
एव विलप्य बहुधा परिदेवति मन्दधी ॥ ४७

न दत्त न हुत जुष्ट न तपस्तु कृत मया ।
नाराधितो गुरुर्देवो देहेऽस्मिन् तेन कर्मणा ॥ ४८

---

1 A₁, C—तमाज्ञया ।

2, A₁ C—पराण ।

पुत्रद्वारगृहक्षेत्रे सदासक्तिर्मया कृता ।
तेन कर्मविपाकेन दुःखस्यान्तो न विद्यते ॥ ४९

परलोकभयं नास्ति त्वन्यायेन धनार्जनम् ।
तेनेदं नरकं प्राप्तं को मे त्राता भविष्यति ॥ ५०

प्रत्यग्रफललाभेन यत्रागमनचिन्तितम् ।
पतितो विषमे घोरे जहामि न च जीवितम् ॥ ५१

करिष्यामि च तं धर्मं येन भूयो न जन्म मे ।
दास्यामि विविधान् दानान् येन स्यादात्मनो हितम् ॥ ५२

अर्च्चयिष्ये विरूपाक्षं येन नो नरकं व्रजे ।
इत्येवमादि बहुधा सदा रोदिति नारकी ॥ ५३

न धर्मादपरो बन्धुर्न धर्मादपरो गतिः ।
न धर्मात्त्रायकश्चान्यो मरणेऽपि न मुञ्चति ॥ ५४

संक्षेपेण मयाख्यातं पातालस्य च कीर्त्तनम् ।
कोषवद्भुवनस्यास्य सारमुद्धृत्य पार्वति ! ॥ ५५

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां संहितायां प्रथमेऽंशे भुवनकोषनिर्णये सप्तपातालकीर्त्तनं नाम नवमोऽध्यायः ।

---

# दशमोऽध्यायः

## सनत्कुमार उवाच

श्रुत्वा च ब्रह्मणो वाक्य दुर्गा प्रोवाच सस्मिता ।
वस्तुनिर्द्देशनाद्य च प्रवृत्ति[1] जगतस्तथा ॥ १
द्वीपाना कीर्त्तन तद्वत् पातालाना च निर्णयम् ।
विदित तव वाक्येन उद्ध्र्वं व्रूहि पितामह ॥ २
प्रहसन् तामिद वाक्य भूय प्रोवाच सोऽब्जज ।
श्रृणु गौरि ! वदाम्यद्य उद्ध्र्वलोकप्रकीत्तनम् ॥ ३

## ब्रह्मोवाच

धरित्र्या उद्ध्र्वतो भानोरुदय लक्षयोजने ।
एतन्मध्ये तथा लोक भुवनाम प्रतिष्ठितम् ॥ ४
अनिकेता वसन्त्यस्मिन् वसुरुद्रा सभास्करा ।
शिवार्च्चनपरा सर्वे शिवैकगतमानसा ॥ ५
रश्मिमाली सुरश्रेष्ठ सर्वदेवनमस्कृत ।
त्रैलोक्यभुवनद्योतो धर्मारम्भकर प्रभु ॥ ६
उदयत्युदये शैले लकानुग्रहकारक ।
व्रजत्यविरत व्योम्नि विश्वमार्गप्रदर्शक ॥ ७
मयूखनिकरोद्भासैर्दूरमुत्सारयेत्तम ।
अयनाभ्या तदादित्यो निबोधस्व युगानि च ॥ ८
भास्कर कालकालज्ञ सर्गस्थित्यन्तकारक ।
तमेव कारण प्राहु सर्वकार्येषु पण्डिता ॥ ९
वर्षयन्ति करास्तस्य शोषयन्ति तथा कराः ।
प्रेरयन्ति तमो दूर तस्मात्कोस्त्यधिक सुर ॥ १०
आदित्यस्तु स्वय विष्णुर्विष्णुरादित्य उच्यते ।
आदित्य च शिव विद्यात् शिवमादित्यरूपिणम् ॥ ११

---

1 $B_2$ विवृत्त ।

विश्व भानुमय भाव्य भाव्यभाव्येषु सर्वदा ।
पर्यायेण जगत्कृत्स्न वर्त्तते रवितेजसा ॥ १२

मध्ये कृत्वा ततो मेरु पर्यटत्यनिश विभुः ।
यतो यात्यग्निसभूतस्त्वरित सा विभावरी ॥ १३

क्वचित्प्रात क्वचित्साय क्वचिन्मध्यन्दिन विभु ।
करोति भगवान् भानु क्वचिच्छीताशुनिर्मलम् ॥ १४

आदित्यमण्डलादुद्ध्वं प्रोक्त स्वर्लोक आध्रुवात् ।
विमानकोटयस्तस्मिन्नष्टाविशतिरासते ॥ १५

द्विलक्षमूद्ध्वतो मेरोश्चन्द्रस्तपति निर्मल ।
भाति चन्द्रातपैर्मिश्र आविद्धकनकोज्ज्वल ॥ १६

नानामणिमयोद्योतैर्धातुमिश्र सुधाङ्कित ।
ऋषिसिद्धगणाद्यैस्तु सेव्यमान सहस्रश ॥ १७

अथ तस्मात्परेणैव शक्रस्यैवामरावती ।
वन च नन्दन तत्र सर्वर्त्तु फलपुष्पितम् ॥ १८

सर्वकामफलप्राप्तिर्गन्धर्वपरिपालितम् ।
सालतालतमालैश्च चम्पकाशोकपाटलैः ॥ १९

जाती कुमुदकल्हारचन्दनागुरुगुग्गुलै· ।
एतैस्तु शोभित नित्य तद्वन नन्दन शिवे ! ॥ २०

दिव्यमानसतोयैश्च हैमसारसनादितै· ।
राजहसैश्चकोरैश्च कामगैश्च मनोरमै ॥ २१

पद्मकोकनदच्छन्नै कल्हारै कुमुदोत्पलै ।
सदारकौतुकैश्चैव त्रिदशै परिभूषितम् ॥ २२

सिद्धगन्धर्वयक्षैश्च किन्नरोरगराक्षसै ।
ऋषिभि स्तूयमानैश्च गुह्यवेदपदाक्षरैः ॥ २३

वेणुवीणामृदङ्गैश्च पटुमाधुर्यनि स्वनैः ।
अनेकदेवयोषिद्भिर्नृत्यगीतैर्मनोहरै ॥ २४

शोभित परम तस्य वन नन्दनसञ्ज्ञितम् ।
योजनाना ध्रुवात्कोटिर्महर्लोक समुच्छ्रित ॥ २५

विनिवृत्तविरागाणामधिवासो महात्मनाम् ।
विंशति कोटयोऽष्टौ च सुराणामधिश्रीरिणाम् ॥ २६

जना स्वर्लोकमार्गस्य नियोगात्पद्मयोनिनः ।
स्थित्वा मन्वन्तर तत्र स्वाध्यायारावशायिते ॥ २७
आरोहन्ति महर्लोकमागच्छन्त्यपरे जना ।
ब्रह्मणो दिवसेनेत्थ देववर्षाश्चतुदश ॥ २८
क्रमेण कृत्वा कर्माणि महर्लोके वसन्ति ते ।
कोटिद्वय महर्लोकाज्जनलोकः समुच्छ्रित ॥ २९
साध्या नाम सुरास्तस्मिन् वसन्ति सुखिन सदा ।
योजनाना तपोलोकश्चतस्र कोटियोजनात् ॥ ३०
प्रजाना पतयस्तत्र मानसा ब्रह्मण सुता ।
सत्यलोकस्तपोलोकात् कोटय षट् समुच्छ्रित ॥ ३१
आस्ते परिवृतस्तत्र सुराणामीश्वरो ह्यहम् ।
समलोकाद् विष्णुलोको द्विगुणेन समुच्छ्रित ॥ ३२
विस्तरेण तदर्द्धं च विव्यभोगसमन्वितम् ।
विष्णुलोकाच्च परत श्रीमच्छिवपुर त्विदम्[1] ॥ ३३
द्वात्रिंशकोटिविस्तीर्णं[2] तदर्द्धेन समुच्छ्रितम् ।
आराधयन्ति ईशानमत्रदेव महेश्वरम् ॥ ३४
मदादयोऽमरा सर्वे गणानीकैरभिष्टुतम् ।
नन्त्यादिप्रमुखा ह्येते प्रमथा गणनायका ॥ ३५
पुण्यदेशाश्च दिव्यास्ते सन्ति देवि ! सहस्रश ।
बहुरूप विरूपाक्ष रामयन्ति रमन्ति च ॥ ३६
दिव्यभोगैरनेकैश्च बहुमन्वन्तराणि च ।
सर्वे रुद्रगणा धन्या कैलासशिखरे स्थिता ॥ ३७
प्रभवन्ति जगत्कृत्स्न ये नमन्ति उमापतिम् ।
स्वर्ग्यमारोग्यमैश्वर्यं पुण्यमाख्यानमुत्तमम् ॥ ३८
य पठेत् प्रयतो भूत्वा स लभेत् शाश्वत पदम् ।
य शृणोति नरो भक्त्या माहात्म्य शङ्करस्य च ॥ ३९
जीवन्नपि भवेद् पूज्यो देहान्ते शिवता व्रजेत् ॥
य शृणोति नरो भक्त्या पुराणप्रवर त्विदम् ॥ ४०

---

1 $B_2$ —महत् ।

2 $B_2$—विस्तार ।

पठेद् वापि सावधानात् पुत्रायुर्धनभाग् भवेत् ।
एकाम्रकपुराण यो लेखयेत्पाठयेत्सकृत् ॥ ४१

सोऽशोच्य सर्वसत्त्वेषु वशवृद्धिश्च जायते ।
जीवन्नपि कृतार्थं स्यात् सर्वतीर्थफलान्वित· ॥ ४२

देवा पुनस्तमिच्छन्ति मृत स्वर्गे महीयते ।
पुराण य पठित्वा तु मनसा त्ववमन्यते ॥ ४३

नरक याति पापीयान् ब्रह्मस्वहरको यथा ।
प्रपालयति यो वृत्ति वाचा न विकरोत्यपि ।
स्ववशमुद्धृत तेन शकरस्त हि तुष्यति ॥ ४४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया भुवनकोषविन्यासे उद्र्ध्वलोककीर्त्तन नाम दशमोऽध्याय [1] ।

समाप्तोऽय प्रथमोऽश ।

---

1 $B_2$ भुवनकोषे उद्र्ध्वलोककीर्त्तने दशमाध्याये प्रथमोऽश, समाप्त. ।

अथ द्वितीयोश

# एकादशोऽध्यायः

## असित उवाच

एतच्छ्रुत्वा वचस्तस्य ब्रह्मणो लोकनिर्णयम् ।
किमाह गिरिजा त तु तन्ममाख्यातुमर्हसि ॥ १

## सनत्कुमार उवाच

सानन्दोत्फुल्लनयना स्मितवक्त्रा ततोऽसित ।
देव्युवाचाञ्जलि वध्वा ब्रह्माणममितद्युतिम् ॥ २

साध्वाख्यान[1] त्वयाख्यात[1] भुवनस्यास्य निर्णयम् ।
निर्णय सर्वभूताना पुण्यस्थानान्यनेकश ॥ ३

नदीनदसरिद्द्वीपकाननार्णवमेव च ।
दुर्ल्लभ च जगत्कृत्स्न विश्वोदाहरण परम् ॥ ४

कोष तु भुवनश्रेष्ठ सर्वभूताश्रय महत् ।
पावन परम दिव्यमघौघप्रशम परम् ॥ ५

नृलोके यानि तीर्थानि गिरिदुर्गाश्रितानि च ।
अरण्यरोधसिद्धानि विविक्तान्यमरस्थली ॥ ६

वेद्मि सर्वाण्यिशेषाणि प्रसन्ने वृषभध्वजे ।
इदानी श्रोतुमिच्छामि पुण्यक्षेत्र पितामह ! ७

उदाहृत च यत् पूर्व स्वर्णकूटाद्रिचारिण ।
एकाम्रकवन नाम दक्षिणाम्बुधिसन्निधौ ॥ ८

नातिस्पष्ट पुरा प्रोक्त सक्षेपेण त्वया मम ।
साम्प्रत ब्रूहि विद्वास एतद्भूतहितार्थकम् ॥ ९

यद् व्याख्यान समाख्येय योग्योऽह श्रवणे यदि ।
यदि नित्य प्रियाह च देवदेवस्य पद्मज ॥ १०

---

1 $B_2$ साध्वाख्यात त्वया ब्रह्मन् ।

प्रसादसुमुखस्तत्र फल कौतूहल मम ।
सर्वभूतहितार्थाय साधनै कथ्यता वनम् ।। ११

## सनत्कुमार उवाच

दाक्षायण्या इमा वाच श्रुत्वा देवपितामह ।
मुहूर्त्तं ध्यानमाविश्य स्मृत्वा गगाधरेरितम् ।। १२

उत्फुल्लनयनो भूत्वा लोकनाथस्ततोऽसित ।
उवाच वचन श्लक्ष्ण छन्दो देवसम त्विदम्[1] ।। १३

## ब्रह्मोवाच

पुराण परम पुण्यमीशानचरित शिवम् ।
स्वायभुवमनादर्शि दिव्य सदसदात्मकम् ।। १४

पापघ्न सर्वलोकाना स्वर्गादिफलदायकम् ।
श्रृणुष्वावहिता देवि ! वन्द्य ससारतारकम् ।। १५

शिवेन स्वयमेवेदमादिभूत सनातनम् ।
भित्वा त्वण्डकपाल तु ततो भेद्य त्रिधा गत ।। १६

अह ब्रह्मा गुरुर्विष्णु शिवस्त्वन्तर्दधे तदा ।
अग्रजावरजभ्रान्त्या विवाद परमो ह्यभूत् ।। १७

अत्र वादनिषेधार्थमावयोर्मध्यके शुभम् ।
शुद्धस्फटिकसकाश लिङ्गमुद्भूतमम्बिके! ।। १८

तल्लिङ्गाद्देवदेवस्य अप्रमेयमनन्तरम् ।
प्रादुर्भूत महत्तेज. कोटिसूर्यायतप्रभम् ।। १९

दु.सह दुर्निरीक्ष्य तद्दृष्ट्वाह च तदाम्बिके ! ।
प्रसन्नोऽस्मि ह्यह भूयः शरण वृषभध्वजम् ।।२०

अनेकयज्ञमूर्त्तिश्च शक्तिविज्ञानवित्तत ।
आजगाम शिव साक्षात् कृपया परया मम ।। २१

निहत्यासुरदैत्यादीन् वेदमुद्धृत्य दत्तवान् ।
मम प्रजापतित्व च पालकत्व हरेर्ददौ ।। २२

---

1. B₂. वृत्तिसमन्वितम् ।

भूय प्रीतिमना प्राह वृणीष्व वरमुत्तमम् ।
ददामि यदभिप्राय मा तेऽभूदत्र सशय ।। २३

एव तद्वचन श्रुत्वा तदाह शिववल्लभे ।
उवाच परया भक्त्या देवदेव कृपानिधिम् ।। २४

सर्वज्ञ सर्वकर्त्तार सर्वलोकनमस्कृतम् ।
सर्वेश्वर चन्द्रचूड चन्द्रबिम्बानन विभुम् ।। २५

चैतन्य परम दिव्य शाश्वत ध्रुवमव्ययम् ।
निर्विकार निराभास नयनानन्दद प्रभुम् ।। २६

शब्दब्रह्मेति गुह्य च य प्राहुर्मुनय सदा ।
यदि प्रसन्नो भगवान् यदि तेऽनुग्रहोऽस्ति मे ।। २७

कथयस्व महादेव भक्तिस्निग्धस्य पृच्छत. ।
आराधयामि लिङ्ग ते सर्वकामफलप्रदम् ।। २८

इच्छामि यजन तुभ्य सदा मूर्त्तिमतावर ।
सान्निध्य यत्र भवत. पूजनोयस्त्वमास्थित ।। २९

तन्ममाख्याहि सद्भाव क्षेत्र क्षेत्रविदावर ।
दुर्ल्लभ दर्शन ते यद्देवै स्वप्नेऽपि शकर ।। ३०

मन्यते परमेशान ह्यतोऽह भाग्यवान् स्मृत ।
व्रतोपचारैर्नियमैर्जपहोमैस्तथापि च ।। ३१

स्तोत्रेण प्रणिपातेन दानेन विविधेन च ।
भक्तिशुश्रूषणेनैव नृत्यगीतैर्मनोहरै ।। ३२

येन केन प्रकारेण निस्तरेय भवार्णवात् ।
कामक्रोधमहाव्याल ग्रसन्त मामहर्निशम् ।। ३३

अभ्युद्धर महादेव ससारार्णवमध्यत ।
मोहद्वीपी महाग्रासाल्लोभवल्लीषु बन्धनात् ।। ३४

त्रातुमर्हसि देवेश कान्ताराददतिभीषणात् ।
स्थान तव महादेव विशेषफलदायकम् ।। ३५

सम्यक् श्रद्धावतो ब्रूहि शिष्यस्तेऽह त्रिलोचन ।
स ततो मामुवाचेद शान्तिपूर्वो महेश्वर ।। ३६

नित्य सन्निहितस्तुभ्य निभेद्या मतिरावयो ।
ज्ञेय शिवो हरिर्ब्रह्मा ब्रह्माविष्णुशिवात्मको ।। ३७

एक एव त्रिधा याति कारणात् पुनरेकधा ।
तथापि त्व महाप्राज्ञ ! पूज्योऽह यदि मन्यसे ।। ३८

मनसस्तव तुष्ट्यर्थं प्राणिना सुहिताय च ।
स्थानमेक प्रवक्ष्यामि तदिहैकमना शृणु ।। ३९

नाख्यात कस्यचित् पूर्वमतिश्रद्धावता सताम् ।
मर्त्यलोके स्वर्गरूप[1] विद्धि क्षेत्रमनुत्तमम् ।। ४०

उत्तम सर्वकर्मणा गतिमिष्टा प्रदायकम् ।
निरायास महापुण्य भूताना पावन परम् ।। ४१

मत्प्रीतिद सदा ब्रह्मन् ! नराणामपवर्गदम् ।
दक्षिणस्योदधेस्तीरे निर्जने गहने वने ।। ४२

दु सचारे महाभीमे अप्रवृत्ते अनाश्रमे ।
हेमकूट इति ख्यातो मत् प्रिय पर्वतोत्तम ।। ४३

हेमकूटगिरौ तस्मिन् हेमशाखो महाद्रुम ।
जवाविद्रुम-सकाश आमूलस्फटिकोज्ज्वल ।। ४४

दुरारोहो[2] बृहत्काय पीन श्लक्ष्णो महीरुह ।
भीमशाखो महोच्छ्राय सहजाङ्कुरपल्लव ।। ४५

पुष्पाणि मञ्जरीभिश्च मनोज्ञानि महोज्ज्वलम्[3] ।
सुरभीणि विचित्राणि षट्पदैर्लक्षितानि च ।। ४६

पुष्पाणि मञ्जरीश्चैव मनोज्ञा विभ्रदुज्ज्वला ।
सर्वर्त्तुफलपुष्पाढ्यो योजनायतमण्डल ।। ४७

मन्दमारुतयोगेन सुवासित-वनस्थली ।
एवमेको यतश्चाम्रस्तस्मादेकाम्रक वनम् ।। ४८

सान्निध्योऽह सदा तत्र लिगव्यक्ति सुतेजसा[4] ।
आमूलस्फटिकाबद्ध मध्ये वैडूर्यसन्निभम् ।। ४९

पद्मरागसमोद्र्ध्वं च ज्वलन्त तेजसाऽतुलम् ।
शिखरे तस्य लिगस्य महानलशिखासमम् ।। ५०

1 $B_2$ स्वर्गलोक ।

2 $A_1$, $B_1$, C वरारोहो ।

3 $A_1$, $B_1$, C—पुष्पाग्रनिकरोद्भास सान्द्रमत्यन्त सुप्रभ ।

4, C स्वतेजसा ।

भासयच्च दिश. सर्वास्तेजो ज्वलति सर्वदा ।
तल्लिगस्य चतु पार्श्वे कोटिलिंगानि भूतले ।। ५१
अन्यानि चाष्टलिङ्गानि दिक्षु सर्वासु सन्ति च ।
एकाम्रकवनोद्देशे तस्मिन् सन्निहितो ह्यहम् ।। ५२
यो मा पश्यति तत्रस्थ स याति परमां गतिम् ।
स्पृष्टमात्राद्भवेन्मुक्तिर्महापातकिनामपि ।। ५३
न यान्ति पुनरावृत्ति मद्भक्त्या सुसमाहिता ।
सक्षेपमिदमाख्याय स्वयमेव वृषध्वज ।। ५४
ससारद्रुमच्छेत्ताऽसौ तत्रैवान्तरधीयत ।
ततोऽह कृतकृत्यश्च हृष्यमाणो मुहुर्मुहु ।। ५५
शिवस्तु परया भक्त्या शिवध्यानपरायण ।
चिन्तयस्तदिद वाक्य महेश्वरसमीरितम् ।। ५६
प्रसाद देवदेवस्य सद्भाव सदयाक्षरम् ।
न तेन सदृश कश्चित् सर्वयज्ञफलप्रद ।। ५७
देवस्त्वन्यो महेशानि! त्रिषु लोकेषु विद्यते ।
विस्तरोऽस्य महाप्रश्नो विभूतेरीश्वरस्य च ।
ॐमित्येवमह वक्ष्ये आदिसूत्र यथार्थवत् ।। ५८

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया द्वितीयेंऽशे एकाम्रवर्णनो नाम एकादशोऽध्यायः[1] ।।

———

1 B₂ द्वितीयेंऽशे एकाम्रवर्णनो नाम प्रथमोऽध्याय ।

# द्वादशोऽध्यायः

## सनत्कुमार उवाच

श्रुत्वा ब्रह्मेरितामेता सुनृता[1] गतिमुत्तमाम् ।
चरित देवदेवस्य अजस्यैकाक्षरस्य च ॥ १
तत सा प्रणिपातेन नमस्कृत्य पुन पुन ।
ब्रह्माणमिदमूचे सा[2] हर्षगद्गदया गिरा ॥ २

## पार्वत्युवाच

लीलया व्यवहारेण यमसयमनेन वा ।
ये स्मरन्ति विरूपाक्ष तेभ्यो मम नमो नम ॥ ३
भूय कीतय मे तात पुराणप्रवर त्विदम् ।
यथात्र विहित पूर्व विस्तरेण समासत ॥ ४
प्रवेश क्षेत्रराजस्य वनस्य सरितश्च वै ।
ह्रदश्च परितश्चैव श्रोतुमिच्छामि पूर्वज ॥ ५
कथ ज्ञात तदुद्देश यत्रास्ते लिङ्गरूपधृक् ।
तत्सर्वं तत्त्वमाख्याहि पर कौतूहल मम ॥ ६

## ब्रह्मोवाच

शृणुष्वावहिता देवि क्षेत्रराजस्य साप्रतम् ।
स्वानुभाव यथा पूर्वमुपलब्धा गतिमया ॥ ७
त्रैलोक्यवन्दिते क्षेत्रे प्रथिते च चराचरे ।
एकाम्रकवने लिङ्ग महासिद्धिरनुत्तमा ॥ ८
आराध्य सप्रति प्राप्ता यक्षगन्धर्वपन्नगै ।
ब्रह्मर्षिदेवपित्राद्यैर्दर्शनात् स्पर्शनादपि ॥ ९

---

1 A1, C—सुभूता ।
2. C—तु ।

यस्य प्रासादान्मुनयो मोक्षमार्गमितो गता ।
अद्यापि न निवर्त्तन्ते लिङ्गस्पर्शनजै फलै ॥ १०
राजसूयाश्वमेधाभ्या या गति समुदाहृता ।
सा गतिर्दृष्टिमात्रेण एकाम्रकवने शिवम् ॥ ११
गतागताश्च वर्त्तन्ते चन्द्रसूर्यादयो ग्रहा ।
अद्यापि न निवर्त्तन्ते कृत्तिवासोऽर्च्चनोद्यता ॥ १२
सुजन्म देहमेतेषा सफलाश्च परिश्रमा ।
श्रुतमध्ययन श्लाघ्य ये चोपासितशकरा ॥ १३
कि चात्र बहुनोक्तेन सारश्लोकउदाहृत ।
दृष्ट्वा तु मन्मथरिपु प्राप्नोति सुरदुर्लभम् ॥ १४
कथ्यते सर्वशास्त्राणि विचार्य च पुन पुन ।
कृत्तिवास सम लिङ्ग न भूत न भविष्यति ॥ १५
पृथिव्या यानि तीर्थानि पुण्याम्यायतनानि च ।
चिद्रूपस्यास्य लिङ्गस्य कला नार्हन्ति षोडशीम् ॥ १६
एतल्लिङ्ग पर ब्रह्म वेदान्ते परिकीर्त्यते ।
दर्शनेनास्य पूयन्ते[1] वासवादि दिवौकस ॥ १७
जन्मान्तरसहस्रैर्यो नरो निर्द्धूतकल्मष ।
तस्य दृग्गोचर गौरि! दर्शन कृत्तिवासस ॥ १८
तस्य श्रीभुवनेशस्य धूपकालार्च्चित शिवे! ।
यद्द्रव्य ब्रह्मणो दृष्टमन्नाद्य स्थाप्यतेऽम्बिके! ॥ १९
महाप्रसाद तद् ज्ञेयमिय वै वैदिकी स्मृति ।
नैवेद्य तु मया लभ्य किं पुनर्मानवैर्भुवि ॥ २०
दर्शन नु समालभ्य मनुष्याणा च कि पुन ।
एतल्लिङ्ग न रुद्रश्च न चाह न च केशव ॥ २१
अर्द्धमात्रात्पर यच्च तद् ब्रह्मेद सनातनम् ।
यानि[2] सन्ति हि वाक्यानि शम्भोर्निर्माल्यभक्षणे[3] ॥ २२

---

1 $A_1$, $B_1$, C—पूजन्ति ।
2 $B_2$, C यान्ति ।
3. $A_1$, —दूषणे ।

तान्यत्र नैवाद्रीयन्ते लिङ्गे त्रिभुवनेश्वरे ।
कृच्छ्र चान्द्रायणा यज्ञा मासव्रतपरायणा. ।। २३

तत्फल समवाप्नोति निर्माल्य कृत्तिवासस ।
यदेकचूत इत्यादि श्रुत्वा यल्लिङ्गमुच्यते ।। २४

तदालोक्य विमुक्त स्याद् यदि वेद प्रमाणभाक् ।[1]
पर ब्रह्मेति यन्मार्गे वैष्णवै परिगीयते ।। २५

शैवे सदाशिवश्चेति तदिद लिङ्गमुत्तमम् ।[2]
नीलाद्रौ च यथा विष्णु सदा सन्निहित शिवे[1] ।। २६

तथैकाम्रवने नित्य लिङ्गरूपी सदाशिव ।
कि चात्र बहुनोक्तेन कृत्तिवास सम भुवि ।। २७

लिङ्ग न जायते कुत्र साक्षाद् ब्रह्मसनातनम् ।
स्वर्गे मर्त्ये च पाताले कन्दरे गिरिगह्वरे ।। २८

उद्देशेष्वपि देशेषु व्यक्ताव्यक्तेषु वाङ्मये ।
एकाम्रक सम क्षेत्र नराणामपवर्गदम् ।। २९

शिवप्रीतिकर नित्य न भूत न भविष्यति ।
सुसर[3]-क्षत्र-सयोगे मूर्त्तिभिश्चाष्टभि शिव. ।। ३०

एकाम्रके कृत्तिवासा सर्वामरमय स्मृत ।
अष्टायतमुख्येन त्वपरेण परेण च ।। ३१

एकोनकोटिलिङ्गैस्तु व्याप्त क्षेत्रमनेन च ।
दर्शनस्पर्शनै. स्तुत्या स्नानगन्धानुलेपनै ।। ३२

गड्डुकादि प्रदानेन पृथक् तस्य महाफलम् ।
आस्ते सर्वगुणावास सर्वकामफलप्रद ।। ३३

कृत्तिवासा स्वय साक्षादेकाम्रकवनोत्तमे ।
कोटिलिङ्गोद्भव क्षेत्र देवभूमि सनातनी ।। ३४

भूमीति नावमन्तव्य स्वर्णकूट हराश्रमम् ।
स्वर्णकूटं समारूढ. स्नात्वा विन्दुद्भवे ह्रदे ।। ३५

---

1. $B_2$—यदि वेदप्रमाणभाक् ।
2. $B_2$, लिङ्गमुच्यते ।
3. $A_1$, C—सुमर ।

कृत्तिवास नमस्कृत्य कृतकृत्यो भवेन्नर ।
सप्तजन्मकृत[1] पाप कर्मणा मनसा गिरा ॥ ३६
तत्क्षणात् क्षालयेत् प्राज्ञ कृत्तिवासप्रसादत ।
प्रदक्षिण नमस्कार पूजन कृत्तिवासस ॥ ३७
गीर्वाणाद्या प्रतीक्षन्ते कि पुनर्मानवादय ।
अथ सर्वगुणोपेत शङ्करानन्दद शिवे ॥ ३८
तदुद्देश प्रवक्ष्यामि यथावदनुपूर्वश ।
विन्ध्यशैलोद्भवा दिव्या पुण्यतोयवहा शिवा ॥ ३९
महानदीति विख्याता दुहितृशतशोभिता ।
इय सा प्लवगा धन्या पाविनी लोकभाविनी ॥ ४०
कलौ या परमेशानि गङ्गासमफलायते ।
तस्यास्तीरे महास्फीता धनाढ्या विविधा जना ॥ ४१
वेदपूर्णमुखा विप्रा अग्निहोत्रपरायणा ।
दीक्षिता क्रतुमुख्येन यज्ञकर्मरता सदा ॥ ४२
स्वदारनिरता शान्ता हिसास्तेयविवर्जिता ।
सत्यार्जवगुणाचारा देवतातिथिपूजका ॥ ४३
सिद्धाध्ययन-सम्पन्ना सर्वशास्त्रविशारदा ।
क्षत्रियवशसम्पन्ना प्रजापालनतत्परा ॥ ४४
धर्मान्वेषणदक्षास्ते यज्वानो भूरिदक्षिणा ।
कृषिगोरक्षवाणिज्यैर्वैश्या पण्योपजीविन ॥ ४५
शूद्रा शुश्रूषणरताश्चातुवर्ण्यमनुक्रमात् ।
धर्मप्रवीणभूयिष्ठा सम्यक् वर्षति वासव ॥ ४६
शस्यपूर्णा मही तत्र हृष्टपुष्टजनाकुला ।
युवत्यश्चारुवेशाश्च देशजाभरणान्विता ॥ ४७
कुलशीलगुणोपेता रूपयौवनगर्विता ।
ताम्बूलपर्णदशना सीमन्तालकभूषिता ॥ ४८
बाह्वोश्च वलयाक्रान्ता पीनश्रोणी पयोधरा ।
हसलीलागतिश्रेष्ठा कम्बुग्रीवा सुमध्यमाः ॥ ४९

1. $B_2$—कोटिजन्मकृत ।

कामिन्यश्च सुतवग्यो रोमराजी सुदुर्लभा[1]।
कुण्डलाभरणाश्लिष्टा कर्णपत्रावतसिका.॥ ५०
स्मेरगण्डस्थलीशुभ्रा कर्णान्तायतलोचना.[2]।
सर्वाभरणसम्पन्ना मदमन्मथदीपिता.॥ ५१
स्फुरितामलबिम्बोष्ठ्य सुरसा दशनोज्ज्वला।
ललाटविपुला स्निग्धा' पूर्णेन्दुसदृशानना॥ ५२
तिलकाङ्कितरेखाश्च कुटिलालकमूर्द्धजा।
विचित्रवासवसना पद्मकोषसमप्रभा॥ ५३
सुस्रजश्चारुलिप्ताश्च सौभाग्यरतिलालसा।
स्त्रियश्चैव मुदायुक्ता. स्वजातिविहिता यथा॥ ५४
स्वै स्वैश्च पुरुषै सार्द्धं रमन्ति स्वगृहेषु च।
तस्या नद्या सुताश्चैका दक्षिणेन विनिस्सृता॥ ५५
दक्षिणावर्त्तमालम्ब्य[3] दक्षिणार्णवगामिनी।
पुण्यरेखा सुगन्धा सा सौरभी निम्नगा शुभा॥ ५६
नाम्ना गन्धवती ख्याता पुण्यतोया सरिद्वरा।
तत्तीरे सन्ति वै वृक्षा पुष्पिताग्रा' सुवर्च्चस॥ ५७
विशाला सुदला स्फीता हर्म्याकारा फलान्विता।
गुल्मसान्द्रलताकीर्णा कोचकाक्रान्तभूमय॥ ५८
लताकुलानताशाखा सदला वनराजय।
पुष्पिताग्रा द्रुमोत्तुङ्गा सालतालामलान्विता॥ ५९
देवदारुप्रियग्वादिकिंशुकाशोकमण्डिता।
तिलकै: कणिकैस्तुङ्गै: शमीभूर्जसपाटलै॥ ६०
इत्यादि विविधैर्वृक्षै शोभिता समलकृता।
तस्यास्तीराददूरेण सर्वभोगसमन्वितम्॥ ६१
एकाम्रक नाम वन क्षेत्र जानीहि पार्वति!
नानामृगगणाकीर्णं खगानेक[4] विराजितम्॥ ६२

---

1 $B_2$ रोमराजिषु सयुता।

2. $A_1$, $B_1$, C—कर्ण आयतलोचना।

3 $B_2$—दक्षिणार्णवमालम्ब्य।

4 $A_1$, $B_2$ C—खगानीक।

शार्दूलभीमनिनद　　ऋक्षजम्बकनादितम् ।
गजैः　सिंहैर्वराहैश्च　श्वापदैः शरभैस्तथा ।
तीरजैः　सानुजैर्वृक्षैः　समन्तात्　परिवारितम् ॥ ६३
हंसबर्हिणसंघुष्टैश्चकोरैः　सह　नादितम्[1] ।
जीवजीवकसारङ्गैर्हंसपक्षिविहङ्गमैः　　॥ ६४
केकाकूतिप्रलापैश्च　निर्झरोद्गारमिश्रितैः ।
अन्यैश्च　विविधैर्दिव्यैर्धनिभिः　समलङ्कृतम् ॥ ६५
गन्धवत्याश्च सरितः　पवित्रायाश्च　शम्बरैः ।
सगमाच्छलिलैः　शुभ्रैः रामज्जकरिणीकरैः ॥ ६६
भीमावर्त्तसुगम्भीरैः　साट्टहासाम्बुदस्वनैः ।
तिमिंगिलकुलग्राहैस्तिमिंगिलकुलाकुलैः　　॥ ६७
कल्लोलकलिलैः शुभ्रैः　समन्तैः　पृथुलायतैः ।
मनोवृत्तैः　सुविस्पष्टैः　रम्यपुण्यजलाप्लुतैः ॥ ६८
सोपस्कारमनुप्रासैर्धौतामलशिलातलैः　　।
शिशुमारकरोत्कर्मैर्वाजिकुञ्जरगर्जितैः　　॥ ६९
प्रतिध्वनिविमिश्रैश्च　गिरिकन्दरगर्जितैः ।
ग्रस्तत्तटोभयैर्मन्दवातकम्पितपुष्करैः　　॥ ७०
लवणोदधिमव्यग्रैर्भ्राजमानो　नगोत्तम ।
स्वर्णकूटेति　विख्यातः　शिवक्षेत्रं　सनातनम् ॥ ७१
तत्र　साक्षात्स्वयं देवो लिङ्गमूर्त्तौ व्यवस्थितः ।
अनादिः　परमेशानो　यत्र　विश्वं　प्रतिष्ठितम् ॥ ७२
क्षेत्रराजं　समासाद्य स्वयं सर्वात्मनात् प्रभुः ।
आस्थाय　रुचिरां मूर्त्तिं　भूतानुग्रहकोऽस्ति　च ॥ ७३
परं ज्योतिः　परं　धाम　अमृतं　शाश्वतं　ध्रुवम् ।
ध्यानगम्यं परं ब्रह्म　यं　वै　पश्यन्ति　योगिनः ॥ ७४
लिङ्गवान्　स　सुरः साक्षात् सर्वेषां प्रपितामहः ।
मूर्त्यमूर्त्तिमयो　नित्यो　विश्वस्याधारः　ईश्वरः ॥ ७५
सांगैश्चतुर्भिर्वेदैश्च　यत् प्रोक्तः पुरुषः पुरा ।
अनादिः　परमं　ज्ञेयं　यच्च　वेदान्तनिश्चयम् ॥ ७६

1. $A_1$, C—शिखिनादितम् ।

यत् वै ध्यात्वा च मुनय. सविशन्त्यपुनर्भवम् ।
तच्च साक्षात् स्वय ब्रह्म-लिङ्गमूर्त्तौ व्यवस्थितम् ।। ७७
न तत् पश्यन्ति भूतानि स्थावराणि चराणि च ।
अनादिनिधनादृश्य यच्छिव परम पदम् ।। ७८

**ब्रह्मोवाच**

कथयाम्यथ देवि! त्वानुभूत यथा मया ।
तस्मिन्नेकाम्रकवने कैलाससदृशे पुरा ।। ७९
अन्तर्हिते भगवति! द्रष्टु तल्लिङ्गमुत्तमम् ।
तत्रागच्छमह देव हृदि ध्यायन्महेश्वरम् ।। ८०
भूयोभूयस्त्वविघ्नेन स्वर्णकूटे प्रयत्नत ।
आम्रच्छाया शतावृत्त भ्रमामि स्म वने तदा ।। ८१
अन्वहन्तु न तद्दृष्ट्वा यथोदिष्ट कपर्द्दिना ।
तत्राह भृशमुद्विग्नो गृहीत निज जीवितम् ।। ८२
विश्वात्मान न पश्यामि तदाह गिरिनन्दिनि! ।
विश्वात्मान न पश्यामि अहो मोहमयो ह्यहम् ।। ८३
एकोनकोटिलिङ्गैस्तु युक्त दर्शनमोक्षदे ।
आम्रच्छायासु पर्यन्त दिव्यपीठमुदाहृतम् ।। ८४
हेमकूटोत्तमस्तुङ्ग स्थलप्राय मनोहर ।
लवणाब्धेरय वासो गन्धनद्या परीसरे ।। ८५
उद्दिष्ठो भगवानेव स्वयमेव पिनाकधृक् ।
सान्निध्योस्तत्र नित्योऽह लिङ्गमूर्त्या प्रयत्नत ।। ८६
सुवर्णनिकरोल्लासो मरीचिविकचोज्ज्वल ।
लिङ्गाष्टकस्य मध्यस्थो वरेण्य परमात्मक ।। ८७
वृषभ स्वयमेवात्र ऐशानीं दिशमास्थित· ।
भूमावेवमय देश स्वय देवेन कीर्त्तित ।। ८८
विधिना तु यथोक्तोऽय देशो वै शम्भुना पुरा ।
तथापि नो मया देवि! क्रमणैव न लक्षित ।। ८९
अहो मम महत्पाप बहुल जन्मसञ्चितम् ।
व्यर्थं परिश्रम जातमनाराधितशंकरम् ।। ९०

धिगित्येव न सज्ञापि मन्दात्मा व्यर्थजीवित ।
तिष्ठन्न मन विरूपाक्ष त्यक्ष्यामि निज जीवितम् ।। ९१
एव पुन पुनस्तूचे नैव पश्यामि पार्वति । ।
तदाह विमना भूत्वा नि श्वस्योष्ण पुन पुन ।। ९२
आम्रमूले ततो तिष्ठमेकाकी विगतप्रभ ।
अतीव मनसोद्विग्नश्चित्त व्याकुललोचन ।। ९३
कथ पश्यामि तल्लिङ्गमित्युक्त्वाऽह तदाम्बिके । ।
निश्चय नाधिगच्छामि सशयात्मा विमूढधो ।। ९४
सुस्वापाह ततो देवि । चर्म विस्तार्य भूतले ।
न यास्याम्यन्यतोऽवश्य मन सकल्प्य सस्थित ।। ९५

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे ब्रह्मोद्विग्नो नाम द्वादशोऽध्याय [1] ।।

---

1. द्वितीयेंऽशे ब्रह्मोद्विग्नो नाम द्वितीयोऽध्याय, ।

# त्रयोदशोऽध्यायः

## ब्रह्मोवाच

स्थितोऽहं तन्मना भूत्वा दिनानि दश पञ्च च ।
षोडशाहं निशाशेषमगच्छञ्च ततोऽम्बिके ॥ १

ब्राह्म्ये मुहूर्त्ते सम्प्राप्ते प्रातः सवनमुत्थिते ।
मय्यसौ भगवान् रुद्रः स्वरूपं प्रकटीकृतम् ॥ २

क्षीरकुन्देन्दुशङ्खाभः शुद्धस्फटिकनिर्मलः ।
भस्मोद्धूतो विरूपाक्षः शार्दूलाजिनवस्त्रधृक् ॥ ३

द्विरदार्द्रात्मकं चर्म पाणिभ्यां मूर्द्धनि वै धृतः ।
गगने तारकाव्याप्ते दशदोर्द्दण्डसत्प्रभः ॥ ४

पिनाकं शूलं मेषाहीं परशुं डमरुं तथा ।
वराभयौ महेशानि बिभ्रदष्टभुजैः शिवः ॥ ५

भालशोभितचन्द्रार्धः स्मितवक्त्रः कृपानिधिः ।
श्वेताद्रिशृङ्गसंकाशः साट्टहास इवाम्बुदः ॥ ६

विभूतिं तस्य वक्ष्येऽहं शृणुष्व गदतो मम ।
पादपीठतलस्थौ च सुरासुरनमस्कृतौ ॥ ७

स्फुरन्तौ नखचन्द्राभौ मयूखविकचोज्ज्वलौ ।
नूपुराह्लादसंयुक्तकम्बलाश्वतरौ शिवे ! ॥ ८

जयन्तश्चोरगश्रेष्ठः पञ्चास्यश्चारुदर्शनः ।
स्वस्तिको हस्तिकर्णश्च मेखलः कनकद्युतिः ॥ ९

चित्रास्यः चारुचित्रास्यौ द्वावेतौ वासबन्धनौ ।
यज्ञोपवीतो नागेन्द्रो वासुकिः स्वयमेव च ॥ १०

मणिनागो महानागो गोकर्णः कर्णपिङ्गलः ।
शङ्खपालः स्वयं शङ्खः पद्मः कुलिक एव च ॥ ११

दशशीर्षो महाशङ्खः सर्वे कालार्कसन्निभाः ।
मणिनागादयः श्रेष्ठा दशैते कटकाश्रिताः ॥ १२

ग्रीवाया च महापद्म शङ्खचूडस्तथोत्तरे ।
कुण्डलाभ्या च चित्राभ्या कूटनाभ महाविषौ ॥ १३

धनञ्जय पृष्ठतो वै महाश्वेतोत्तरच्छद ।
कर्णान्तरे सुचित्रास्यो ग्रहमण्डलमानधृक् ॥ १४

कर्कोटक करस्थस्तु जटाबद्धो हि तक्षक ।
सूर्याचन्द्रमसौ देवौ जटामण्डलसस्थितौ ॥ १५

तत्र त्रिपथगा पुण्या भ्राजमाना त्रिलोचने ! ।
सा गङ्गा विधृता शक्त्या या महोरगवन्दिता ॥ १६

विस्पष्टा सा वभौ रेखा चित्रमत्यन्तसुप्रभा ।
पाविनी सर्वलोकाना शिवस्यानन्दकारिणी ॥ १७

एता विभूर्ति विभ्रच्च विश्वात्मा विश्वतो मुख· ।
दुष्प्रेक्ष्यस्त्वतितेजा स प्रादुरासीन्ममाग्रत ॥ १८

तमपश्य महादेव प्रीत्या भक्तिसमन्वित ।
प्रणम्य शिरसा भूमौ भूयो भूय प्रदक्षिणम् ॥ १९

ततोऽहमब्रुव चेद सर्वज्ञ परमेश्वरम् ।[1]
द्रष्टुमिच्छाम्यह देव यदुक्त च त्वया पुरा ॥ २०

एतच्छ्रुत्वा महादेव· कृपया परया मम ।
इत्युवाच पर वाक्य सर्वलोकहितप्रदम् ॥ २१

## श्रीशङ्कर उवाच

चतुर्मुख ! उदाराङ्ग ! शृणुष्व गदतो मम ।
इदमव्यक्तसार वा अनाख्येयमगोचरम् ॥ २२

माहात्म्य मम भो ब्रह्मन् ! दुर्विज्ञेयं सुरासुरै ।
अन्यैश्च सिद्धगन्धर्वै· कल्पकोटिशतैरपि ॥ २३

परवन्तोऽपि ये देवा योगिनो गतकल्मषा ।
मृगयन्तो न पश्यन्ति अस्मिन् क्षेत्रे ममानघ ! ॥ २४

लिङ्ग वा यदि वा मूर्त्ति दुर्लभ च पितामह ।
यतस्त्वा च प्रसन्नोऽह पश्य मे लिङ्गमुत्तमम् ॥ २५

---

1. $B_2$—परमेश्वरि! ।

तथा विद्धि त्विम देह बह्वाश्चर्यमय शिवम् ।
अनन्तं च शिव पारमप्रमेयमनुत्तमम् ॥ २६

## ब्रह्मोवाच

एव देवस्य वाक्य तच्छ्रुत्वा चाह वरानने ! ।
प्रविश्य तस्य देहान्त समन्तादवलोकितः ॥ २७
सप्तस्वर्गान् सप्तपातालानन्तरीक्षानि चैव हि ।
सप्तद्वीपवतीमूर्वीं तीर्थान्यायतनानि च ॥ २८
सागरान् सप्त सरित मनोज्ञानि सरासि च ।
मुनिसिद्धाश्रमाद्यादीन् गन्धर्वनगरोपमम् ॥ २९
विद्याधरोरगान् यक्षान् भूतग्रामाश्चतुर्विधान् ।
क्रमत· पश्यमानोऽह तीर्यंक क्रूरमथान्तरम् ॥ ३०
लवणोदधिपर्यन्त गन्धनद्या समागमे ।
सगमोच्छलित तोय मीनग्राहझषाकुलम् ॥ ३१
वनस्पतिं च हेमाभ रत्नविद्योतभास्वरम् ।
दिव्यस्थानमनौपम्य स्वर्णकूटाद्रिमूर्धनि ॥ ३२
मण्डल विततच्छायामाम्रस्यैकस्य पार्वति ! ।
एकोनकोटि लिङ्गैस्तु व्याप्त देश सुशीतलम् ॥ ३३
तरुच्छाया तदा तत्र नोपसर्पन्ति रश्मय. ।
अत्रास्ते भगवान् रुद्र स्वतन्त्र स्वयमध्यग ॥ ३४
पूर्वदृष्टेन रूपेण भूयस्तत्रैव तद्विधम् ।
दृष्ट्वा बहिर्गतोऽह च तन्मयश्च तदन्तिके ॥ ३५
देवो लिङ्गमयो दृष्टो देहवाश्च तदा मया ।
त्रिवर्णैरभिरूपाढ्य सर्वतेजोनिधिर्विभु ॥ ३६
लिङ्गदर्शनमात्रेण व्यामोहविगतो ह्यहम् ।
तत्क्षणात् स्मृतिरप्यासीत् ज्ञातोऽह स्वयमेव च ॥ ३७
लिङ्गान्यष्टौ ददर्शाह कृतकृत्योऽन्तरात्मना ।
भूय कुतूहलादष्टौ प्रत्येक तु समर्च्चंत· ॥ ३८
अर्च्चयित्वा यथान्याय सम्यगर्घ्येण शास्त्रत ।
पुनस्तस्योपपन्नोऽह दृष्टलिङ्गस्य चान्तिके ॥ ३९

प्रार्थितो बहुमानेन मया यज्ञपतिस्तदा ।
बहुदण्डप्रणामैश्च भक्त्या स्तोत्रेण शक्तितः ॥ ४०

## ब्रह्मोवाच

विरागमूल बहुशोकमोहमादौ सुरक्त चिरमावसानम् ।
मिथ्यामय शकर! मोहपाश छिनद्धि हे नाथ! उपैमि दिव्यम् ॥ ४१

त्वामक्षर शाश्वतमीशितार मोहार्कवर्णस्तमस परस्तात् ।
ज्योतिर्मय दिव्यमनोपमस्थमनादिमीश शरण प्रपद्ये ॥ ४२

पर च पार परत परस्तान्नान्त न मध्य न पुनस्तवादि[1] ।
भवाब्धिमग्नस्य जनस्य पोत त्रिलोचन त्वा शरण प्रपद्ये ॥ ४३

सूक्ष्मातिसूक्ष्म निहित परस्ताद् वेदान्तकृत् वेदविदो वदन्ति ।
यत[2] पुराण पुरुष बरिष्ठ त्वा कामशत्रु शरण प्रपद्ये ॥ ४४

वर वरेण्य च चराचरेभ्यस्त्वामस्य विश्वस्य पर च पारम् ।
रजस्तमोभ्या विगतं च सत्त्व सत्यप्रद वै शरण प्रपद्ये ॥ ४५

त्वत्त प्रसूति सचराचरस्य विश्वस्य विश्वस्य विष्णोर्मम्
चापि देव! ।
त्रैगुण्यहीनस्त्वमसीश! सस्थ त्वामर्धमात्रे शरण प्रपद्ये ॥ ४६

सहस्रशीर्ष त्रिसहस्रनेत्र सहस्रबाहुरूपद त्वगम्यम् ।
देवैश्च सर्वै किल सेव्यमान त्वा हसरूप शरण प्रपद्ये ॥ ४७

सृष्टौ सृजन्त जगता विराट विष्णुस्वरूपेण तु पालक च ।
रुद्रस्वरूपेण च सहरन्त त्वमादिदेव शरण प्रपद्ये ॥ ४८

शिवाष्टकमिद पुण्य मम वक्त्राद् विनिर्गतम् ।
शिवस्य पुरतो भूत्वा ये जपन्ति समाहिता ॥ ४९

तेषा तुष्टो भवेद्रुद्र प्रसादमधिगच्छति ।
सवत्सरेण सिद्धि च ददात्यभिमत फलम् ॥ ५०

स्तोत्रावसाने देवेशस्तुष्ठो मामब्रवीदिदम् ।
किमिच्छसि जगत्कर्त्तरचिराद् ब्रूहि पद्मज! ॥ ५१

---

1 $A_1$, $B_1$, C—मही प्रकार ।

2 $B_2$—युक्त ।

ततो मे भक्तिनम्रेण विज्ञात. परमेश्वर ।
प्रसाद कर्त्तुमिच्छामि भवतो लिङ्गमुत्तमम् ॥ ५२

पञ्चायतनमुख्य च सहस्रममल[1] शिवम् ।
एतन्मे इप्सित देव ! प्रसाद कर्त्तुमर्हसि ॥ ५३

अज्ञातं च विधास्यामि प्रसीद परमेश्वर ! ।
सर्वेषा वरदातासि महादेव ! नमोऽस्तुते ॥ ५४

इति मद्वचन श्रुत्वा देवदेवस्तदाम्बिके ! ।
इदमाह पर वाक्य हर्षयन्निव मा किल ॥ ५५

श्रीशकर उवाच

मद्वाक्य परम चेद निशामय पितामह ! ।
अव्यक्तमिह मामेव नान्य पश्यति त्वदृते ॥ ५६

यथेष्ट कोटिलिङ्गानि कुरुष्वाभिमत तव ।
अहमेव पृथक् भूत्वा तिष्ठाम्यत्र जगत्पते ! ॥ ५७

आम्रच्छायामिमा शस्तामस्मत्प्रीति प्रवर्धते ।
प्रसादाच्छतत चात्र स्थितिरेषा गुणात्मिका ॥ ५८

कृतत्रेतायुगे जाते स्वय शीर्यति पादप ।
द्वापरे तु युगे प्राप्ते स्थितिरभ्रात्मिका स्मृता ॥ ५९

सूर्याचन्द्रमसौ देवौ पश्यन्तौ सतत तदा ।
रेजाते तेजसा तस्माद्दर्शस्पर्शगुणान्वितौ ॥ ६०

वायु शिवत्वमाप्नोति लिङ्ग स्पृष्ट्वा तदानघ ! ।
मदाज्ञया तो वाग्विद्या[2] मेध्यान्मेध्यतरास्तु ते ॥ ६१

प्राप्ते कलियुगे ब्रह्म श्चन्द्रो यास्यति मेदिनीम् ।
भूत्वा मनुजनाथोऽसावर्च्चयिष्यति लिङ्गकम् ॥ ६२

भक्तितः प्रवरा पूजा कारयिष्यति सुव्रत ! ।
प्रासाद रुचिर शुभ्र शुद्ध शैलमय तथा ॥ ६३

शिवयज्ञपरो नित्य कीर्तिमान् सुबहुश्रुत
प्रतिष्ठयिष्यतीद स लिङ्गं त्रिभुवनेश्वरम् ॥ ६४

---

1 $A_1$, C—चासदृश्यममल ।

2 $B_2$—वा विद्या मेध्यमेध्यतरास्तु ते ।

मदाज्ञयानुरूपेण दर्शस्पर्शविवर्जितम् ।
लिङ्ग शैलमय ब्रह्मस्ततो जानाति मामयम् ॥ ६५
शशाङ्कोऽनन्तमेधावी भविष्यति शिवात्मक ।
पृथिव्या यानि लिङ्गानि अर्च्चयिष्यत्यतन्द्रित ॥ ६६
कीर्त्तिरव्याहता लोके स्थास्यते विबुधेश्वर ! ।
अलमध्यवसायस्ते दुष्करोऽय पितामह ! ॥ ६७

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहितायां द्वितीयेऽशे लिङ्गदर्शनो नाम त्रयोदशोऽध्याय[1] ॥

---

1 $B_2$ द्वितीयेऽशे लिङ्गदर्शनो नाम तन्त्रयोऽध्याय ।

# चतुर्द्दशोऽध्यायः

## ब्रह्मोवाच

इत्युक्तो देवदेवेन शिवेन स्वयमेव च ।
ततोऽह प्रणिपातेन विज्ञात शिवमव्ययम् ॥ १

अस्मिन् क्षेत्रवरे नाथ ! इच्छामि भवतोऽर्च्चनम् ।
प्रासाद च यथोद्दिष्ट कर्त्तु च शकर परम् ॥ २

देवदेव ! महादेव ! त्वद्वाक्यात् परमामृतात् ।
कृतकृत्यो भविष्यामि नाहमुपदेश प्रचक्ष्व मे ॥ ३

इति मद्वचनं श्रुत्वा देवदेवस्ततोऽम्बिके ! ।
उवाच परम वाक्य वाक्यज्ञो हर्षयश्च माम् ॥ ४

## श्रीशकर उवाच

चतुर्वक्त्र महाप्राज्ञ साध्विद समुदाहृतम् ।
प्रभाव क्षेत्रराजस्य शृणुष्व गदतो मम ॥ ५

एकाम्रकवन नाम प्रख्यात भुवनत्रये ।
मम क्षेत्रवर श्रीमान् नदी गन्धवतीतटे ॥ ६

स्वर्णकूटगिरे पृष्ठे लवणोदधिसन्निधौ ।
सयोगोऽय सुदुष्प्राप्यो लिङ्गछाया वनस्पते ॥ ७

मम स्थान पर विद्धि मर्त्यलोके ह्यनुत्तमम् ।
भौमस्वर्गमिद सम्यक् प्रवदन्ति मनीषिणः ॥ ८

स्वर्गे मर्त्ये च पाताले पर्वते गहने वने ।
अन्तरीक्षे जले भूमौ पुण्यक्षेत्राश्रमेषु च ॥ ९

एकाम्रकाननाच्चैव क्षेत्रमन्यच्च मुक्तिदात् ।
नाधिक त्रिषु पश्यामि सममेव न विद्यते ॥ १०

कोटिलिङ्गै शुभै श्लक्ष्णैर्महाप्रलयशोभितै[1] ।
मम स्थानैरनेकैश्च जुष्ट देवगणै सदा ॥ ११

---

1. $A_1$, C, परिणतै , $B_2$ परीणतै. ।

ममैकाम्रवने मर्त्त्या ये त्यजन्ति कलेवरम्।
मया सह प्रमोदन्ते ते कैलासे नरोत्तमा ॥ १२

मद्दक्षिणे जगत्कर्त्त· कृत्वाप्यनशनक्रियाम्।
प्रयान्ति मम सालोक्यमपि पातकिनो नरा ॥ १३

साधका विधिपूर्वेण मम स्मरणतत्परा।
विशन्ति मयि तूर्णं हि समुद्रेष्विव निम्नगा ॥ १४

महापातकसयुक्ता सर्वभूतनिषेधका।
मल्लिङ्गस्पर्शनादेव ते यान्ति परमा गतिम्॥ १५

जलमूलफलाहारै. पक्षमासोपवासकै।
यमसयमसयुक्तैरेकान्तनिरतै सदा ॥ १६

हरिध्यानपरैर्युक्तै दिव्यवर्षशताधिकै।
या गतिं योगिनो यान्ति वीतरागा विकल्मषा ॥ १७

अनेकजन्मससिद्धया दुर्लभ पदमाहितम्।
तत्क्षणात्तत्पद यान्ति दर्शनान्मम सुव्रत ॥ १८

वाङ्मये यानि कर्माणि सुकृतानि बहूनि च।
मम तान्यभिषेकस्य कला नार्हन्ति षोडशीम्॥ १९

राजसूयाश्वमेधाभ्या यत्फल समुदाहृतम्।
तत्फल समवाप्नोति शुचिर्मर्त्यो ममर्च्चनात्॥ २०

साक्षाच्चैव पर ब्रह्म ममेद लिङ्गमुत्तमम्।
सर्वपापप्रशमन मोक्षैकफलदायकम्॥ २१

एकाम्रकवने विद्धि मल्लिङ्ग मुक्तिदायकम्।
न विश्वासपथ याति नृणा पापवशादिह ॥ २२

सर्वभावान् परित्यज्य सच्चिदानन्दरूपवान्।
सत्य तिष्ठेयमत्राह लिङ्गे त्रिभुवनेश्वरे ॥ २३

कोटिजन्मान्तरे येषा नास्ते पापलव· कदा।
दर्शने मम भो ब्रह्म स्तेषा भुक्ति प्रजायते ॥ २४

एकाम्रकवने रम्ये स्वर्णकूटाद्रिमूर्धनि।
महाप्रसादकल्लिङ्गमलभ्य तु सुरासुरैः॥ २५

अत्र मे क्षेत्रवर्ये च महती प्रीतिरुत्तमा ।
महाप्रलयकालेऽपि न त्यजामीदमुत्तमम् ॥ २६

उत्पातानि च यानि स्युर्लोकाना क्षयकारके ।
न तानि प्रभवन्त्यत्र क्षेत्रे श्रीभुवनोत्तमे ॥ २७

एकाम्रकानने काश्या सेतौ च प्रणवेश्वरे ।
स्थितिर्मे सर्वदा नित्या सत्य सत्य वदाम्यहम् ॥ २८

ज्योतिर्लिङ्गानि चान्यानि यानि सन्ति धरातले ।
तेषामपि च स्थानानि प्रीतिदानि ममाब्जज ! ॥ २९

सर्वेषा चैव लिङ्गाना मुख्य त्रिभुवनेश्वरम् ।
ममात्र दर्शन यत्तु महापातकनाशनम् ॥ ३०

एकाम्रे मम ये लिङ्ग श्रद्धया न स्तुवन्ति च ।
तानह पातयिष्यामि नरकेषु महीक्षयात् ॥ ३१

जन्मान्तरसहस्रेषु यानि पापानि सन्ति हि ।
नृणा तानि क्षय यान्ति मम दर्शनतो[1] ध्रुवम् ॥ ३२

श्रद्धया हेलया वापि यदेकाम्रवने मम ।
दर्शन कोटियज्ञाना फलद तु न सशय ॥ ३३

मद्दर्शनकृता नृणा निष्पापाना पितामह ! ।
प्रसन्नोऽह भविष्यामि सत्य सत्य पुन पुन ॥ ३४

प्रसन्ने च मयि ब्रह्मन् दु खक्लेशौ प्रणश्यत ।
सासारिक महाकष्ट न भूय प्रतिपद्यते ॥ ३५

कृते दर्शनमात्रेण मोक्षमिच्छन्ति मे नरा ।
त्रेताया स्पर्शनात् सिद्धिर्मुक्तिदोऽह नृणा किल ॥ ३६

द्वापरे पूजितो नभ्यो दास्याम्यभिमत फलम् ।
प्रसादमधिगच्छामि कलौ शुश्रूषणाद्ध्रुवम् ॥ ३७

पुण्यैर्बहुविधैरिष्टैर्यज्ञैर्विपुलदक्षिणै ।
यत्पद दीक्षिता यान्ति शतसोमैरनुक्रमात्[2] ॥ ३८

तत्पद कृष्णपक्षस्य अष्टम्या मासि कार्त्तिके ।
मामर्च्चयित्वा विधिवन्नरा यान्ति न सशय ॥ ३९

1 $B_2$—सन्दर्शने ।

2. $B_2$—शतहोमैरनुक्रमात् ।

एव सर्वं बहुविध पुण्य चैव तवाग्रत ।
कथित च मया ब्रह्मन्नमोघत्व सदास्तुते ॥ ४०

सत्य सत्य पुन सत्य जगद्योने पितामह ! ।
भवतो मम विष्णोश्च नास्ति भेद शृणुष्व च ॥ ४१

निर्भेदावयवा वा हि भवानहमतो यतः ।
नित्यमाराधितोऽह च स्वानुभाव परतप ॥ ४२

हितात्मान॰ सदा लोका भवन्ति भवसक्रमे ।
अविभिन्नमिद देह नित्यमाराधितस्त्वया ॥ ४३

तथापि मनस प्रीति भवाश्च कर्त्तुमब्जज ! ।
अस्मिन् क्षेत्रवरे रम्ये युक्तमेव सुरेश्वर ! ॥ ४४

आम्रच्छायासु पर्यन्त दिव्यपीठमुदाहृतम् ।
मोक्षद सर्वलोकाना सर्वपापविनाशनम् ॥ ४५

अह सर्वत्र तिष्ठेयमस्मिन् क्षेत्रे विशेषतः ।
कुरुष्वाभिमत ब्रह्म स्त्वन्मनो यत्र रोचते ॥ ४६

सर्वेषा चैव लोकानामत्र पुण्य पितामह ।
अन्यत शतसाहस्र्य गुणित साधित स्मृतम् ॥ ४७

प्रासाद य॰ करोत्यत्र प्रतिष्ठयति देवताम् ।
कुलैकविंशमुद्धृत्य श्रीमन्ममपुर व्रजेत् ॥ ४८

अन्यक्षेत्रात् शतगुण स्वर्णकूटाश्रमे मम ।
प्राप्नुवन्त्यमला सिद्धि प्रवदन्ति मनीषिण ॥ ४९

प्रासादे भवत श्रद्धा सम्यक् भावोपलक्षिता ।
कृता मया इय ब्रह्मन् ! शृणुष्व गदतो मम ॥ ५०

लिङ्गस्यास्य त्वदूरेण ईषत् प्रचलिताम्बरे ।
धन्वन्तरसहस्रैक त्रिशोत्तर शतान्तरे ॥ ५१

कुरुष्वायतन तत्र दिव्यमाप्नोति तन्मम ।
प्रतिष्ठापय[1] मल्लिङ्गमात्मना यत् सुरोपितम्[2] ॥ ५२

दिव्य प्रीतिकर युक्त सर्वकामिकमुत्तमम् ।
प्रीतिगृह्णामि तत् सर्वं पूजा तत्र पितामह ॥ ५३

1 $A_1$, C—प्रतिष्ठ त्व च ।

2. $B_2$. आत्मराया सुरोपित ।

प्रासाद प्रथमोऽय हि क्षेत्रे ज्येष्ठ सनातन ।
आद्य पूज्यतमो लोके भविष्यति तवानघ ॥ ५४
ब्रह्मेश्वर इति ख्यात सर्वासुरसुरार्च्चित ।
अष्टातयनमुख्योऽसावस्मिन् क्षेत्रे निरामये ॥ ५५
सान्निध्यस्तत्र एवाह तव वीर्यात् पितामह ।
भवामि नात्र सदेहो निश्चित वचन मम ॥ ५६

ब्रह्मोवाच

स च मामित्युदाहृत्य देवदेवो जगत्पति ।
हर्षयन्नेव भूतानि तत्रैवान्तरधीयत ॥ ५७
अन्तर्धान गते देवे त्वह ध्यानगतो मुहु ।
चिन्तयस्तस्य देवस्य वचन चामृतोपमम् ॥ ५८
दिशमालोकयामास आम्रच्छाया समन्तत ।
विततो क्रोशमत्यर्थ परिचक्राम वै तदा ॥ ५९
पूर्वस्याश्च दिशोभागे ऐशानी दिशमाश्रिताम् ।
ददर्श विपुला भूमि मेरो शृङ्गमिवापरम् ॥ ६०
मेध्यमक्लिष्टसुश्लक्ष्ण[1] वास्तुलक्षणमुत्तमम् ।
प्रशस्त तत्र वै दिव्यमाश्रम चोदकाश्रयम् ॥ ६१
ता दृष्ट्वा च मुदायुक्तो भूमि सस्कृत्य शास्त्रत[2] ।
विश्वकर्मा तत शीघ्र स्मृत शिल्पिवरो मया ॥ ६२
आजगाम तत सो वै पुरतो मम सस्थित ।
विश्वकर्माञ्जलि वद्ध्वोवाच कि करवाणि ते ॥ ६३
आज्ञापयाचिरान्नाथ ! सर्वदेवनमस्कृत ।
यदुच्यते हि भवता तच्च सम्पादयाम्यहम् ॥ ६४
इति तद् वचन श्रुत्वा तमुवाचाहमम्बिके ! ।
शृणु मद्वचन चेद तारक सुरवर्धकिन् ॥ ६५
आज्ञातोऽह च देवेन हरेणामित्रघातिना ।
प्रासाद देवपूजार्थं लिङ्गस्थापनकाय च ॥ ६६

1. $A_1$, C—मध्यमक्लिष्टसुश्लिष्ट ।
2. $B_2$ यत्नत ।

तमह भक्तियुक्तेन करिष्यामीत्युवाच ह ।
न वेद्मि शिक्षितु चात्र भवान् जानाति सुव्रत ! ॥ ६७

कुशलस्त्व सदात्यर्थं ज्ञातविद्य सुशिक्षित ।
कर्मज्ञोऽसि विधिज्ञोऽसि वेदविद्यागमात्मक ॥ ६८

पद्महस्तोऽसि श्लक्ष्णोऽसि[1] देवानाकीर्त्तिवर्धन ।
सर्वेषा पूज्यपात्रोऽसि पूज्यानामपि सत्तम ॥ ६९

उद्यानमठहर्म्याणा प्रासाद-प्रतिवेश्मना ।
कर्त्ता त्वमसि शिल्पीन्द्र यथापूर्वं यथेच्छया ॥ ७०

स्रष्टाह भूतसत्त्वाना यथा शिल्पिन् सुपण्डिता ।
प्रासादमठहर्म्याणा तथा त्वमपि सुव्रत ! ॥ ७१

सशय कथित सर्व सम्पादय शिवाश्रमम् ।
यथा पूज्यतम श्रेष्ठ लिङ्गमूर्त्तिमहेश्वरम् ॥ ७२

वाढमित्येव स प्राह विश्वकर्मा महाद्युति ।
अतीव मनसोद्विग्नस्तस्मादेकाम्रके तदा ॥ ७३

## ब्रह्मोवाच

ततो मध्यदिन सूर्ये प्राप्ते चाह जगाम ह ।
लवणाब्धिजले स्नात्वा कृत च निजतर्पणम् ॥ ७४
समाप्य कर्म चायात कृत्तिवासोऽर्च्चन प्रति ।
दृष्ट लिङ्ग समाराध्य चिन्तयामास शकरम् ॥ ७५
प्रत्यक्षमवदत् प्रीतो देवदेवस्ततश्च माम् ।
अचिन्त्यो मनसाऽप्यनैर्व्यक्तो लिङ्गे यथा पुरा ॥ ७६
वक्तुमिच्छन्तमीशानो मामुवाच स चाक्षरम् ।
पूजितश्च यथा शक्त्या स्तुतो नानाविधै स्तवै ॥ ७७

## श्रीशकर उवाच

विन्ध्यस्योत्तरके पार्श्वे चतु श्शृङ्ग महोच्छ्रितम् ।
तत्रोपल महच्चासीत् शस्त[2] दिव्यमनौपमम् ॥ ७८

---

1 C—श्लिष्टोऽसि ।

2. $A_1$, C—छत्र दिव्यमनोपमम् ।

तदानयित्वा यत्नेन सह वै विश्वकर्मणा ।
स्थापयस्व च मल्लिङ्ग यथावत् विधिपूर्वकम् ।। ७९

ब्रह्मोवाच

एवमुक्त्वा विरूपाक्षो ह्यन्तर्धान गत प्रभु ।
भासयश्च दिश सर्वा स्वकेनैव च तेजसा ।। ८०

एतस्मिन्नन्तरे काले विश्वकर्मा जगाम ह ।
इत्युवाचाञ्जलिं वध्वा मा पार्वत्यमितौजसम् ।। ८१

प्रासाद चैव लिङ्गस्य करिष्ये कुत्र पद्मज ! ।
आनयिष्यामि पाषाण कस्माद्देशाच्च तद् वद ।। ८२

ब्रह्मोवाच

इति तद् वचन श्रुत्वा आनन्दाश्रु-परिप्लुत ।
भक्त्या परमया युक्त इत्युवाचाहमम्बिके ! ।। ८३
तदर्थं विन्ध्यशैलं तु गत्वा चानय सुव्रत ! ।
चतु.श्रृङ्गो परिस्थ च पाषाण देवदुर्लभम् ।। ८४
तेनैव प्रस्तरेणाङ्ग ! प्रासाद विधिनोदितम् ।
कारयस्व सम श्लक्ष्ण लिङ्गमानय सत्वरम् ।। ८५
ममैतद् वचन श्रुत्वा विश्वकर्मा तदाम्बिके ।
जगाम त्वरित सोऽथ विन्ध्यस्य शिखर प्रति ।। ८६
ददर्श तत्र सपन्न पाषाण देवतोपमम् ।
शरद्घनसम श्लक्ष्ण चक्षुरुन्मेषहारिणम् ।। ८७
त मत्वा दिव्यमादाय यथोद्दिष्ट मया पुरा ।
तथैव विश्वकर्मासौ चकार विधिवत् क्षणात् ।। ८८
ततो दृष्ट्वा कृत लिंग प्रासाद विश्वकर्मणा ।
आध्यातोऽहमृषीन्[1] सप्त उशनाङ्गिरसौ शिवे ! ।। ८९
जमदग्नि भरद्वाज पाराशर्यपराशरौ ।
नारद सनक चैव वायुमादित्यमेव च ।। ९०

1. $B_2$—आनीतो ।

ते सर्वे च समायाता पुरत समवस्थिता ।
कृताञ्जलिपुटा प्राज्ञा मम दर्शनलालसा ॥ ९१

स्वागतेनार्घ्यपाद्याभ्यामातिथ्य विधिना शिवे ! ।
भक्ष्यभोज्यैरनेकैश्च सक्रुदेतानपूजयम् ॥ ९२

तत' कार्यं समाचख्यौ तानषीन् सशितव्रतान् ।
प्रतिष्ठा विधिवत् सम्यक् समेत्य कृतवानहम् ॥ ९३

निवृत्ताया प्रतिष्ठाया यज्ञमारम्भयस्तदा ।
सम्पत्-सम्भार-सयुक्त प्रीतये कृत्तिवासस ॥ ९४

ग्रासादनविधि सम्यक् कृत्वा होम ततोऽग्नये ।
मन्तयुक्ताय शिष्याय ज्वलिते जातवेदसे ॥ ९५

ततोऽथर्वशिरोवक्ता तृप्ति पश्यन् दिवौकस ।
उवाच वचन चेद भुञ्जध्व विबुधेश्वरा ॥ ९६
शिवस्य वचन श्रुत्वा उपविश्याध्वरे सुरा. ।
स्वभागाश्च समादाय भुञ्जन्ति स्म तदाम्बिके ! ॥ ९७

ददौ दानवराश्चाह गजाश्ववसनानि च ।
गो हिरण्य रथ भूमि राजत ताम्रमायसम् ॥ ९८

अन्न पानीयसयुक्त कन्या राजीवलोचनाम् ।
हसलीलागति दिव्या कम्बुग्रीवा कृशोदरीम् ॥ ९९
आज्ञया देवदेवस्य शिवस्य शिववल्लभे ! ।
विधिवत्कर्मनिष्ठेय समाप्तबहुदक्षिणम्[1] ॥ १००

प्रत्यक्षमभवद्रुद्रस्तस्मिन् लिङ्गे ततोऽम्बिके ! ।
प्रीतात्मा प्राह मा तुष्ट साधुसाध्विति सत्तम ॥ १०१

प्रासादेन च दिव्येन यज्ञेन तव विश्वसृक् ।
प्रीतोऽह सप्रयच्छामि ब्रूहि श्रेष्ठ[2] यदिच्छसि ॥ १०२

## ब्रह्मोवाच

इति तस्य वच श्रुत्वा महादेवस्य पार्वति ! ।
ब्रूतोऽह देवदेवेश परमात्मानमव्ययम् ॥ १०३

---

1 $B_2$—समाप्तवरदक्षिणा ।

2, $A_1$, $B_1$, C—ज्येष्ठ ।

विश्वम्भर! महेशान! प्रसन्नो यदि मा विभो।
अस्मिन् क्षेत्रे जगन्नाथ वृणोमि वरमुत्तमम्॥ १०४

त्वदायतनमुख्यश्च तीर्थो यज्ञाङ्गसभव.।
प्रथमोऽय मया दृष्ट पूजनीयतमोऽस्तु वै॥ १०५

इति मद्वचन श्रुत्वा महादेवो जगत्पतिः।
अब्रवीत्परम वाक्य भूतानुग्रहक परम्॥ १०६

शृणु ब्रह्मन्निद तीर्थं पावन सर्वदेहिनाम्।
भविष्यत्यत्र लिङ्गेऽह सदा स्थास्ये न सशय॥ १०७

ब्रह्मोवाच

मामित्युक्त्वा महेशान सिद्धगन्धर्वकिन्नरैः।
चारणैर्ऋषिदेवैश्च तत्रैवान्तरधीयत॥ १०८

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे ब्रह्मेश्वर-प्रभवो नाम चतुर्दशोऽध्याय[1]॥

---

1, $B_2$ द्वितीयेंऽशे महेश्वरप्रभावो नाम चतुर्थोऽध्याय,।

# पञ्चदशोऽध्यायः

## सनत्कुमार उवाच

देवी प्रियमना[1] भूत्वा श्रुत्वा पैतामही क्रियाम् ।
अब्रवीत् परम वाक्यमानन्दाश्रुपरिप्लुता ॥ १

## पार्वत्युवाच

ब्रह्मेश्वर पर ब्रह्म नाद्यादाद्यतर वरम् ।
विज्ञात प्रियसवाद नृणा हितमनुत्तमम् ॥ २

तृप्याम्यह प्रहृष्यामि श्रुत्वा पापभयापहम् ।
पुनरन्यत् कथ लिङ्ग केन वा कारित विभो ॥ ३

कस्य पूर्वापर कर्म कस्मात्तु बहुविस्तरात् ।
श्रोतुमिच्छामि देवेश पर कौतूहल मम् ॥ ४

## सनत्कुमार उवाच

इति तस्य वचः श्रुत्वा लोकनाथश्चतुर्मुख ।
तामुवाच ततश्चेद शृणुष्व गदतो मम ॥ ५

मरीचिप्रमुखा सप्त उशनाङ्गिरसादय ।
वैधात्रोऽथ जयन्तश्च दक्ष शातातपो भृगु ॥ ६

सनत्कुमारो भगवानसितो देवलोऽनल ।
नारद परमोदार शक्राद्यास्त्रिदिवेश्वरा ॥ ७

ग्रहा नागा सुपर्णाश्च यक्षविद्याधराप्सरा. ।
वसवश्च महाभागा सिद्धाश्च मनुजेश्वरा ॥ ८

एते सर्वे महात्मानो नागराजान एव च ।
यज्ञान्ते समुप्राप्ता प्रष्टुकामा दिवौकस ॥ ९

---

1 B₂—प्रीतिमना ।

कृताञ्जलिपुटा सर्वे आनन्दाश्रुगताननाः ।
मा देवि! यज्ञकर्त्तार पप्रच्छुर्मुदिताशया ॥ १०

## देवादय उचु

किमर्थं च कृतोऽय ते शिवलिङ्ग प्रतिष्ठितम् ।
प्रासादो विपुलश्चात्र प्रश्न कथय सुव्रत! ॥ ११

त्व विभु सर्वभूताना विभो धर्मालयो भवान् ।
न विद्भ प्रभव चास्य पृच्छतो वक्तुमर्हसि ॥ १२

## ब्रह्मोवाच

तेन[1] वाक्येन पृष्टोऽह पद्मयोनिर्महेश्वरि! ।
हर्षं गद्गदया वाचा देवानाह हसन्निव ॥ १३

पुराकल्पे पुराणोऽय स्वयभु स्वयमुत्थित ।
स्वय वर्त्तयते देव स्वय सह्लीयते सुरा ॥ १४

अनादिमध्यरहित यथाहुर्ब्रह्मवादिन ।
यस्य वेदपुराणेषु नान्त शास्त्रेषु कथ्यते ॥ १५

तेनादिनाहमाचष्टे दययानुग्रहेण च ।
आत्मयोग समाधाय स्वयमेवात्मना तथा[2] ॥ १६

त्रैलोक्ये यानि तीर्थानि पुण्यक्षेत्रवनानि च ।
सर्वत्र सममेवाह यत् किंचित् सचराचरे ॥ १७

तथापि क्षेत्रमाहात्म्य विशेष समुदाहृतम् ।
शृणु ब्रह्मन्! प्रवक्ष्यामि विशेष फलदायकम् ॥ १८

मर्त्यलोके च कैलासे विद्ध्येकाम्रवन शुभम् ।
क्षेत्रपाल कृतो यत्र मया नारायण स्वयम् ॥ १९

एकाम्रकवनोद्देशे स्वर्णकूटाद्रिशेखरे ।
तत्र वै स्वयमेवाह सान्निध्य सतत विधे ॥ २०

मन्तादभितिष्ठामि छायामेकाम्रकस्य च ।
एकोनकोटिलिङ्गैश्च दर्शस्पर्शस्वरूपवान् ॥ २१

---

1 $B_2$—नेषा ।

2. $A_1$, $B_1$, C—इति ।

पूज्यात्माराध्यभावेन व्यक्ताव्यक्तस्वरूपत. ।
साक्षाच्च स्वयमेवाह लिङ्गमूर्त्तिरनामय ॥ २२

न तेन सदृश किञ्चित् क्षेत्रमासीत् कथचन ।
महाप्रलयपर्यन्तमविनाशमसक्षयम् ॥ २३

सर्वैदेववरैजुष्ट मुनिभि सिद्धचारणै ।
यक्षैर्विद्याधरैश्चैव अप्सरोभिर्मुमुक्षिभि ॥ २४

यस्मिन् क्षेत्रवरे ब्रह्म स्त्रिवर्ण मम लिङ्गकम् ।
अभिप्रायफल प्राप्तमाराध्य विबुधेश्वरै ॥ २५

प्रासादरचनै शुभ्रैर्माल्यदामोपशोभनै ।
बहुधूपैरलकारैश्चारुवस्त्रै सुचन्दनै ॥ २६

सम्मर्जनानुलेपैश्च मनोज्ञैर्विविधै शुभै ।
स्तात्रैर्नानाविधैर्हृद्यैर्गीतवादित्र नि स्वनै ॥ २७

पुण्यतोयैश्च तोयैश्च पञ्चामृतमयैर्घटै ।
उपायैः प्रणयैर्मेध्यैर्नानावर्णकमिश्रितै ॥ २८

चित्रपुष्पवरैर्हृद्यै पत्रभेदैरलकृतै ।
नानाधातुविचित्रैश्च हेमरत्नैरलकृतै ॥ २९

राजतैस्ताम्रपीठैश्च व्यजनै परमोज्ज्वलै ।
घाण्टाचामरविक्षेपैश्चामरैश्च परिच्छदै ॥ ३०

भृङ्गारैगड्डुकै कुम्भैर्दीपमालै सुसस्कृतै ।
अत्यर्थपुष्पप्रकरैर्मणिमुक्ताफलोज्ज्वलै ॥ ३१

शङ्खपूरणकैर्दिव्यैरुष्णीषैस्तिलकै प्रियै ।
छत्रै शाखाकुलै शान्तै. पताकै प्रियदर्शनै ॥ ३२

पानैर्बहुविधैर्दत्तैर्व्रतचयासु निष्ठितै ।
एतैश्चान्यैरभिमतैर्मनस' प्रीतिदायकै ॥ ३३

पूर्वमाराधितो देवैर्गन्धर्वै सिद्धचारणै ।
विद्याधरै सयक्षैश्च मुनिभिर्मुक्तिभाजनै ॥ ३४

तस्मात्त्वमपि भो स्रष्टर्मम क्षेत्रवरे भुवि ।
कुरुष्वायतन दिव्य भक्तित सुसमाहित ॥ ३५

लप्स्यसे विपुलामृद्धि मत् प्रसादात् पितामह[1] ।
ससारसागरे घोरे न भूय सभवेत् किल ॥ ३६

सर्वकामसमृद्धयै च कृपया चाभिभाषितम् ।
सत्त्वाना हितमत्यर्थं मया ब्रह्मन् पितामह ॥ ३७

अपि सूक्ष्मकृतेनात्र प्रासादेन ममानघ ।
क्षेत्रेऽतुल्यो महाधर्मस्त्रैलोक्येषु न विद्यते ॥ ३८

महतश्चापि चान्यत्र प्रासादशतसकुलात् ।
अणुमात्रेण क्षेत्रेऽस्मिन् सहस्र हि विशिष्यते ॥ ३९

## ब्रह्मोवाच

एव भगवता चोक्त मयाप्यत्राप्यनुष्ठितम् ।
तदस्तु निखिल पुण्य कृत्तिवासोऽर्च्चने च यत् ॥ ४०

एकाम्रकवने पुण्ये स्वर्णकूटाद्रिशेखरे ।
ये नमन्ति विरूपाक्ष तेभ्योऽपीह नमो नम ॥ ४१

क्षेत्रे च सतत साधुरर्च्चनाय निरामया ।
स्मर्त्तव्या सतत तेऽपि कृत्तिवासोऽर्च्चने रता ॥ ४२

कीर्त्तनीया कृतार्थास्ते पावना कलुषापहा ।
येषा कीर्त्तिरिय लोके कीर्त्तिमद्भि प्रचक्षते ॥ ४३

## ब्रह्मोवाच

इत्येव मद् वच श्रुत्वा ते च देवर्षिचारणाः ।
सर्वे तुष्टा· सुमनस समेत्य परिचक्रमु ॥ ४४

मण्डल सतत भूमि क्रोशमात्र सुरालयम् ।
तद्देश कृत्तिवासस्य छाया चास्य वनस्पते ॥ ४५

दृष्ट्वा तु स्थावर मेध्य स्वर्णकूटाद्रिशेखरम् ।
मेरुमन्दरसकाश कैलासशिखरोपमम् ॥ ४६

भ्राजिष्णुमनघ सेव्य मनोज्ञ चारुदर्शनम् ।
प्रदक्षिण नमस्कार क्षेत्रराज सुरोत्तमा ॥ ४७

---

1. $A_1$, $B_1$, C—मत् प्रासादात् पितामह ।

चक्रुश्च विधिवत् पूजा दृष्ट्वा लिङ्ग समन्तत ।
न ददृशुर्यथोद्दिष्ट मया लिङ्ग पुरेश्वरम् (?) ॥ ४८

कष्मलाभिरतास्तेऽथ गर्हयन्तीति स्व सुरा ।
वय पापवशात् सर्वे नात्र पश्यामहे शिवम् ॥ ४९

उद्विग्नमनस सर्वे द्रष्टुकामा दिवौकस ।
स्तुवन्तश्च महादेवमिदमूचु सुवर्च्चस ॥ ५०

अदृष्ट्वा तु न गच्छामो लिङ्ग त्रिभुवनेश्वरम् ।
तिष्ठाम सप्तरात्र तु मन सकल्पनिश्चलम् ॥ ५१

तेषामेव मत ज्ञात्वा सुराणा स त्रिलोचन ।
अन्तरीक्षे स्थितो वाचमुवाचाप्यशरीरिणीम् ॥ ५२

## श्रीशकर उवाच

अलमध्यवसाय वो मृषा पूर्वव्यवस्थिति ।
इदानी च वचोऽस्माक श्रृणुध्वममरेश्वरा ॥ ५३

यावत् कृतयुगस्यान्त यावत्त्रेता च वर्त्तते ।
तावत्काल न पश्यन्ति भूतग्रामाश्चतुर्विधा ॥ ५४

द्वापरे तु युगे प्राप्ते कलिकालागते तथा ।
पश्यन्ति पूजयिष्यन्ति लोका भक्तिसमन्विता. ॥ ५५

## ब्रह्मोवाच

इत्येव मधुरा वाणी श्रुत्वा ते ऋषिचारणा ।
कृताञ्जलिपुटा प्राहुरशरीर महेश्वरम् ॥ ५६

भक्तिमन्तश्च यत्कृत्स्न प्रासाद च तवानघ ।
करिष्यामो महादेव! तद् भवान् वक्तुमर्हति ॥ ५७

इत्येव वचन श्रुत्वा तेषा प्रियचिकीर्षया ।
भूय प्राहाशरीरस्थः शान्तियुक्तान् सुरान् मुनीन् ॥ ५८

अस्मदायतने चात्र भूयिष्ठा नष्टकल्मषा ।
अष्टाशेन इद कृत्स्न वक्ष्यामि शुभसूचितम् ॥ ५९

पूजा लोकत्रयस्यास्य गुह्य[1] स्थापय लिङ्गकम् ।
क्रमतो भवता देवा करिष्याम्यप्यनुग्रहम् ॥ ६०

एव सकललोकाना मुक्त्यर्थ परमेश्वर ।
उपदेश सुरान् दत्वा तत्रैवान्तरधीयत ॥ ६१

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे सर्वदेवोपदेशो नाम पञ्चदशोऽध्याय[2] ॥

---

1 B —गृह्णाम्यस्थाय लिङ्गक, $A_1$, $B_1$, C—गृह्णयस्थापय लिङ्गकम् ।
2 $B_2$ ..सर्वदेवोपदेशो नाम पञ्चमोऽध्याय ।

# षोडशोऽध्यायः

## सनत्कुमार उवाच

श्रुत्वा वाक्य महार्थं च देवी हैमवती तत ।
जगाद विनयानम्रा स्रष्टार सुरपूजितम् ।। १

## पार्वत्युवाच

नीलकण्ठवच श्रुत्वा किमकुर्वत देवता ।
मुनयो लोकपालाश्च यक्षविद्याधरोरगा ।। २
एतत् सर्व प्रयत्नेन श्रोतुमिच्छामि पद्मज! ।
सर्वलोकहितार्थाय ब्रूहि शृण्वन्तु देवता ।। ३

## सनत्कुमार उवाच

एव देव्या वच श्रुत्वा प्राह देव पितामह ।
उत्फुल्लनयनो भूत्वा प्रणम्य शिरसा शिवम् ।। ४

## ब्रह्मोवाच

शृणुष्वावहिता देवि! पुण्यमाख्यानमुत्तमम् ।
प्रभाव कृत्तिवासस्य दुर्लभ भुवनत्रये ।। ५
वर दत्त्वा गते देवे कृत्तिवाससि पार्वति! ।
अभूत्सभा देवताना मेरुपृष्ठे तदा किल ।। ६
एतस्मिन्नन्तरे तत्र नारदः परमो मुनि ।
आगम्येद सुविस्पष्ट वीणयाचोपगीयते ।। ७
एकाम्रकाननासीन देव त्रिभुवनेश्वरम् ।
प्रणतोऽस्मि जगन्नाथ सर्वकारणकारणम् ।। ८
एतच्छ्रुत्वा वचस्तस्य देवा हर्षमुपागमन् ।
ऊचः सर्वे सहस्रांशुमिद वचनमम्बिके! ।। ९

## देवा ऊचु

गच्छ शीघ्रं सहस्रांशो! एकाम्रकवन शिवम् ।
कुरु लिङ्गार्च्चन चादौ गमिष्यामस्ततो वयम् ।। १०

यतोऽष्टमूर्त्ते शंभोश्च मूर्त्तिरेको भवान् स्मृत ।
अतस्त्वयि महेशस्य वर्त्ततेऽनुग्रहो ध्रुवम् ॥ ११

एतच्छ्रुत्वा वचस्तेषा देवाना तपनस्तदा ।
ओमित्युक्त्वा च तान् देवानाजगाम महीतलम् ॥ १२

आगम्य च ददर्शासौ दक्षिणाम्बुधिसन्निधौ ।
एकाम्रकवन नाम कैलासादद्भुत महत् ॥ १३

ततोऽर्क परया भक्त्या लिङ्गस्याराधनाय वै ।
चकार विधिवद् यत्न क्षेत्र परमपूजिते ॥ १४

अदूरे कृत्तिवासस्य ऐशानी दिशमाश्रिते ।
धेन्वन्तरसहस्रैके तथा पञ्चशतोत्तरे ॥ १५

वनमध्ये समे रम्य सानुप्राय शिलातलम् ।
ददर्श परमाश्चर्य भास्करस्तु तदाम्बिके ! ॥ १६

तिथौ ऋक्षे शुभे योगे बृहस्पतिमतेऽत्र स ।
ददावर्घ्यं यथान्याय विधिदृष्टेन कर्मणा ॥ १७

विश्वकर्माणमाहूय ततस्तरणिरैश्वरीम् ।
कथा च कथयित्वासावुवाच मधुराक्षरम् ॥ १८

## भास्कर उवाच

भवान् कर्मविधिज्ञश्च भवान् कर्मादिकोद्यत. ।
तारक सर्वसत्त्वाना सर्वदेवनमस्कृत ॥ १९

कर्त्ता त्वमसि शिल्पीना कुरुष्वाभिमत मम ।
देवायतनमारभ्य लिङ्गस्याराधनाय वै ॥ २०

अस्मिन् क्षेत्रवरे तात ! विधिस्तु विधिनोदितम् ।
निर्दिष्ट देवदेवेन छायाया च वनस्पते ॥ २१

इति तस्य वच श्रुत्वा स्वीकृत्य सुरवर्धकी ।
क्षणेन यत्नतश्चक्रे प्रासाद लिङ्गमध्यगम् ॥ २२

सोप्यगाद्भगवान् सूर्यः स्वमार्गं लोकपालनम् ।
प्रदक्षिणार्थं मेरोश्च त्रयीमूर्तिप्रवर्त्तकः ॥ २३

अविच्छिन्न महाज्ञानस्त्वहोरात्रप्रदर्शक ।
पर्यायेण पुनस्तत्राभ्युदितोऽस्तगतो रवि ॥ २४

प्रतिष्ठा चाकरोत् सम्यक् विवस्वान लिङ्गमुत्तमम् ।
गन्धै पुष्पैरलकारै पूजयामास शकरम् ॥ २५

पूजयित्वा प्रयत्नेन स्तुत्वाऽथर्वशिरेण च ।
साष्टाङ्गप्रणिपातेन नमश्चक्रे ततोऽम्बिके! ॥ २६

देवगन्धर्वमुनय शक्राद्याश्च मरुद्गणा ।
मुमुदुश्चाचले तस्मिन् भूतग्रामाश्चतुर्विधा ॥ २७

सान्निध्य कल्पयित्वाथ तस्मिन् लिङ्गे महेश्वर ।
उवाच परमप्रीतो मेघगम्भीरनिस्वन ॥ २८

## श्रीशकर उवाच

ब्रूहि भास्कर यत्काम वर त्रैलोक्यदीपक! ।
भूताना च हितार्थाय ददामि तव दुर्लभम् ॥ २९

## भास्कर उवाच

यदि प्रसन्नो भगवान्! यदि वानुग्रहोऽस्ति मे ।
अस्मिन् लिङ्गे च सान्निध्य भवान् भवितुमर्हति ॥ ३०

नित्यमेव जगन्नाथ वरोऽय मम चेप्सितम् ।
मम सज्ञा कुरुष्वाशु प्रसीद सुमुखो भव ॥ ३१

## ब्रह्मोवाच

ततो वाक्य शिव साक्षाद्देवान् सुरर्षिचारणान् ।
गन्धर्वयक्षभुजगान् दृष्ट्वा च चक्षुषा रविम् ॥ ३२

## श्रीशकर उवाच

लोकेषु गीयते लिङ्ग नाम्नेद भास्करेश्वरम् ।
सान्निध्योऽह सदा चात्र प्रीतिस्थानमिद मम ॥ ३३

विशेषमभिधास्यामि निबोध सविता-हितम् ।
प्रत्यक्ष सर्वभावेन भवामि तस्य सन्निधौ ॥ ३४

षष्ठीसप्तमीमासाद्य पक्षयोरुभयोरपि ।
पूजा सर्व प्रगृह्याह दास्यामि विपुल फलम् ॥ ३५

अच्छिद्रेणैकमासेन सूपचारै सदाशिवम् ।
सपूज्य यदवाप्नोति एकह्न भास्करेश्वरम् ॥ ३६

अश्वमेधसहस्रेण यत्पुण्य भूप्रदक्षिणे ।
तदाप्नोति न सदेह सप्तम्याराधने नर ।। ३७

सप्तम्या च विशेषेण वारे सत्यर्कसन्निधौ ।
सप्तमी विजया सा तु सर्वपापप्रणाशिनी ।। ३८

स्नात्वा बिन्दह्रदे तस्या दत्त्वा देवान् जलाञ्जलीन् ।
भास्करेश ततो देव गच्छेद्भक्तिसमन्वितः ।। ३९

स्नापयेद् विधिदृष्टेन मल्लिङ्ग सुमनोहरम् ।
कुर्यत्तैलाभिषेक च तथा गन्धानुलेपनम् ।। ४०

दिव्यै पुष्पफलै पत्रैर्भक्तित शक्तित श्रुचि ।
पूजयित्वाऽर्कमामन्त्य इद मन्त्रमुदीरयेत् ।। ४१

"नम शान्त प्रशान्तात्मन् ज्ञानमूर्त्ते सवेधसे ।
सर्वभावप्रभावज्ञ त्राहि मा परमेश्वर ! ।। ४२

शिवसूर्यमयीमूर्त्ते विश्वमूर्त्ते विभावक ।
वरेण्य वरदश्चासि प्रसीद परमेश्वर !" ।। ४३

इत्युच्चार्य नमस्कारमष्टाङ्गै रवनितले ।
अष्टवारान् प्रयत्नेन कुर्यात् पुष्पाञ्जलिं पुन ।। ४४

एव य, कुरुते सम्यक् नरो नार्यथवापि वा ।
जन्मान्तरकृतात् पापान्मुच्यते हि स तत्क्षणात् ।। ४५

विजयासप्तमी नाम्ना या वै पापहरा तिथि ।
भास्करेश तत्र दृष्ट्वाप्यनन्तफलमश्नुते ।। ४६

ब्रह्मोवाच

एवमुक्ते जगन्नाथे त्वस्तु चोक्त्वा दिवौकस ।
स्व स्व विमानमारुह्य ततस्ते त्रिदिव ययु ।। ४७

पूजित रविणा यस्मिता यथावद् विधिपूर्वकम् ।
अतो वेदपुराणेषु तन्नाम्ना भास्करेश्वरम् ।। ४८

प्रीतात्मानोऽपि हसस्य [1]सर्वदेवर्षिचारणा ।
नमस्ये भास्करेशाय स्तुवन्निति पुराम्बिके ! ।। ४९

---

1 $B_2$—सर्वे देवर्षिचारिणा

भास्करश्चशिवश्चोभौ तत्र सन्निहितावुभौ ।
प्रतिपूजा प्रगृह्णीतो देवि! भक्तिमता नृणाम् ।। ५०

कृते तत्पूजित देवि! यक्षविद्याधरोरगै ।
साध्यै पितृगणै सिद्धैर्मुनिभिर्ब्रह्मवादिभि ।। ५१

वसुभिर्लोकपालैश्च सेवित सतत परम् ।
भक्त्या तस्मात् वरेण्यात्तु फलमाप्नुयु वाञ्छितम् ।। ५२

विजया सप्तमी सप्त भूय. सप्तभिरेव च ।
चकार पूजा देवोऽस्य जयन्त पाकशासनः[1] ।। ५३

पञ्चाशद् हैहयो राजा षष्टिश्चेदिपति स्वयम् ।
त्रिशत् सोमश्रवा राजा मिथिल. षोडशैव तु ।। ५४

एते चान्ये च बहवो भक्त्याराध्य दिव ययु ।
अस्य प्रसादादद्यापि दिवि मोदन्ति नन्दिताः ।। ५५
सम्यक् सपूजिते देवि! भक्त्या लिङ्गे प्रयत्नत ।
भास्करेशे प्रसन्ने च नास्ति निर्धनगोचर ।। ५६

इह प्रेत्य सुखैश्वर्यमन्ते शिवमवाप्नुयात् ।
क्षेत्रे ह्यस्मिन् द्वितीयोऽय तृतीय शृणु पार्वति! ।। ५७
एकाम्रकस्य माहात्म्य दुर्लभ भुवि पावनम् ।
श्रोतव्य च हित विद्धि चरित पुण्यकर्मणाम् ।। ५८

माहात्म्य क्षेत्रराजस्य विभूति क्षेत्रदर्शनम् ।
मन्त्रन्यास यथास्थान होम इज्या समित्कुशै ।। ५९

एकैकस्य गुणा श्लाघ्या स्वर्गदा सुखदायिन ।
विस्तरोऽय जगद्धात्रि! आनुपूर्व निबोध तान् ।। ६०

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे भास्करेश प्रभवो नाम षोडशोऽध्यायः[2] ।।

---

1 $A_1$, $B_1$, C—पाकशासनि ।

2. $B_2$ भास्करेश्वर प्रभवो नाम षष्ठोऽध्याय ।

# सप्तदशोऽध्यायः

## ब्रह्मोवाच

यमोऽथ लिङ्गमासाद्य यथाराधितवान् पुरा ।
सम्यच्च विपुला प्राप्तो तथा श्रृणु नगेन्द्रजे ॥ १

पूजयित्वा तु तल्लिङ्ग भानौ गच्छति चाम्बरे ।
तल्ललाटे त्रिपुण्ड्र च दृष्ट्वा प्रेताधीपोऽब्रवीत् ॥ २

## यम उवाच

नमस्ते भगवन् तुभ्य नमस्ते लोकपूजित ।
किमिद ते ललाटे च त्रिपुण्ड्र भस्मना कृतम् ॥ ३

त्व पूज्य सर्वदेवाना सर्वेषा वरदायक ।
सर्वलोकाधिपश्चासि को देव पूजितस्त्वया ॥ ४

इति मे सशयो जात सशय छेत्तुमर्हसि ।
उपदेशप्रसादेन[1] तुभ्य नित्य नमो नम ॥ ५

## भास्कर उवाच

पुरा देवसभाया तु तस्या च स्थितवान् भवान् ।
पुनरासीत् कथ मोह किमर्थं पुच्छ्यते त्वया ॥ ६

न शक्ये विस्तराद् वक्तु माहात्म्य तस्य वै यम ।
क्षणमात्र न तिष्ठेय यामि मेरुप्रदक्षिणे ॥ ७

तन्माहात्म्य महाबाहो पृच्छ त्व कुशलाञ्छनम् ।
विस्तराच्च स जानाति सर्वं ते कथष्यिति ॥ ८

## ब्रह्मोवाच

एतच्छ्रुत्वा वचस्तस्य कृतकृत्यो यमोह्यभूत् ।
भास्करश्च महात्मा स जगाम मेरुमूर्धनि ॥ ९

---

1 B₂—प्रसीदेन ।

स च मामुपगम्याथ देवो वैवस्वतोऽब्रवीत् ।
नमस्कृत्वातिभक्त्या च विनयात् प्राञ्जलि स्थित ॥ १०

## यम उवाच

ब्रह्मन् प्रसीद भगवन्! सप्तलोकपितामह ।
उपदेशप्रसादेन धर्मनिर्देशन वद ॥ ११

को देश पण्यवालोके कानि तीर्थवनानि च ।
सरासि सरतिश्चैव सागरा नगरा भुवि[1] ॥ १२

यानि शास्त्राणि देवेश उपदेश प्रचक्ष्व मे ।
भवता समनुज्ञात किंचिद्धर्म कराम्यहम् ॥ १३

प्रासादरचना दिव्या लिङ्गस्याराधनानि वै ।
इच्छाम्यह सुरश्रेष्ठ! प्रसीद सुमुखो भव ॥ १४

अल्पायास महत् पुण्य स्वल्पोपाये परीक्षणम् ।
प्रासादेनाणुमात्रेण यत्र धर्मो महान् भवेत् ॥ १५

## ब्रह्मोवाच

यमस्येद वच श्रुत्वा कथित च मयाम्बिके! ।
यथा वेदोदित[2] पूर्वं पुराणप्रवर त्विदम् ॥ १६

आद्यादाद्यतर ज्ञेय परावरस्वरूपिणा[3] ।
तीर्थेष्वन्येषु यत्प्रोक्तमग्र्य पुण्यतम ' यम[4] ॥ १७

तीर्थाना चैव सर्वेषा क्षेत्राणा प्रविचारणे ।
भूलोके त्वधिक चान्यदेकाम्रान्नास्ति किं च न ॥ १८

यत्र स्वल्पे कृते धर्मे ददात्यक्षयमीश्वर ।
अनन्तभोगमतुल यत् सुरैरपि दुर्ल्लभम् ॥ १९

एकाम्रकवने रम्ये स्वर्णकूटे हराश्रमे ।
लवणोदधिकल्लोलैर्धौतामलशिलातले[5] ॥ २०

---

1 $B_2$—सागरान्नगरान् भुवि ।

2 $B_2$—देवोदित ।

3 $B_2$—परावरस्वरूपिण ।

4 $B_2$—मम ।

5, $B_2$ C—मध्यग्रे ।

तत्रास्ते भगवान् रुद्र सर्वलोकनमस्कृत ।
युगस्वरूप वर्त्तेत मूर्त्ताऽमूर्त्तेऽक्षरोऽव्यय [1] ॥ २१

स्वेच्छया वर्धते देव स्वयं कर्त्ता पितामह ।
अप्रकाश्यो युगाद्ये च मनुष्यैरजितेन्द्रियै ॥ २२

आम्रमूर्त्ति कृते भाति दुर्विज्ञेय सुरासुरै ।
स्वच्छन्दक्रीडयासक्तो युगान्ते स प्रलीयते ॥ २३

प्रलीने च द्रुमे तत्र चार्धलक्षे च षोडशे ।
तस्यैव सा रसा दिव्याऽभूद्भूमि कनकप्रभा ॥ २४

यावच्छायाम्रकस्यात्र तावत्कैलास उच्यते ।
एकस्याम्रस्य छायायामेकाम्रकवन स्मृतम् ॥ २५

मध्ये गन्धनदी तस्य समन्तात् सागर गमा ।
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता ॥ २६

जीवजीवकसघृष्टा चकोरशिखिनादिता ।
क्रौञ्चसारसमाला सा हेमपद्मोपशोभिता ॥ २७

कल्हारकुमुदोद्भासा पुष्परेणुवती शुभा ।
स्वादुतोया मनोरम्या अकर्द्दम सुवालुका ॥ २८

स्वर्णकूटगिरे पृष्ठे स्वच्छपुण्याम्बुवाहिनी ।
अतीव तत्र सौम्या च पाविनी लोकभाविनी ॥ २९

पुरासौ भगवान् रुद्रो क्षेत्रज्ञो भूतभावन ।
भूताना च हितार्थाय चक्रे गन्धवती नदीम् ॥ ३०

पापौघहारिणी सा तु भुवि कीर्त्तिप्रदायिनी ।
पाविनी सर्वभूताना दक्षिणाम्बुधिवाहिनी ।
भाविनी सर्वसत्त्वाना पाविनी जलधेस्तु या ॥ ३१

तटयुगलविहङ्गा स्यन्दिनी सत्तरङ्गा,
स्फटिकनिकटनीरा मीनगर्भाभिरामा ।
सुरजनवधूसेव्या साधुभिग्रस्तसीमा,
त्रिभुवनकलुषघ्नी गन्धसिन्धु सुवन्द्या ॥ ३२

ऋषिसिद्धगणाकीर्णा सर्वोपद्रववर्ज्जिता ।
सर्वेषा प्राणीना चैव गतिमिष्टा प्रदायिनी ॥ ३३

---

1 A₁, B₁, C—युगस्वरूपे वर्त्तेत मूर्त्तामूर्तौऽक्षयोऽव्यय ॥

शिवलोकस्य नीत्यस्य शान्तस्य च ध्रुवस्य च ।
अव्यक्तस्य च निश्रेणी स्नानपानाञ्च या तथा ।। ३४

स्वर्णकूटगिरे पृष्ठे सरिदेषा सनातनी ।
प्रच्छन्नरूपिणी गङ्गा शिवोपासनतत्परा ।। ३५

दक्षिणावर्त्तमालम्ब्य क्षेत्रराज परेतराट् ! ।
नाम्ना गन्धवती ख्याता याति गङ्गा सरिद्वरा ।। ३६

यत्र सूक्ष्मेश्वरो देवस्तत्र सा मुक्तिदायिनी ।
तत्रैव च प्रयागस्तु तीर्थराज प्रकीर्त्तित· ।। ३७

तस्मादेकाम्रके पुण्ये या च गन्धवती सरित् ।
सा साक्षाज्जह्नुतनया नान्यथा शृणु वै यम् ! ।। ३८

तस्या देव स्वय साक्षात् कीर्त्तित कृत्तिवासस ।
स विग्रहधरो भूत्वा पर्यचक्रामत प्रभु ।। ३९

समन्तात् क्रोशमात्राया छायाया च वनस्पते ।।
रेमेऽसौ मनसा तुष्टस्तद्देशे जनवर्ज्जिते ।। ४०

मेरुशृङ्ग इव प्रख्ये कैलासादति सुन्दरे ।
मनोज्ञविरले रम्ये शिवसद्मात्मके यम ! ।। ४१

सबभूव स्वय देवो लिङ्गमूर्तिनिरामय ।
एकोनकोटिलिङ्गात्मा वभूव स्वयमेव च ।। ४२

सुरसाद्रमयी भूमिः शिवतेजोऽभिवृ हिता ।
आम्रच्छायासमाकीर्णा यत्रास्ते मेरुसुन्दरी ।। ४३

भास्कर दीप्तमत्यन्तमिन्दुबिन्दुशतोज्ज्वलम् ।
प्रमुमोद शिवो यत्र स्नानमात्ममनोहर ।। ४४

मेध्यमक्लिष्ट भूयिष्ठ धन्य स्वर्गशताधिकम् ।
एकाम्रकवन क्षेत्र न भूत न भविष्यति ।। ४५

द्यौर्लोके यानि तीर्थानि पञ्चपर्वञ्च उर्ध्वसु ।
अनूपे जाङ्गले तस्य कला नार्हन्ति षोडशीम् ।। ४६

सप्तद्वीपेषु मेदिन्या पुण्याश्रमगतेषु च ।
समुद्रस्य तटे भीमे स्थले निम्ने तथाश्रये ।। ४७

नगरेषु विचित्रेषु वषुनेपवनेषु च ।
सुदेशेषु च रम्येषु वापोकूपजलाश्रये ।। ४८

पाताले विवरे रन्ध्रे यानि तीर्थानि सन्ति वै।
सरितश्च समुद्राश्च गङ्गाद्या सर्वनिम्नगा ॥ ४९

एते च बिन्दुसरस कला नार्हन्ति षोडशीम्।
असख्येया गुणास्तस्य बिन्दुद्भवह्रदस्य च ॥ ५०

स्वर्गे मर्त्ये च पाताले तदेक चैव पावनम्।
स्वर्गारोहणसोपान तस्याम्भो जगती तले ॥ ५१

पुनात्यखिल भूतानि महापातकिनो जनान्।
बिन्दु स्रवन्ति विश्वस्य प्राणेष्विव विधो कला ॥ ५२

आविध्य निखिलान् लोकान् सूर्यस्येव गतस्त्रय ।
विशन्ति सरितश्चात्र महापुण्यजलाशया ॥ ५३

शतशोऽथ सहस्राणि गङ्गाद्या सागराङ्गना[1]।
आविशन्ति ह्रदा सौम्या मानसादि सरासि च ॥ ५४

क्षीरोदाद्यर्णवा सर्वे प्रविशन्ति यमक्षया ।
एतान्यन्यानि तीर्थानि पुष्करप्रमुखानि च ॥ ५५

स्रवन्ति कोटिसख्यानि तत किमधिक यम ! ।
बिन्दुद्भवसम तीर्थं नास्ति किञ्चिज्जगत्त्रये ॥ ५६

कृत्तिवास सम लिङ्ग त्रिषु लोकेषु नास्ति वै।
सूर्य प्रतपता श्रेष्ठो वर्णश्रेष्ठो द्विजोत्तम ॥ ५७

हिमवान् भूधरश्रेष्ठो लिङ्गमैकाम्रक तथा।
आध्यात्मिका महाविद्या वेदे धर्मः प्रतिष्ठित ॥ ५८

लिङ्गाना प्रवर तद्वत् कृत्तिवास पुन पुन ।
पर ब्रह्म पर धाम वाजिमेध क्रतौ वर ॥ ५९

बिन्दूद्भव तीर्थवर त्रिषु लोकेषु वै यम ! ।
उभयोरपि सयोग लिङ्गस्य सरसो यत ॥ ६०

तस्मात् क्षेत्रवर प्राहुरेकाम्रकवन बुधा ।
न तेन सदृश क्षेत्र त्रिषु लोकेषु विद्यते ॥ ६१

प्रासाद कुरु धर्मज्ञ तत्रैकाम्रे प्रयत्नत ।
अपुरे देवदेवस्य धेन्वन्तरशतान्तरे ॥ ६२

---

1, $A_1$, $B_1$, C—सागर गमा, ।

पश्चिमे तु दिशो भागे किञ्चित् वायव्यमाश्रिते ।
देवायतनमत्रैव कारयस्वाविशङ्कितः ॥ ६३

देवदानवयक्षेभ्यो नैव विघ्न भविष्यति ।
लिङ्ग पूजय यत्नेन तत्र मद् वचनाद् यम ! ॥ ६४

अविघ्नमस्तु ते भद्र कृत्तिवासप्रसादत ।
किं तस्य बहुभिर्यज्ञैस्तपस्तीर्थाटनव्रतै ॥ ६५

यस्य चैकाम्रके क्षेत्रे कीर्तिरास्ते च शाश्वती ।
एकाम्रकवने स्वर्णकूटाद्रौ शिवसन्निधौ ।
प्रासादेनाणुमात्रेण कृतकृत्यो भवेन्नर ॥ ६६

## ब्रह्मोवाच

इति मद्वचन श्रुत्वा पुण्य कमललोचने ! ।
वाढमित्येव स प्राह देवो वैवस्वतस्तदा ॥ ६७

स्वयमेव जगामाशु विश्वकर्मान्तिक यम ।
उवाच प्रणतो भूत्वा विश्वकर्माणमव्ययम् ॥ ६८

त्व प्रशाधि जगत्कर्त्तर्गुरुस्त्व तदपाश्रय ।
त्वत्तो नान्यगतिर्मेऽस्ति प्रसीद सुमुखो भव ॥ ६९

इति ब्रुवाण त गौरि ! ह्यु वाच सुखर्धकी ।
स्तूयेऽह च किमर्थं भो त्वया तरणिनन्दन ! ॥ ७०

एतच्छ्रुत्वा वचस्तस्य यम प्राह कृताञ्जलि ।
ब्रह्मणा तु यदादिष्ट तच्छृणुष्व ममानघ ॥ ७१

एकाम्रकवन गत्वा स्वर्णकूटाद्रिशेखरे ॥
प्रासाद तत्र कृत्वा च लिङ्गस्याराधना कुरु ॥ ७२

प्रासादेनाणुमात्रेण तत्र धर्मो महान् भवेत् ।
इत्युक्तो ब्रह्मणाह च तत्र यास्याव आशु भो ॥ ७३

इति तस्य वच श्रुत्वा पुण्य सारामृतोपमम् ।
विश्वकर्मा तथेत्याह सदय रविनन्दनम् ॥ ७४

जग्मतु सहितावेतौ त देश सुमनोहरम् ।
ब्रह्मोद्दिष्टा गुणवती ता भूमि तौ ददर्शतुः ॥ ७५

सूत्रमात्रप्रमाणेन ददावर्घ्यं यमस्तत ।
चकार विधिवत्कर्म दैवयोगेन विश्वकृत् ॥ ७६

ततो वैवस्वतो राजा सानन्दाश्रुगताननः ।
लिङ्गप्रतिष्ठां सम्यग्वै चकार विधिनोदिताम् ॥ ७७

नाकौकसां गणैः सर्वैर्मुनिभिर्ब्रह्मवादिभिः ।
सह तत्र महात्मासौ चक्रे यज्ञं शिवाय च ॥ ७८

प्रयत्नात् शिवयज्ञे च समाप्ते वरदक्षिणे ।
जग्मुस्ते त्रिदिवं देवा कृतकृत्योऽभवद् यमः ॥ ७९

सान्निध्यमभवत्तत्र शंकरः स्वयमेव च ।
धर्मं प्रोवाच धर्मात्मा परमात्मा महेश्वरः ॥ ८०

श्री शंकर उवाच

वरं वरय भो धर्म यत्ते मनसि वर्त्तते ।
दास्याम्यवश्यं भूतानां हिताय परमाद्भुतम् ॥ ८१

यम उवाच

देवदेव ! नमस्तेऽस्तु नमस्ते शशिशेखर ! ।
अस्य लिङ्गस्य माहात्म्यं ज्ञातुमिच्छामि शंकर ॥ ८२

केन वै विधिना त्वस्य पूजा लोके भविष्यति ।
कस्मिन् दिने विशेषार्च्चा तन्मां वद महेश्वर ! ॥ ८३

श्री शंकर उवाच

ये पश्यन्ति जनास्तत्र त्रिभिश्चैव प्रदक्षिणैः ।
न ते गर्भगृहं यान्ति प्रणम्य शिरसाञ्जलिं ॥ ८४

अष्टाङ्गप्रणिपातेन न नरो गर्भमाविशेत् ।
पुष्पगन्धानुलेपेन धूपदीपादिभिस्तथा ॥ ८५

भक्तितः शक्तितः पूजां कृत्वा मन्त्रमुदीरयेत् ।
"नमस्ते प्रिययोगेश अनन्त परमार्च्चित ॥ ८६

नमः शान्तातिशान्तात्मन्नात्मयोने विभाकर[1] ।
भो जगत् संयमिन् साक्षाद् वेदनिर्णयनिष्कल ॥ ८७

यमेश्वर जगद्धातस्त्रायस्व मां कृतोद्यम ।
अथ न्यासमिमं कुर्यात् स्वदेहे च प्रयत्नतः । ॥ ८८

1 C—विभावक ।

नम शिवाय स्कन्धे च दक्षस्कन्धे च विन्यसेत् ।
ॐ नम प्राणद पार्श्वे शूल दक्षिणबाहवे ॥ ८९

उरु जानु जघयुग्मे त्वथ शून्या विभावरी (?) ।
दक्षिण च शिवाभोग पादपीठ नमो नम ॥ ९०

वाम वसुमती पाद जानुजघोरु भुभृते ।
वामे भृङ्गरीट दक्षे भुजे नन्दीश्वर तथा ॥ ९१

पृष्ठे गणपति न्यस्य स्कन्धे वासुकितक्षकौ ।
ललाटे देवमीशान शिरश्चन्द्र सविभ्रकम्" ॥ ९२

आत्मान शिवसकल्प द्विधाभावविवर्जित ।
यो वै यमद्वितीयाया विधिनानेन पूजयेत् ॥ ९३

स तरत्यखिलान् दुर्गान् भङ्गशब्दो न जायते ।
इहलोके सुख त्वादौ भुड्क्ते दु खविवर्जित ॥ ९४

देहान्ते स्मरण प्राप्य मम याति पुर यम ! ।
यावच्चन्द्रार्कपर्यन्त यावत्तिष्ठति मेदिनी ॥ ९५

## ब्रह्मोवाच

एवमस्त्विति मुनयो देवाश्च त्रिदिव गता ।
समादिश्य इम धर्ममन्तर्धानं गतो विभु ॥ ९६

ततो लिङ्गाय वै दुर्गे ! यमो मुदितमानस ।
ददौ श्रीमाननेक च हेमरत्नादिक वसु ॥ ९७

चामरव्यजनान् शुभ्रान् दण्डगैरिकमण्डितान् ।
वस्त्राण्याभरणाश्चैव मणिमुक्ताफलोज्ज्वलान् ॥ ९८

पूजा रत्नमयी दिव्या देवतूर्यान् वराङ्गनाम् ।
नृत्यगीतविदा तन्वी कङ्कणेन विभूषिताम् ॥ ९९

पीनोन्नतकुचा सौम्या शरदिन्दुनिभाननाम् ।
सदा दासीसमायुक्ता दिव्याभरणभूषिताम् ॥ १००

सहस्राणि पञ्च दोग्ध्रीर्धर्मराज सुधीश्च गाः ।
स्वाध्यायव्रतनिष्ठेभ्यो ब्राह्मणेभ्यो ददौ यम· ॥ १०१

कापालिकाय यतये सर्वभूतहिताय च ।
दरिद्राय विनीताय शौचाचारपराय च ॥ १०२

तपोनिष्ठाय निष्ठाय ददद्वै मठमुत्तमम् ।
धनधान्यसमायुक्त शिवप्राकारवेष्टितम् ॥ १०३

वितानमण्डलाकीर्ण बहुपुष्पसुवासितम् ।
द्वि-त्रि-चतु पुरयुत ,वेदध्वनिसुघोषितम् ॥ १०४

पुन्नागपाटलीविल्व-नागकेशरचम्पकै ।
मल्लिकाजातियूथीभि करवीरैश्च मण्डितम् ॥ १०५

इत्थ पाशुपताचार्ये दिव्य मठवर शिवे ! ।
प्रतिपाद्य विधिं सम्यक् स्वय धर्मेण धर्मत ॥ १०६

उवाच परमप्रीतस्त यतिं धर्मनिष्ठितम् ।
शृणु पाशुपताचार्यं मद्वाक्य धर्मसम्मतम् ॥ १०७

प्रतिग्रह समासाद्य दातुमन्न समुद्यत ।
यथेष्ट सर्वभूतेभ्यो देह्यन्न त्व प्रयत्नत ॥ १०८

आलोक्य सर्वशास्त्राणि विचार्य च पुन पुन ।
नान्नदानात् पर दान स्वय धर्मेण भाषितम् ॥ १०९

अन्नदानात् विशुद्धयन्ति महापातकिनो नरा ।
नान्नदानात् पर दान नास्ति नास्ति पुन पुन ॥ ११०

गजाश्वरथदानेभ्योऽप्यन्नदान विशिष्यते ।
एतस्मात् कारणाद्भिक्षो! प्राणिभ्योऽन्न प्रदीयताम् ॥ १११

ब्रह्मोवाच

इत्याज्ञाप्य रवे पुत्रस्त च पाशुपत शिवे ! ॥
जगाम महिषारूढ. स्वपुरी धर्मतत्पर ॥ ११२

कापालिको यतिरसौ श्रीयमेश्वरसन्निधौ ।
यमदत्ते मठवरे तस्थौ धर्मपरायण ॥ ११३

पुत्रपौत्रादिभावेन यतेस्तस्य महात्मन ।
शिष्या धर्मसमाचारा· स्थास्यन्ति किल सर्वदा ॥ ११४

एव तत्र महेशानि ! यमेन च मदाज्ञया।
लिङ्ग प्रतिष्ठित शंभोः किमन्यत् श्रोतुमर्हसि ॥ ११५

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे यमेश्वर प्रभवो नाम सप्तदशोऽध्याय [1] ॥

---

1. $B_2$ "यमेश्वर-प्रभावो नाम सप्तमोऽध्यायः ।

# अष्टादशोऽध्यायः

## पार्वत्युवाच

तस्मिन् क्षेत्रवरे ब्रह्मन्! सिद्धगन्धर्वसेविते।
भूयश्च कथयाश्चर्य पुरावृत्त शुभोदयम्॥ १

अन्यलिङ्ग यथा येन पूजित सुप्रतिष्ठितम्।
तन्ममाचक्ष्व नि शेष न हि तृप्यामि शृण्वती॥ २

## ब्रह्मोवाच

निशामय जगन्मात. पुरावृत्त निरामयम्।
क्षेत्रे ह्यस्मिन् महापुण्ये पूजित विष्णुना यथा॥ ३

मुनिभि सेवितेनित्य मोक्षज्ञान ममुक्षुभि।
यक्षगन्धर्वसिद्धैश्च खगैर्विद्याधरोरगै॥ ४

आदिमध्यान्तरहित क्षेत्र तत् प्रथित त्रिषु।
सनातनतर विद्धि शाश्वत परमेशितुः॥ ५

तत्र क्षेत्रे महेशानि! येऽर्च्चयन्ति महेश्वरम्।
सुगति प्राप्य ते सर्वे मोदन्ते त्वमरै. सह॥ ६

एकदा विष्णुलोकेऽसौ शङ्खचक्रधरो हरि।
हर्षयन् सर्वदेवाश्च एवमाह च मा शिवे!॥ ७

शृणु ब्रह्मन्! जगत्तात! एकाम्रकवन शिवम्।
देवै सह गमिष्यामि पूजयिष्यामि लिगकम्॥ ८

इति तस्य वच श्रुत्वा उक्तोऽह गिरिनन्दिनि!।
श्रूयता वचन मह्य विष्णो· सह प्रतिष्ठितम्॥ ९

तत्रासौ भास्करो देवः पूजयामास शकरम्।
स्थापित शिवलिङ्ग तु तथा वैवस्वतो हरे!॥ १०

मयापि तत्र लिङ्ग च पूजित सुप्रतिष्ठितम्।
तत्रादिसर्ववृत्तान्त कथित च पुरा तव॥ ११

इदानीं गच्छ पन्थानं शुभाः सन्तु तवाच्युतः ।
इत्युक्त्वाह महेशानि स्वसद्मागच्छमम्बिके ।। १२

ततो विष्णुश्च शक्रश्च वायुश्च वरुणस्तथा ।
धनदः पावकश्चन्द्र आजग्मुर्धरनीतलम् ।। १३

प्रमोदमतुलं प्राप्ता आसाद्य रसवृंहितम् ।
अक्लिष्टं च वरिष्ठं च शिवक्षेत्रमनुत्तमम् ।। १४

आम्रच्छायां समालोक्य दिव्यां रसमयीं महीम् ।
ददृशिरे प्रदेशैकं भौमस्वर्गं सुरेश्वरा ।। १५

शिवलिङ्गैश्च संव्याप्तं[1] तीरयोरुभयोरपि ।
सर्वत्र सुखसंवादं[2] सर्वसिद्धिप्रदायकम् ।। १६
प्रतिपद्य[3] यथास्थानं शैलप्रासादमुद्यता ।
सम्मताश्च[4] जुहुवुस्ते विश्वकर्माणमव्ययम् ।। १७
अययौ शिल्पिनां श्रेष्ठं पादमूले व्यवस्थितः ।
प्राञ्जलिः प्रयतो भूत्वोवाच किं करवाणि भो ।। १८
इति तस्य वचः श्रुत्वा परं सारामृतोपमम् ।
स्वागतेनाह गोविन्दः पूजां कृत्वा विधानतः ।। १९

## श्रीविष्णुरुवाच

विश्वकर्मन् ! सुरश्रेष्ठ देवानां कीर्त्तिवर्धन ।
अहं स भगवान् शौरिः पद्मनाभः सुवर्च्चसः ।। २०
त्रैलोक्यभवनस्तम्भः सुरशत्रुनिवर्हणः ।
बाहुच्छायां समाश्रित्य वसन्ति मम देवताः ।। २१
यन्मायया इमे सर्वे मुह्यन्ति विबुधेश्वरा ।।
अहं स भगवान् विष्णुः साक्षादिह समागतः ।। २२
लिङ्गं प्रतिष्ठयिष्येऽहं भक्त्या देवस्य शूलिनः ।
आज्ञां कुरुष्व मे क्षिप्रं प्रासादरचनाविधौ ।। २३

---

1 $B_2$—संप्राप्तं ।

2 C—श्रुतसंवादं ।

3 C—प्रतिपत्ति ।

4 C समन्ताश्च ।

## देवा उचु

विश्वकर्मन् ! शृणुष्वेदमस्माकं वचनोत्तमम्[1] ।
धन्योऽसि कृतकृत्योऽसि सफलं तव जीवनम् ॥ २४

सनकाद्यैर्मुनिवरैर्यस्तु ध्येयो हृदि स्थितः ।
तमेव नयनाभ्यां त्वं प्रत्यक्षं दृष्टवानसि ॥ २५

कृतार्थोऽसि सुरश्रेष्ठ कृतार्थो भविता भवान् ।
यदुक्तं वासुदेवेन तच्च कर्मोपपादय ॥ २६

पूर्वं कृष्णस्य कर्त्तव्यं यथाह मधुसूदनः ।
तदनन्तरमस्माकं सर्वमेव विधीयताम् ॥ २७

## ब्रह्मोवाच

इति तेषां वचः श्रुत्वा आनन्दाश्रुपरिप्लुतः ।
बाढमित्येव सा प्राह शिल्पीन्द्रः प्रहसन्निव ॥ २८

शृणुध्वममरा सर्वे अस्मै कृष्णाय मे नमः ।
यथाह मधुरं कृष्णः करिष्येऽहं तथामरा ॥ २९

आज्ञापय हृषीकेश प्रसन्नः वरदो भव ।
क्षिप्रं प्रसादयिष्यामि सिद्धिदं वस्तुनिश्चयम् ॥ ३०

वासुदेवस्तु तच्छ्रुत्वा संपूज्य सुरवर्धकिम् ।
आनयामास तं देशं पुरा दृष्टं सुरः स्वयम् ॥ ३१

सोऽथाभ्यासे च देवस्य धेन्वन्तरशतद्वये ।
ऐशानीं दिशमास्थाय माहेन्द्रसमये शुभे ॥ ३२

शिलान्यासं कृतं सम्यक् सूत्रमानं प्रकल्पनम् ।
चकार विधिदृष्टेन दिव्यं देवनिकेतनम् ॥ ३३

सर्वसंपन्नं सुश्लिष्टं प्राकारसमतोरणम् ।
प्राङ्गणैर्विततैः शुभ्रैः साधुगोपुरमण्डितम् ॥ ३४

युक्तं कूपतडागैस्तु उद्यानैः सुमनोहरैः ।
वृक्षषण्डैः पुष्पिताग्रैर्देवदारुसचन्दनैः ॥ ३५

चंपकैस्तिलकैः शालैर्मुचुकुन्दातिमुक्तकैः ।
कदल्यशोकपुन्नागैरन्यैः पक्वैः सुधोपमैः ॥ ३६

---

1. B₂—शृण्वस्माकमिदं वचनमुत्तमम ।

पनसै सहकारैश्च खर्जूरै पूगचन्दनै ।
शालतलैर्नारिकेलैरेव बहुविधैर्वरै ॥ ३७

मालतीव्रततीभिश्च वकुलैर्नागकेशरै ।
कदम्बै पाटलैर्वृक्षै कोविदारै पियङ्गकै ॥ ३८

वृक्षैरामलकैर्दिव्यैर्दिव्यचन्दनपादपै ।
हरीतकीभिर्विल्वैश्च जलामलकपादपै ॥ ३९

मध्ये पुष्पकरणी रम्या स्वच्छतोयामकर्दमाम् ।
मुनीनामुपयोगार्थं स्नपनार्थं पिनाकिन ॥ ४०
चकार दिव्य देवस्य आश्रम चोदकाश्रयम् ।
सोपानमथ सचार विविक्त सुमनोहरम् ॥ ४१

विश्वकर्मा तत शीघ्र देवायतनमुत्तमम् ।
सपन्नमिति कृष्णाय कथयामास पार्वति ! ॥ ४२
तच्छ्रुत्वा वचन तस्य शखचक्रगदाधर ।
मनः प्रीतिमुदाचारो विश्वशिल्पिमपूजयत् ॥ ४३
आजुहाव हृषीकेशो देवान् शक्रपुरोगमान् ।
मरीचिप्रमुखा सप्त मुनयो ब्रह्मवादिन ॥ ४४
आयजुर्मुदिता सर्वे पुरस्कृत्य पितामहम् ।
पूजयामासुरव्यग्र सर्वकारणमीश्वरम् ॥ ४५
आरेभिरे महायज्ञ शिवलिङ्ग प्रतिष्ठितम् ।
जुहुत्यग्नौ च विधिवन्मन्त्रपूते सुसस्कृते ॥ ४६
लिङ्ग च पूजयामास विष्णु शत्रुनिसूदन ।
गन्धपुष्पैरलङ्कारैर्भक्त्या परमयाम्बिके ! ॥ ४७
सान्निध्यमभवत्तत्र शभुर्वाणी विनिस्मृता ।
मधुरा शान्तिदा लिङ्गे प्रत्यक्ष सुरससदि ॥ ४८
वासुदेवप्रिय वाक्य वाक्यज्ञ ! शृणु वै मम ।
सिद्धोऽह भवत. प्रीत्या किं करोमि च ते प्रियम् ॥ ४९

शुश्राव तद्धृषीकेशो वाक्य वाक्यविदावर ।
कृताञ्जलिपुटो[1] भूत्वा शृण्वन्ति ऋषिदेवता ॥ ५०

---

1 $B_2$—कृताञ्जलिपुटी ।

उत्फुल्लनयना सर्वे देवा सन्तोषमानसा ।
पूजयन्ति विरूपाक्ष वाक्यपुष्पैर्मनोहरै ॥ ५१

देवा ऊचु

नमस्ते परमानन्द ! यज्ञगर्भ ! सनातन ! ।
सनातनतरातीत ! दिव्यज्ञान ! नमोऽस्तुते ॥ ५२

प्रसादितमनोल्लास ! भूतभव्यभवत् प्रभो ! ।
प्रभवो भवभूतानामाद्यतामृतविग्रह ! ॥ ५३

अधिकर्मासि देव ! त्व निष्कल कलिवर्जित ।
सिद्धस्त्व विबुधा प्राहु प्रजापतिपति प्रभु ॥ । ५४

जगदीश अनाद्यन्त अप्रमेय अनक्षर ।
योगिध्येय नमस्तुभ्य शब्दस्पर्शमलाकृते ॥ ५५

अव्यक्त व्यक्तभावेन त्रैगुण्यविषयेरितम् ।
निर्गुणो गुणभोक्ताऽसि पाहि लोकान् पुनीहि न ॥ ५६

सुब्रह्मण्य वरेण्यस्त्व भक्ताना भक्तवत्सल ! ।
अतीतानागतज्ञान-सिन्धवे च नमो नम ॥ ५७

इति देवैस्नुतो देवि[1] ! वाक्यपुष्पै कपालभृत् ।
देवदेवो जगत् स्वामी ऋभुवाक् पुष्पषट्पदी ॥ ५८

ब्रह्मोवाच

तत प्रसन्नवदनो वासुदेवो जगत्पति ।
विहसन् श्लक्ष्णमत्यन्तमिद स्तोत्रमुदीरयेत् ॥ ५९

श्रीवासुदेवोवाच

मन्दाकिनीकनकपकजरेणुशुभ्रा,
धत्ते तनु सपरिपिञ्जरगौरशोणाम् ।
त्व यच्छसीश ! धवलामलशैलमूर्ध्नि,
व्यत्यस्त मूर्ति परमेश्वर ईश्वरस्त्वम् ॥ ६०

---

1 $B_2$—देवो ।

दैत्येन्द्रकोटिमथनोद्यमपौरुषाय,
देवेन्द्रवन्द्यचरणाम्बुजसजयाय[1] ।
वेदार्थकारमतिकारणकारणाय,
फुल्लारविन्दविपुलायतलोचनाय ॥ ६१

साध्याय साख्यमतिसेवितसुप्रियाय,
दिव्यज्ञवस्तुरहिताय सदाशिवाय ।
श्रीकृत्तिवास परमार्थगुणात्मकाय,
त्रैलोक्यबीजमतिशाश्वतईश्वराय ॥ ६२

निर्वाणहेतव अनिन्द्यतमोजयाय,
ससारबन्धनभिदे गहनोपमाय ।
वाच यमस्य[2] शिवकारणकारणाय,
भूताधिपाय खलु भूतहितोद्भवाय ॥ ६३

स्थित्युद्भवप्रलयहेतु विधानकाय,
यक्षाधिपाय निधिपाय कुवेरकाय ।
आपोधिपाय नियत वरुणात्मकाय,
अर्चिष्मते च जगदीश हुताशनाय ॥ ६४

भूतान्तकान्तकरणे कलिविग्रहाय,
नित्य विकाररहिताय नमो हराय ।
नित्यविकारमतिशुद्धिसुरात्मकाय,
ससारदुस्तरमहोदधितारणाय ॥ ६५

मोहप्रपञ्चरचकाय नमो भवाय,
भक्तिप्रियाय वरदाय जगन्मयाय ।
देवासुरदि वरदाय नमो मृडाय,
वेदान्तबुद्धिनिहिताय महेश्वराय ॥ ६६

शब्दादिह्रस्वमतिदीर्घरव प्लुताय,
मध्यान्तकादिरहिताय मनोमयाय ।
दीप्तार्कवह्निजिततेजस ईश्वराय,
पर्यङ्कभोगभुजगाधिपतौ शयाय ॥ ६७

---

1 B₂—युग्मकाय ।

2. B²—वादे मनस्य, C—वाचो मनस्य ।

योगेश्वराय गिरिजापतये मृडाय,
विश्वोपकारकरणाय हरिप्रियाय।
देवासुरादिवरदाय नमो मृडाय,
वेदान्तबुद्धिनिहिताय महेश्वराय॥ ६८
विश्वात्मकाय मरुदग्निमहीधराय,
ब्रह्माच्युतेश वरुणात्मगुणाञ्चिताय।
सर्वाञ्चितस्वचरणाम्बुजयुग्मकाय,
नेत्राग्निभस्मीकृतकामशरीरकाय ॥
ब्रह्मेन्द्रविष्णुचरणाम्बुजसेविताय,
वर्णान्तवन्ध्यरहिताय नम शिवाय॥ ६९
वामदेव नमस्तुभ्य सद्योजाताय वै नम।
इत्याद्यप्रभवस्तुभ्य पर ब्रह्म नमोऽस्तु ते॥ ७०
षडक्षर परो मन्त्र परो देव परश्रुत।
परमार्थ परशान्तो नमस्तद्धृदयायते॥ ७१
नम सूक्ष्मातिसूक्ष्माय व्यापिने परमेश्वर।
बृहन्मूर्त्तिमते तुभ्यमनाश[1] अपरिच्छद[1]॥ ७२
सुब्रह्मण्य नमस्तुभ्यमार्तिहन् परमेश्वर।
आध्रीयमान उत्पात भक्तनामभयप्रद॥ ७३
निष्काम-कामदाकामिन् कामदेवनिसूदन।
दया (?) दक्षक्रतुध्वसिन्नुग्र भीम नमोऽस्तु ते॥ ७४
अन्तर्धान अशक्तोऽसि कालिकाप्रिय सुव्रत।
बहुरूपविरूपाय अक्षयाव्यय शकर॥ ७५
विधानस्यामृत स्थाणो विश्वबीज अजाक्षर।
प्रशान्त पूर्ण अनघ दोष्यदोषाक्षरप्रद॥ ७६
योगिध्येय सदाचिन्त्य विद्योत अतुलप्रभ।
भावनाशिवशान्तस्त्व किञ्जल्क-समलोचन[2]॥ ७७
अप्रिय परम ज्योतिरुतकल कालविप्लुतम्।
निर्मल परम शान्त य वदन्ति मनीषिण॥ ७८

---

1 $B_2$—अनास अपरिच्छद, C—मन्यामन्यपरिच्छद।
2 $B_2$—किञ्जलपामधिलोचन, C—किञ्जलमधिलोचन।

वाङ्मनः कायकर्मोत्थ तम सत्त्व रजादिषु ।
त्वय्यर्पित मया पुण्य त्वत्पादाश्रय आश्रयम्[1] ॥ ७९

त्व मनस्त्व शुभध्येयस्त्वत्तो याति[2] गतागतम् ।
प्रसीद भवकीर्त्तेय कृत्तिवास नमोऽस्तु ते ॥ ८०

इति समुद्गतस्तुति वचनोपचारचतुरो हरि ।
अतिमुदित विकाशवितनो विस्मयोत्फुल्ललोचन[3] ॥ ८१

निखिलतनूरुहोत्फुल्लाङ्कित करकमलकुड्मलोवद्धवुद्धया ।
क्षितितलनिपतित सकलकरणग्रामो नमश्चक्रे ॥ ८२

अथ विकशितवदनकुहरहासोद्भास सोमोऽर्कहारो हर ।
शरदीशकेशममल प्रियमुपगत कलगत शान्ति पूर्व वभाषे ॥ ८३

वेद्मयह त्वदभिप्राह वरदोऽहमिहागत ।
अह त्व त्वमह नित्य सत्यमन्तरतास्ति न ॥ ८४

धूर्जटेर्वचन श्रुत्वा वासुदेवोऽमरै सह ।
नमश्चक्रे सुरारिघ्नमीशान वषभध्वजम् ॥ ८५

उवाच शकर शम्भो ! ह्यावयोरन्तर न हि ।
तथापि वरदोऽसि त्व वृणोमि वरमुत्तमम् ॥ ८६

यदि प्रसन्नो भगवान् ! यद्यनुग्रहतास्ति मे[4] ॥
सान्निध्य चास्य लिङ्गस्य भवान् भवितुमर्हति ॥ ८७

येऽर्च्चयन्ति नरा भक्त्या स्तुवन्ति नियतेन्द्रिया ।
ये च पश्यन्ति सान्निध्य तेषा समनुगृह्यसे ॥ ८८

ददासि विपुलामृद्धि रुचिरा नित्यशाश्वतीम् ।
नित्य सुदुर्लभा दिव्यामेष मे वर ईप्सित ॥ ८९

तथेत्याह विरूपाक्ष शृण्वन्तु त्रिदशेश्वरा ।
निवोध मधुहन्तस्त्व[5] लिङ्गस्यास्य माहात्म्यकम् ॥ ९०

---

1 $B_2$—त्वत् प्रसादाश्रयाश्रयम् ।

2 $B_2$—शिवध्येय त्वत्तो यामि ।

3 $B_2$ विदितमनो ।

4 $B_2$ ते ।

5. $B_2$. मधुहन्ता त्व ।

सिद्धोऽहं सततं चात्र सिद्धलिङ्गे प्रतिष्ठितः ।
ददामि सिद्धिं तस्मै च यस्तु भक्त्यार्च्चयिष्यति ॥ ९१

अपैष्टगुणमैश्वर्यं शारीरकरणं महत् ।
स्वर्गापवर्गफलदं प्रयच्छामि न संशयः ॥ ९२

ज्ञानं मोक्षव्यवस्थानं भुक्तिमुक्तिफलप्रदम् ।
प्रभावात्तव गोविन्द ! सिद्धोऽहं सिद्धिदः स्वयम् ॥ ९३

एतल्लिङ्गं त्वया यस्मात् पूजितं सुप्रतिष्ठितम् ।
सिद्धेश्वरमिति ख्यातिं त्रिषु लोकेषु यास्यति ॥ ९४

तव लिङ्गं समाश्रित्य मुनयः संशितव्रताः ।
सिद्ध्यन्ति सर्वदा सिद्धाः सत्यं सत्यं मयोदितम् ॥ ९५

नित्यनैमित्तिकां पूजामाहरामि जनार्दन ! ।
दास्यामि परमामृद्धिं नृभ्यो नित्यं प्रयत्नतः ॥ ९६

ये मां चात्र प्रपूजन्ति जना दुर्वाङ्कुरैरपि ।
ददामि सुकृतं[1] तेषामनन्तं क्रतुभिः समम् ॥ ९७

स्तवेनानेन ये केचित् स्तुवन्ति मम नित्यशः ।
एककालं द्विकालं वा त्रिकालमथवापि वा ॥ ९८
तेभ्योऽहं सुलभो नित्यं पूरयामि मनोरथम् ।
दास्यामि परमं लोकं कैलासमिति यच्छ्रुतम् ॥ ९९
वित्तार्थी वित्तमाप्नोति पुत्रार्थी पुत्रमाप्नुयात् ।
विजयं च यशोलाभं विद्यालाभं तथा श्रियम् ॥ १००
रूपलावण्यसौभाग्यं भोगाश्च विविधोज्ज्वलाः ।
षण्मासाभ्यन्तरेऽभ्यासं जायते श्रुतिरुत्तमा ॥ १०१
स्तोत्रप्रभावात्तदिदं श्रेयश्चोक्तं मयाच्युत ! ।
इहलोके परत्रापि धन्यं पूज्यतमं मतम्[2] ॥ १०२
अपरं शृणु गोविन्द लिङ्गस्यास्य माहात्म्यकम् ।
महाप्रलयकालेऽपि न नाशमधिगच्छति ॥ १०३
सिद्धोऽहं सिद्धिदः साध्यं साधनार्थमनुत्तमम् ।
सिद्धिं ददामि विपुलां नाम्ना सिद्धेश्वरः स्मृतः ॥ १०४
चिन्तामणिसमं विद्धि देवदैत्येन्द्रवन्दितम् ।
पूरयेन्निखिलान् कामान् भक्तियुक्तस्य देहिनः ॥ १०५

---

1 $B_2$ प्रकृतं ।                    2. $B_2$ मम

भावयित्वा नरा नार्यो देवभाव प्रपेदिरे ।
देवोऽपि मुक्तिमाप्नोति मुनयश्चिरजीविन ॥ १०६
गन्धर्वो मनुजेन्द्रत्व देवो विद्याधरत्वकम् ।
सिद्धेश्वरे प्रसन्ने च विपुला[1] च गति लभेत् ॥ १०७

श्रीशकर उवाच

अथ काम्य प्रवक्ष्यामि भेदमाराधनस्य च ।
शारीरकरण श्रेष्ठ खगेन्द्रत्वकर हरे ॥ १०८

सिद्धेश्वर समासाद्य ब्रह्मचर्यव्रते स्थित ।
शान्तो दान्तो जितक्रोधो यम सयमतत्पर ॥ १०९

निर्ममो निरहकार शिवसकल्पमानस ।
गड्डुकादानमीशे च लक्षसख्य समाचरेत् ॥ ११०
एक द्वौ च बहून् लक्षान् कृतसकल्पमानस ।
एतल्लिङ्ग पूजयित्वा स्नापयेत् गड्डुकैर्नर ॥ १११
समाप्ते च व्रते विष्णो पुन पूजोपचारकै ।
श्रावयेच्च ततो लिङ्ग पुरतश्च कृताञ्जलि ॥ ११२

ॐ नमस्ते सिद्धनाथाय हरये सिद्धिरूपिणे ।
त्र्यम्बकाय च विश्वाय ब्रह्मविष्णुशिवाय च ॥ ११३
शिवशक्तिविमिश्राय मिश्रज्ञानाय वेधसे ।
प्रसीद मम देवेश यत सिध्यन्तु[2] मे क्रिया ॥ ११४

एवमुक्त्वा च निष्क्रम्य भवनादेव सगत ।
बिन्दुद्रवजले पुण्ये सर्वपापप्रणाशने ॥ ११५
स्नात्वा सम्यक् जल दत्त्वा देवादिभ्यो यथेच्छया ।
अनन्तवासुदेवाख्य पूजयेत् सुसमाहित ॥ ११६
देवी पादहर चैव तथान्याश्चैव देवता ।
नमस्कुर्यात् प्रयत्नेन समन्ताज्जगति स्थिता ॥ ११७

विनायकमविघ्नेश वृषभ कृत्तिकासुतम् ।
कृत्तिवास सुराधीश देवी कल्पतरु तथा ॥ ११८

---

1 B[2]—विमला ।
2 C—सिध्यन्ति ।

गणचण्ड च सावित्रीमष्टमूर्त्ति समासत ।
अन्याश्चापि समीपस्थान् देवदेवस्य भक्तित. ॥ ११९

प्रदक्षिणशत कुर्यान्मन्त्रमुच्चाय मन्त्रवित् ।
नमस्कार-कृत पूर्वं मन्त्र एव षडाक्षर ॥ १२०

प्रतिप्रदक्षिण शस्त शतमेव समाहित ।
प्रविश्य भवन दिव्य कृतिवासस्य वन्दनम् ॥ १२१

वन्दनानन्तर पुष्पैर्यथाविभवतोऽर्च्चनम् ।
अर्च्चयित्वा नमस्कार भूय शतमतन्द्रित ॥ १२२

यत्किंचित् सर्वभावेन मन्त्रेणानेन शकरम् ।
गन्धपुष्पादिक सर्व मन्त्रे पुष्पाञ्जलि तथा ॥ १२३

ॐ नमस्ते प्रकृतिस्थाय क्षेत्रक्षेत्रवतावर[1] ।
बीजबिन्दु पर शुभ्र परमात्मनन् परावर ॥ १२४

अव्यक्त[2] रससारज्ञ बहुसिद्धान्तवत्प्रिय ।
प्रसीद सुमुखो भूत्वा होममन्त्र प्रयच्छ मे ॥ १२५

अभ्यर्च्च्य नियमस्थस्तु कृत्तिवासाय शक्तित ।
य कश्चित् श्रूयते शब्द स एव परमाक्षरम् ॥ १२६

तेन मन्त्रेण होतव्य वक्षमाणे च वर्त्मनि ।
इह सर्वसुख भोग सिद्धि पारमिका लभेत् ॥ १२७

लब्धमन्त्र समादाय निर्ज्जगाम शिवालयात् ।
कल्पद्रुम समासाद्य त्रि कुर्याच्च प्रदक्षिणम् ॥ १२८

तत प्रणाम शिरसा प्राञ्जलिप्रग्रहेण च ।
भक्त्या चाव्यभिचारिण्या कुर्यान्मन्त्रमुदीरयन्[3] ॥ १२९

कृतत्रेताव्यतीतानि सहस्राणि युगानि ते ।
कल्पातीत क्षयातीत महाप्रलयसस्थित ॥ १३०

अक्षय शाश्वतोमूर्त्तिस्त्रिविधात्मा च कामद ।
रुद्रोऽसि सोपरिष्टोऽसि अमृतोऽसि शिवोऽसि न ॥ १३१

प्रयच्छ मे वर शस्त प्रसन्नोऽसि महाद्रुम ।
एकमेव शरीर त्व निश्चय कृत्तिवासस ॥ १३२

---

1 B² —क्षेत्रे क्षेत्रविदाम्बर ।

2 B² —सुव्यक्त

3 B²—मन्त्रमुदीरयेत् ।

एवमुक्त्वा ततो विष्णो स्मरन् शम्भु हृदम्बुजे।
सहस्राण्यष्टपत्राणि पतितानि समुद्धरेत् ॥ १३३

निम्बपत्र समादाय अध्यात्मनियतेन्द्रिय'।
वैकल तमपामार्ग शुष्कपालाशमेव च ॥ १३४

आज्य दधिक्षीरमधुयवधान्याक्षतानि च।
तथा वै पञ्चसमिधः शैवाग्न्यर्थ नरोत्तम ॥ १३५

दक्षिणे देवदेवस्य सन्निधौ कृत्तिवासस।
बाहुमात्र चतुरस्र होमकुण्ड निखानयेत् ॥ १३६

प्रलिप्य गोमयै रात्रौ कुशास्तरणसम्मितम्।
पूर्णपात्रचतुष्क च गन्धपुष्पफलान्वित ॥ १३७

धूपनैवेद्यकै पूज्य अग्न्यासादनमेव च।
निराहार शुचि स्नातो होमकर्म समाचरेत् ॥ १३८

आज्यक्षीरकदध्याद्यैस्तथा निम्बदलादिकम्।
समेत्य तेन मन्त्रेण जुहूयाज्जातवेदसि ॥ १३९

प्रथम देवमीशानमोकारण शतानि च।
देवी च गणचण्ड च कार्त्तिकेय विनायकम् ॥ १४०

वृष कल्पद्रुम चापि सावित्री तदनन्तरम्।
प्रति-प्रति शतेनाष्टौ जगत्याश्चैव शान्तये ॥ १४१

अछिद्रेणाभिपूतेन सिद्धचर्थं सुप्रयत्नत।
कृत्तिवासप्रसादेन कृत्वाप्नोति शिव पदम् ॥ १४२

अप्रकाश्या इय गुह्यकर्मसिद्धिरनुत्तमा।
या वै न वेत्स्यति भवान् सिद्धिद स इहोच्यते ॥ १४३

ये नरा जुह्वतीत्यग्नौ मदुक्तव्रतनिष्ठिता
ते भवन्त्यग्निमासाद्य मन क्षिप्तमिवाचल ॥ १४४

चर्ममासास्थिरुधिरै शरीरैर्नभवन्ति ते।
ज्ञानयोग समासाद्य मा व्रजन्ति रमापते ॥ १४५

पक्वपर्ण समादाय भक्षयित्वाऽविचारतः।
ये ये वाञ्छन्ति त मन्त्र ते व्रजन्ति सुरालयम् ॥ १४६

हसवर्हिणयुक्तेन विमानेनार्करोचिषा।
हसध्वजपताकेन किङ्किणीजालमालिना ॥ १४७

सुरस्त्रीभिर्वीज्यमानाश्चामरव्यजनै शुभै ।
गन्धर्वध्वनिभिर्जुष्टै सेव्यमाना वराप्सरै ॥ १४८
नाकपृष्ट समासाद्य शक्राद्यै परिपूजिता ।
स्वेच्छाविलाससपन्नास्ते वै मुमुदिरे चिरम् ॥ १४९
सर्वभोगसमृद्धाश्च कामगा कामरूपिण ॥
कृत्तिवासप्रसादेन न च्यवन्ते कदाचन ॥ १५०
कर्मसिद्धिरिय सम्यक् भूलोके च सुदुर्लभा ।
तवप्रसादाद्गोविन्द मया प्रोक्त नृणा हितम् ॥ १५१
य शृणोति इद काम्य पठेद्वा विमलाशय ।
जन्मान्तरकृतात्पापात् तत्क्षणादेव मुच्यते ॥ १५२

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे सिद्धेश्वरमाहात्म्येऽष्टादशोऽध्याय[1] ॥

———

1. B[2] ·· °सिद्धेश्वरमाहात्म्येऽष्टमोध्यायः ।

# ऊनविंशोऽध्यायः

## ब्रह्मोवाच

एव भगवता चोक्त पुरा कृष्णाय पार्वति ।
सर्वलोकहित सम्यक् काम्य फलमनुत्तमम् ॥ १

उत्फुल्लनयनास्तत्र देवा शक्रपुरोगमा ।
ववन्दिरे महात्मान कृत्तिवास जगद्गुरुम् ॥ २

तथा च प्रहसन् विष्णु स्तुत्वा वाक्यविदावरः ।
साष्टाङ्गेन नमस्कृत्वा कृतकृत्योन्तरात्मना ॥ ३

समीक्ष्य देवराज स [1] शशाङ्ककृतशेखरम् ।
नीलकण्ठ महादेव भूय एवाभिपृच्छत [2] ॥ ४

अपर श्रोतुमिच्छामि साधन हितमुत्तमम् ।
भूतानुकम्पया देव तन्ममाख्यातु [3] मर्हसि ॥ ५

व्रतोपवासनियम—जाप्य [4] होमार्च्चनक्रिया. ।
येन सिद्धयन्ति देवेश तन्ममाख्यातुमर्हसि ॥ ६

अमृतत्वाधिगच्छन्ति विद्यागमनमेव च ।
विभो ! केन प्रकारेण मानवास्त्वत्परायणा ॥ ७

निशम्येद हृषीकेश वचन परमामृतम् ।
विहसन् श्लक्ष्णया वाचा तत प्राहान्धकान्तक । ८

## श्रीशकर उवाच

व्रतोपवास नियमैर्जाप्य [5] होमैस्तथार्च्चनै ।
तीर्थावगाहनै पुण्यैर्यज्ञदानतपोबलै ॥ ९

---

1 $B_2$—समीपे देवदेवस्य ।

2 $B_2$—एवाभ्यपृच्छत ।

3 $B_2$—तन्त्रमाख्यातु ।

4 $B_2$—याज्ञ ।

5 $B_2$—याज्ञ ।

पितॄणा पिण्डदानैश्च देहत्यागैरभोजनै[1]।
सिद्धयन्ति पुरुषा[2] क्षेत्रे कुत्रचिच्च जनार्द्दन ! ॥ १०

अस्मिन् क्षेत्रे निरायासे मन. सकल्पमञ्जसा ।
सिद्धेश्वर समासाद्य महती सिद्धिमाप्नुयु. ॥ ११

सुनिश्चितेन प्रोक्तव्य गड्डुकादानमीश्वरे ।
तद्विधान शृणु हरे ससाराणवतारकम् ॥ १२

प्रत्यह सतत चैव प्रोचारणसमन्वितम् ।
गड्डुकादानमीशाय कर्त्तव्य सिद्धिमिच्छता ॥ १३

गड्डुकान्तरत पूज्य यथाविभवत शिवे ।
मन्त्रेणानेन सस्कार सप्रदक्षिण पूर्ववत् ॥ १४

ॐ नम सिद्धिनाथाय सर्वपापहराय च ।
नमस्करोमि भूतात्मन्नमृतत्व प्रयच्छ मे ॥ १५

अथैकादशपञ्चास्य लिङ्गस्यैव समीपत ।
अष्टाङ्गेन नमस्कार त्रयो वारान् समाहित ॥ १६

क्षामयित्वा विनिष्क्रम्य कृत्तिवासान्तक व्रजेत् ।
दक्षिणे लिङ्गराजस्य भूत्वा मन्त्रमुदीरयेत् ॥ १७

जय स्वामिन्ननादिस्त्व जन्ममृत्युजरापह ।
कीर्त्तिद कीर्त्तिमाँल्लोके कृत्तिवास ! प्रसीद मे ॥ १८

इति दण्ड नमस्कार कृत्वागच्छदतन्द्रित ।
ततो भिक्षाटन कार्यं गृहात् कतिपयात् क्वचित् ॥ १९

पक्त्या भागद्वय कार्यं मद् वाक्यस्य प्रमाणत ।
एव नियममास्थाय भिक्षामादाय सत्वरः ॥ २०

एकभाग द्विधा कृत्वा लिङ्गस्यास्य निवेदयेत् ।
अपर वलिकर्मादौ दत्वाश्नीयात् स्वय तत ॥ २१

त्रिकाल च नमस्कार कृत्वा सयमतत्पर ।
रात्रौ शयीत तत्रैव सिद्धेश्वरपरायण ॥ २२

---

1 $B_2$—देहत्यागैस्तथाशनै ।

2, $B_2$—सिद्धयस्त्रीपुरुषा. ।

य एव कुरुते भक्त्या गड्डुकादानमुत्तमम् ।
पूर्णलक्षे त्वविघ्नेन कृतकृत्यो भवेन्नर ॥ २३

प्रददाम्यमृत तुष्टस्तस्मै नरवराय च ।
शृणु येन प्रकारेण सत्य सत्यमह हरे ॥ २४
गड्डुकापूरणे काले यदा पश्यति साधक ।
हेमदर्दुर सूक्ष्मैक तमादायाशु भक्षयेत् ॥ २५

तत्क्षणात् समपद्येत ओजवीर्यबलान्वित ।
ज्ञानसम्पन्न निर्द्वन्द्व दिव्यचक्षुर्माहात्म्यवान् ॥ २६
आवयोर्नित्यमाविष्णो रुद्रभूता अकल्मषा ।
आकाशादाययु प्रीत्या विमानेन सुराङ्गना ॥ २७

तमाहुश्चारुहस्वेति विमान सूर्यवर्च्चसम् ।
प्रेक्षिता देवराजेन त्वा च नेतु त्रिपिष्टपम् ॥ २८
इत्युक्त्वा वरयोषिद्भिरारोप्य रथउत्तमे ।
गम्यमाना यथारम्या मुक्तिर्मर्त्यौ विहायसि ॥ २९
दिव्यगीतरवैर्वन्द्यैः सेव्यमानाः सुरस्त्रिय ।
प्रभाभिर्द्योतमानाश्च निन्युस्तममरावतीम् ॥ ३०
तत्र दृष्ट्वा सहस्राक्षो विधिना तम पूजयेत् ।
सोऽपि भात्यतितेजस्वी पूजितस्तन्निवासिभि ॥ ३१
आदाय तेभ्य पूजा स रुद्रलोक तथा व्रजेत् ।
रुद्रस्यानुचरो भूत्वा रुद्रेण सह मोदते ॥ ३२
रुद्रभोग सुदु प्राप्य वुभुजे शाश्वती समा. ।
सिद्धेश्वरस्य माहात्म्यादेवमुचेऽहमच्युत ! ॥ ३३

विष्णुरुवाच

नमस्तेऽस्तु विरुपाक्ष सर्वभूतहिताय च ।
ज्ञानमूर्त्ति-विशुद्धाय कृत्तिवासाय वेधसे ॥ ३४
सम्यगुक्त त्वया शम्भ गड्डुकादानमीश्वरे ।
तत्कर्त्तव्य महादेव कस्माच्चैव जलाशयात् ॥ ३५
एतन्मे सशयो जातः सशय छेत्तुमर्हसि ।
उपदेशप्रसादेन भूताना च हिताय भो ॥ ३६

## श्रीशङ्कर उवाच

शृणु कृष्ण महावाहो सम्यगुक्त त्वयानघ ।
लिङ्गस्यास्यैव दक्षे च पश्य कुण्ड मनोहरम् ॥ ३७

शुद्धस्फटिकगोक्षीर-नीरं त्वमृतसंनिभम् ।
प्राणिना हितमत्यर्थं महाप्रलयसस्थितम् ॥ ३८

कुण्डादस्मान्महावाहो ! स्नपन मम कारयेत् ।
सिद्धे श्वरसमीपे हि सिद्धकुण्डमिद मम ॥ ३९

सिद्धनाथस्य कुण्डेऽस्मिन् स्नपनाचमनेऽपि वा ।
गड्डुकापूरणे काले शित पश्येज्जलौकसम् ॥ ४०

सोऽमृत पावन सोमः सद्यः प्रत्ययकारकः ।
पुण्ययोग स विज्ञेयस्तमादाय समश्नीयात् ॥ ४१

स्फुरत्यमलविज्ञान गाम्भीर्यगुणासम्भवम् ।
चाक्षुषप्रवरा विद्या दूराद्दृष्टविमोहिनी ॥ ४२

कामचारित्वमाप्नोति कामग. सर्वभोगवान् ।
स्वेच्छया चरते लोकान् पूर्णां पश्यति मेदिनीम् ॥ ४३

सर्वग सर्वविज्ञश्च नास्ति सर्वमगोचरम् ।
शिवयोगपरो युक्त शिवदेहे प्रलीयते ॥ ४४

अथ कि बहुनोक्तेन सिद्धेश सिद्धिद सदा ।
सिद्धेश्वर समाश्रित्य[1] नरो मामेति नान्यथा ॥ ४५

चतुर्युगसहस्राणि मन्वन्तरयुगेष्वपि ।
सिद्धयन्ति सिद्धिकामाश्च माहात्मात्तव केशव ॥ ४६
भवदस्मदभेदोऽस्ति कार्य साध्यामहे वयम् ।
सर्वकामिकसिद्धोऽय समयश्च ममाच्युत ॥ ४७

## ब्रह्मोवाच

एवमुक्त्वा ततो देवि ! नीलकण्ठ कृपानिधि ।
अन्तर्दधे स विश्वात्मा ययौ वैकुण्ठमच्युत ॥ ४८

---

1. $B_2$—समासाद्य

लिङ्गानि पूजयामासुस्तत्र शक्रादयोऽपि च ।
पुरावृत्तमिद गौरि ! मया प्रोक्त तवाग्रत. ॥ ४६
पुराण देववृत्तान्त पुराणे परिकीर्त्तिमम् ।
स्वर्गमारोग्यमैश्वर्यं धन्यमाख्यानमुत्तमम् ॥ ५०
य शृणोति नरो भक्त्या पठेद्वाऽप्यमलाशय ।
स तरत्यखिलान् दुर्गानिह प्रेत्य स मोदते ॥ ५१
चरित सिद्धिद त्वेक मर्त्त्यलोकेषु कोर्त्तितम् ।
सिद्धश्वरस्य देवस्य श्रुत्वा पापक्षय भवेत् ॥ ५२

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे सिद्धेश्वरानुकीर्त्तनो नाम ऊनविशोऽध्याय.[1] ॥

———

1 B₂—सिद्धेश्वरानुकीर्त्तनो नाम नवमोऽध्याय ।

# विंशोऽध्यायः

## ब्रह्मोवाच

शक्रेण निधिपेनैव वरुणेन च वायुना ।
पावकेन च चन्द्रेण पूजित लिङ्गमम्बिके ! ॥ १

सेवित त्रिदशैर्नित्य ब्रह्मोपेन्द्रामराधिपै ।
प्रसादरत्नैर्दिव्यैर्व्यक्त लिङ्ग समन्तत ॥ २

एव कृतयुगस्यादौ दैवतैरपि पूजितम् ।
कोटिलिङ्गसमग्रैश्च कोटिभि कमलानने ! ॥ ३

पुराधितवाश्च लिङ्ग त्रिभुवनेश्वरम् ॥
सच्चिदानन्दरूप च प्राप्तवान् विपुल फलम् ॥ ४

मनुष्या किन्नरा यक्षा रक्षासि पितरस्तथा ।
सिद्धोरगास्तथा देवा ये चान्ये कर्मबन्धका ॥ ५

कृत्वेह कर्म ते सर्वे भुक्त्वा भोगाश्च स्वर्गता ।
कालधर्मं समासाद्य पुन. कालवश गता ॥ ६

भाविन कर्मणश्चास्य सुखदु खादिकान् बहून् ।
प्राप्नोति मनुजो नित्य सत्य सत्य शिवप्रिये ! ॥ ७

प्रविचार्य प्रयत्नेन भूमौ कर्म नियोजितम् ।
कारण कर्मभूताना कर्म विश्वप्रवोधनम्[1] ॥ ८

कर्मणा प्रेरितो जन्तु सुखदु.खेषु रज्यते ।
सुखेष्वभिरतो नित्य न दु.खमभिकाक्षति ॥ ९

कर्मणा प्रेरितो नित्य सुखेप्सुर्दु खमेष्यति ।
देवासुरमनुष्याश्च सर्वे कामवशगता ॥ १०

कर्म एव प्रशसन्ति अपि ब्रह्मादय सुरा ।
कर्मनिष्ठापर प्राहु प्राणै कण्ठगतैरपि ॥ ११

---

1 $B_2$—प्रबोधकम् ।

कर्मेन्द्रिय मनो बुद्धिः कर्म एव शुभाशुभम् ।
कर्म प्रभवते नित्य सुखदुःखोपपादकम् ॥ १२
मातरिश्वा यथाकाशे स्वेच्छया प्ररयेद् घनान् ।
तावत् कर्म समादाय योजयत्यनिश नरान् ॥ १३
आरोप्य चक्रे मृत्पिण्ड भ्राम्यमाण कुलालवत् ।
निर्ममे च यथाकाम कर्म एव च कारणम् ॥ १४
तीयगूर्ध्वमथो लोके लोकालोके जलाशये ।
भूयो भूयोऽनुभूता स्म ससारे कमबन्धने ॥ १५
अछिद्रेण सुविघ्नेन कर्म प्रभवते जगत् ।
प्रमाणमेव भूताना धर्माधर्म प्रतिष्ठितम् ॥ १६
अधश्चोर्ध्व च वर्तन्ते क्रियाकाण्डाश्रिता जना ।
तस्मादेव विदित्वैव क्रियाकाण्डाश्रिता सुरा ॥ १७
भुज्यते नात्र सन्देहः स्वकृत च शुभाशुभम् ।
आजन्मोपार्जित कम कर्मणैवोपभुज्यते ॥ १८
भूयो भूयोऽपि देवत्व कर्मणा प्राप्नुयु सुरा ।
जातिस्मरत्व मेधावी मनुजेन्द्रत्व पुष्कलम् ॥ १९
इह यत् क्रियते कर्म शुभ वा यदि वाशुभम् ।
भुज्यते तत्परे लोके प्रवदन्ति मनीषिण ॥ २०
देशे काले च पात्रे च पुण्यमप्यल्पमक्षयम् ।
विशेष पुण्यमाख्यात तीर्थे बिन्दुह्रदेऽम्बिके ॥ २१
माहात्म्य तस्य वक्ष्यामि पुण्य बिन्दुह्रदस्य च ।
शृण्वन्तु त्रिदशा सर्वे त्व च शङ्करवल्लभे ॥ २२
त्रैलोक्ये यानि तीर्थानि पुण्यक्षेत्राश्रमाणि च ।
कान्तारवननद्यश्च गिरयश्च मनोहरा[1] ॥ २३
सरासि ह्रदकूपानि निर्झरा सागरा प्रपा ।
गङ्गाद्या सारत सर्वा क्षीरोदाद्यर्णवस्तथा ॥ २४
स्रवन्ति यत्र वै सर्वे बिन्दुजालस्वरूपिण[2] ।
बिन्दु स्रवन्ति विश्वस्य तेन बिन्दुसर स्मृतम्[3] ॥ २५

1 $A_1$ $B_1$—सरीसृपा ।
2. C—बिन्दुनालस्वरूपिण ।
3. $A_1$, $B_1$, C—स्मृत ।

न तेन सदृश किञ्चित् पूण्यतीर्थमुदाहृतम् ।
सिद्धोष्टे सिद्धिद चैक कल्मषाशेषनिघ्नकम् ।। २६
स्वर्गद सुखद चक बिन्दूद्भवसरस्त्रिषु ।
लोकेषु विदित दिव्य शङ्करानन्ददायकम् ।। २७
स्नात तेन जगत्कृत्स्न प्राप्त पुण्यफलोत्तमम् ।
बिन्दुसरोऽभिषकेण यस्यार्द्र च शरीरकम् ।। २८
सव्यापसव्य यद्भ्राम्य चतुरस्र तीर्थसेवनम् ।
बिन्दूद्भवजले स्नातु कला नार्हन्ति षोडशोम् ।। २९
देव दैत्येन्द्र मुनय प्रविचार्य प्रयत्नत ।
बिन्दूद्भवात्पर तीर्थ नास्तीत्यूचु परतपा ।। ३०
पुनाति निखिलान् लोकास्तत्सुरासुरमानवान् ।
नयत्यमलरुद्राख्य सकृत्स्नानकृत नरम् ।। ३१
यत्फल राजसूयैश्च समाप्तवरदक्षिणै ।
तत्फल समवाप्नोति स्नात्वा बिन्दुह्लदे सकृत् ।। ३२
स्नान सन्ध्या यथोदिष्ट वर्णधर्माश्रमस्थिता ।
स्वधर्मनिरता केचित् मुनय सशितव्रता ।। ३३
सर्वाश्रमाश्रम श्रीमास्तीर्थराजो हि बिन्दुज ।
सद्भिराचरितो धर्म. स्वर्गारोहण उत्तम ।। ३४
पितृन् देवान् मनुष्याश्च लोकपालाश्च भूधरान् ।
रुद्रादित्यवसू स्तस्य देवि [1] दिव्येन वारिणा ।। ३५
तर्पयेत् श्रद्धया भक्त्या पिण्डदानादिक च य ।
स याति रुद्रसालोक्य पितृगा परमाञ्चित ।। ३६
तारयेन्निखिलालोकान् बिन्दूद्भवजलाप्लुतम् ।
प्राप्नोति परम लोक यतो नावर्त्तते पुन ।। ३७
श्रीकृत्तिवासो भगवान्महेश्वरो यत्रास्ति नित्य गणपै समन्वित [1] ।
युतोऽष्टभिमूत्तिभिरग्रजो वरो मुमुक्षुभिर्वन्दित-पदपङ्कज ।। ३८
भजस्व देव भुवि कृत्तिवासस विश्वोपकाराय सदाग्रभूतम् ।
सूर्येन्दुवर्णं तमस परस्तादणोरणीयासमपि स्वभावम् ।। ३९

---

1. A1, B1, C—किल विग्रहान्वितः ।

पितापि पुत्र त्यजति पापिन स देवदेव पतित पुनाति च।
ददाति कैलासनिकेतनस्थितिमाकाङ्क्षिता योगिभिरात्मपावकै[1] ॥ ४०
श्रीकृत्तिवास सकलैकनाथक दृष्ट्वा नरो ब्राह्मणगोघ्न एव वा।
विमुच्यते घोरनिवन्धनादसौ प्रयाति नित्य पुरुष महेश्वरम् ॥ ४१

यद्गत्वा न निवर्त्तन्ते कल्पकोटिशतैरपि।
तत्पद किल गच्छन्ति दर्शनात् कृत्तिवासस ॥ ४२
स्वर्लोके चाथ भूलोके ज्योतिर्लोके महत्पदे[2]।
बिन्दूद्भवसम तीर्थं न भूत न भविष्यति ॥ ४३
सप्तस्वर्गेऽथ पाताले लोकालोके चराचरे।
कृत्तिवास सम लिङ्ग न भूत न भविष्यति ॥ ४४
बिन्दुह्रदजले स्नात्वा दत्वा देवान् जलाञ्जलीन्।
कृत्तिवासोऽष्टमूर्त्तिश्च दृष्ट्वाप्नोति पर पदम् ॥ ४५
जन्मानि सुफलान्यस्य कृत्तिवासाश्रिता क्रिया।
सपूर्णो गानमानानि य प्रगायति वा हरम्[3] ॥ ४६
नून व्यर्थंगत जन्म अनाराधितशङ्करम्।
कृत्तिवासे प्रसन्ने च भुक्तिमुक्तिश्च जायते ॥ ४७
तस्यैव सफला जिह्वा यस्येय शिवसस्तुति।
श्लाघ्य बाह्वोर्धारण तु यौ तु शङ्करपूजकौ ॥ ४८
सुतप्त तु तपस्तेन यस्येशानेऽर्पित मन।
शिवस्य दर्शन याभ्या सफले ते दृशौ मते[4] ॥ ४९
मुखजिह्वाभुजादि यो ध्यानोपासनवर्जित।
वञ्चयत्यात्मनात्मान सेवते यो न शङ्करम् ॥ ५०
जात्यन्धो वधिरः पङ्गु समर्थोऽप्यसमर्थवत्।
यो न पश्यति देवेश कृत्तिवास सुरार्च्चितम् ॥ ५१
ज्येष्ठ पुष्करमासाद्य सेवयेच्च शत शरत्।
बिन्दुद्भवे सकृत् स्नातुस्तुल्यमाहुर्मनीषिणः ॥ ५२

---

1 $B_1$,—पावकं।

2. $B_2$—च यत् परे।

3. $B_2$—सपूर्णो भानमानानि यः प्रणायति वा हरम्।

4. $A_1$, $B_2$—सफलौ तौ दृशौ मतौ।

कुरुक्षेत्रे चतुर्भिश्च ग्रहणे सूर्यचन्द्रयोः।
बिन्दूद्भवे सकृत्स्नात्वा तुल्यमाहुर्मनीषिण ॥ ५३

वाराणस्या तपस्तेपे युगसप्त चतुष्टयम्।
बिन्दूद्भवे सकृत्स्नात्वा सममेव न संशय ॥ ५४

गङ्गद्वारे प्रयागे वा गङ्गासागरसङ्गमे।
दशसम्बत्सरीयात्रा यत्फल समुदाहृतम् ॥ ५५

बिन्दूद्भवे सकृत्स्नात्वा समासाद्य महेश्वरम्।
तत्फल समवाप्नोति कृत्तिवास प्रसादत ॥ ५६

अहो क्षेत्रस्य माहात्म्य भौमस्वर्ग उदाहृत।
क्राशमात्र महास्फीत कोटिलिङ्गसमुच्छ्रितम् ॥ ५७

आद्याद्यतर धन्य महाप्रलयपरिणतम्।
सुरेन्द्रब्रह्मनमित क्षेत्र श्रीभुवनोत्तमम् ॥ ५८

क्षेत्र तीर्थमिद लिङ्ग तपसैव समागमम्।
त्रि लोकेषु दुष्प्राप्य प्रवदन्ति मनीषिण ॥ ५९

गतागतानयत्याशु उद्धरेदात्मन कुलम्।
सप्तपूर्वान् परान् सप्त सदैव दिवि मोदते ॥ ६०

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे बिन्दूद्भव स्वरूपो नाम विशोऽध्याय [1] ॥

---

1. $B_2$—इत्येकाम्रपुराणे द्वितीयेऽशे बिन्दूद्भव स्वरूपो नाम दशमोऽध्याय ॥

# एकोविंशोऽध्यायः

पार्वत्युवाच

साध्विद तावदुक्त च भूताना हितमुत्तमम् ।
अल्पायास महत्पुण्य स्वर्गद सुखद शिवम् ॥ १

केन वा निर्मित तत्तु सर परमदुर्लभम् ।
कथ पुण्यतम प्राप्त शङ्करप्रीतिदायकम् ॥ २

बिन्दूद्भवह्रदे ब्रह्मन् ! यानि तीर्थानि सन्ति हि ।
तेषा पृथग्विधानेन यद्यस्ति वचन वद ॥ ३

ब्रह्मोवाच

शृणु गोर्यभिधास्यामि पुरावृत्त युगान्तरे ।
शिवप्रसादाद्वेशि पुराण च सनातनम् ॥ ४

क्षेत्रराजस्य माहात्म्य श्रुत तु बहुशो मया ।
उद्भव कृत्तिवासस्य न च केनापि कीर्त्तित ॥ ५

कल्पकोटिसहस्रैस्तु ब्रह्मकोटिशतैरपि ।
प्रतिग्रन्थैरनेकैश्च मुनयश्चिरजीविन ॥ ६

न विदन्ति अनाद्यन्त सनातनतर विभुम् ।
पूजित पूर्वदेवैश्च मुनिभिर्ब्रह्मवादिभि ॥ ७
पूर्वं मयार्चित लिङ्गमनेकैश्च सुरेश्वरैः[1] ।
अप्रमेय गुणातीत शाश्वत शिवमव्ययम् ॥८

कीर्त्तित कृत्तिवास त सर्वामरनमस्कृतम् ।
चिन्तामणिमय लिङ्ग सर्वसम्पत्कर विभुम् ॥ ९

परमानन्ददातार स्मृतमात्राघहारिणम् ।
अनाद्यन्त पर सूक्ष्म निर्गुण गुणसयुतम् ॥ १०

---

1. $B_2$—सुराप्सरैः ।

नमस्कृत्वा प्रवक्ष्यामि शिवेनोक्त यथा पुरा।
क्षेत्रस्यास्य समासेन महात्म्यं सरसस्तथा॥ ११
पुरा सागरतीरेऽसौ याचितो ह्यु्र्मिमालिना।
मत्तटे देवदेवेश कुरु वासमित प्रभो॥ १२
इति तस्य वच[1] श्रुत्वा स्वीकृत्य वृषभध्वज।
स्वर्णकूटगिरौ तस्थौ दुर्विज्ञेय सुरासुरैः॥ १३
स्वर्णकूटगिरे पृष्ठे एकाम्रकतरु स्मृत
क्राशमात्र परिणाह[1] शाखासञ्चयमण्डित॥ १४
आमूलस्कन्धविटपी त्रिशाखाकुरपल्लव।
प्रवालकुसुमै शुभ्रै रुत्तुङ्ग सजलामलम्[2]॥ १५
कल्पवृक्षस्तत सौम्य शिवतेजोऽभिवृ हित।
तस्य छाया समाश्रित्य लोकाश्चामरवर्च्चसः॥१६
नाभिनन्दन्ति[3] दह्यन्ति नोपसर्पन्ति ते यमम्।
कालाग्निभयनिर्मुक्ता महदुल्का निवारणा[4]॥ १७
प्रलयोत्पातवातस्य निर्घात कुलिशस्य च।
न भय विद्यते तत्र क्षुधातृष्णाविवर्जित·[5]॥ १८
द्रुसङ्गोऽय महाभीम कान्तारगहनाकुला।
विविष्किरादिसारैश्च वर्णनादुपशोभितै·[6]॥ १९
मत्तसारङ्गउत्स्वासैर्ग्मधुमञ्जरिधारिभि·[7]।
निर्भरोद्गारनिर्ह्लादै पुष्पिताग्रेर्नगोत्तमै॥ २०
नानापुष्पफलैर्वृक्षैर्वासित सुमनोहरम्[8]।
चित्र पूर्वापर शस्त रोचयामास शङ्करम्॥ २१

---

1 B, परिणात् क।
2 $B_2$ शुभ्रैरतुल सदलामल।
3 $B_2$ नाभिनन्दसि $A_1$, C—नाभिनन्दति।
4 $B_2$ निवारका।
5 $B_2$ न भव विद्यते तत्र क्षुधातृष्णा विवर्जिते।
6 $B_2$ विविकारादिशार्कैश्च वर्णनादोपशोभितै, $A_1$—विविष्किरादि-सारैश्च वर्णनादोपशोभितै।
7 $B_2$ मत्तमातङ्गनिश्वसै।
8 $B_2$ सुमनोहरं।

दिव्यवर्षसहस्राणि मन्वन्तर शतानि च ।
आस्थाय भगवान् रुद्रो लिङ्गं तत्र प्रकाशितम् ॥ २२
न पश्यन्ति सुरा सिद्धा मुनय पन्नगा नरा ।
तल्लिङ्ग परमेशानि ! ममापि च सुदुर्लभम् ॥ २३
ततो देव स्वय रुद्र ईश्वर प्रभुरव्ययः ।
आत्मयोग समास्थाय आज्ञासिद्धिं[1] चकार ह ॥ २४
त्रिशद्धेन्वन्तरे वाह्ये लिङ्गस्यौत्त रतोऽम्बिके ! ।
शङ्करश्च स्वय वीर्याच्छैलात् पाषाणमृत् खनत्[2] ॥ २५
आज्ञया देवदेवस्य वापी गाम्भीर्यं मण्डली ।
सुप्रचार ह्लदोभूत्तु विपुल सलिलाशय ॥ २६
दृष्ट्वा त च विरूपाक्षो द्रुत पातालज जलम् ।
आजुहावोदधीन् सप्त गङ्गाद्या सरितस्तथा ॥ २७
मानसाच्छोदप्रमुखास्त्रिषु लोकेषु ये ह्लदा ।
नद्य पुण्यजलास्ताश्च कन्दरस्रवसो बहून् ॥ २८
सहजान् कृत्रिमान् कृत्यान् नगगोदावरीस्रवान् ।
पूण्यतीर्थान्महत्कूपान् ऋषिदैवत-निर्मितान् ॥ २९
नरेन्द्रखनितान् स्वच्छानाकस्माभिकसम्भवान् ।
आकाशप्रमुखास्तीर्थांस्तियंगूर्द्धान्तरस्थितान् ॥ ३०
एते चान्ये च बहुशो विरूपाक्षेण धीमता ।
ध्यात्वा रुद्रेण मनसा आययु कम्पमानसा[3] ॥ ३१
कृताञ्जलिपुटा सर्वे सर्वे प्रवहता गता ।
प्रदक्षिण नमस्कार चक्रु शिवमतन्द्रिता ॥ ३२
पुर प्राञ्जलय सर्वे क्षीरोदाद्या जलाशया ।
भक्त्येति परया देवमूचु किं करवाम ते ॥ ३३
तान् समीक्ष्य विरूपाक्षः शान्तेन स्वागतेन ।
वरुण बहुमानेन उवाच परमेश्वरः ॥ ३४

---

1 $B_2$ आज्ञासिद्ध
2 $B_2$ पाषाणमुत्खनेत्, $A_1$ पाषाणमुखिनत् ।
3. $B_2$ प्रीतमानसा. ।

## श्रीशकर उवाच

तोयराज त्वया कार्यं कर्त्तव्य मम सुव्रत ।
अवश्य परमप्रीत्या त्वयि मे प्रीतिरुत्तमा ॥ ३५

अस्मिन् स्थानेऽम्बुधिपते ! लवणाब्धि समन्तिके ।
अनेक युगपर्यन्त जात कौतूहल मम ॥ ३६

स्वर्णकूटगिरे पृष्ठे एकाम्रकवनोत्तमे ।
अत्र मे प्रीतिरत्यर्थ स्वर्गलोकात् कथचन ॥ ३७

कैलासेन सम ज्ञेय मर्त्त्यलोके त्वनुत्तमम्[1] ।
क्षेत्राणा प्रवर ह्येतत्सान्निध्य सतत मम ॥ ३८

असौ वापी मया सृष्टा सर्वभूतहिताय वै ।
सर्वपापक्षयकरी सदा मत् प्रीतिकारिणी ॥ ३९

सोमस्य बिन्दुना चात्र सतत वरुणस्य च ।
गङ्गायमुनयोरत्र बृहन्नद्यो नदश्च ये ॥ ४०

तासा पुत्राश्च पौत्राश्च शतशोऽथ सहस्रश ।
प्रविशन्तु अविच्छिन्न क्षीरोदाद्या महार्णवा ॥ ४१

कुलशैल[2]समुद्भूतास्त्वथ नाकौकसाश्रया ।
श्रीशैलश्चापि केदार पुष्कर वदरीवनम् ॥ ४२

दण्डक नैमिष भद्र कुरुक्षेत्र समन्तत. ।
वाराणसी प्रयागश्च गङ्गासागरसङ्गम ॥ ४३

पितृतीर्थामरज्योति-वैशाखामरकण्टक ।
अत्र स्रवन्तु ते सर्वे मुनिसिद्धाश्रमाश्रिता ॥ ४४

अच्छोदमानसाद्या ये ह्लदा पुण्याद्रिसश्रया ।
तद् बिन्दव स्रवन्त्वत्र अविच्छिन्नमहर्निशम् ॥ ४५

वसोर्धारा सुराधारा अप्सुधारा सुधाः स्मृता ।
यज्ञपात्रविशिष्टा या प्रणीता प्रोक्षिताश्च या ॥ ४६

---

1 $B_2$ ह्यनुत्तमम् ।
2. $B_2$—कशशैल ।
3. $B_2$—असौ पारा ।

ॐकारश्च वषटकार स्वाहाकार विनि सृता ।
अवभृथाश्च ये केचिद् वाजिमेधादयोऽर्च्चिता ॥ ४७
अमृतस्य तु ये भागा सोमभागा हवि स्मृता ।
पातालप्रभवस्तोया मेरुमन्दरगोचरा ॥ ४८
सर्वे स्रवन्त्वविच्छिन्न बिन्दुजालस्वरूपिण[1] ।
इम मे परम काम विदधीध्व जलेश्वरा ॥ ४९

## ब्रह्मोवाच

वाढमित्येव ते सर्वे श्रुत्वेतद् वचन विभो ।
प्रवृत्ता शतशो नद्य क्षीरोदाद्यामहार्णवा ॥ ५०
सोमबिन्दुकला यज्ञा मानसाद्या यथार्च्चिता ।
ऊँकारवषटकारादि सम्भवा अघनाशना ॥ ५१
गङ्गा च मूर्त्तित्रितयै[2] राज्ञासम्पादनाय वै ।
स्रवन्त्यविरत तत्र बिन्दवोऽस्मत् कमण्डलो ॥ ५२
उर्ध्वप्रवर्षणान् सूक्ष्मानुत्सृजस्तत्र चोदकान् ।
स्रवन्ति पश्यतस्तोया शतशोऽथ सहस्रश ॥ ५३
आपूर्यमाणा वापी तै स्वच्छतोयै· सुगन्धिभि ।
मनोहरचरै· शुभ्रै दिव्य सम्पर्ककोत्तमै ॥ ५४
मुनिजुष्टैर्महापूतै स्मतमात्राघहारिभि ।
ब्रह्मविष्वादिदेवाना प्रीतिदै परमार्थदैः ॥ ५५
शङ्करस्य ततो वापी दिव्यभौमान्तरीक्षजै ।
तोयै सदा स्रवद्भिस्तै प्रत्युद्याति सरित्पतिम् ॥ ५६
तं च दृष्ट्वा सुरगणा प्रीतिमन्त वृषध्वजम् ।
ऊचु प्राञ्जलय सर्वे देवदेव महेश्वरम् ॥ ५७
स्वय भगवता चासौ निर्मिता वापिकोत्तमा ।
लोके शङ्करवापीति तत ख्याति गमिष्यति ॥ ५८
बिन्दु स्रवति विश्वस्य नाम्ना बिन्दुसर स्मतम् ।
सर्वपापविशुद्धायापवर्गाय च निर्मितम्[3] ॥ ५९

---

1 A₁, B₁, C—विन्दुनालस्वरूपिण

2 B₂—गङ्गा च यमुना मूर्त्ति, A₁—गङ्गा चाम्बभिस्त्रितयै ।

3. B₂—सर्वपापविशुद्धात्मा अपवर्गाय निर्मितम् ।

इति तेषा वच. श्रुत्वा विष्वादीना दिवौकसाम् ।
तथेत्याह भव साक्षादय विष्वु शतक्रतु ॥ ६०

एवमस्त्विति मुनय स्नान चक्रुस्तपोधना ।
स्वयो स्नातो विरूपाक्षो ह्यह देवगणै सह ॥ ६१

शक्रादय सुरास्तेन[1] स्नानेन परमेश्वरि ! ।
परिष्पर्शगुणात् सद्यो दृश्यन्ते द्विगुणौजस ॥ ६२

शृण्वन्तु तिदशाश्चेति भूय प्राह वृषध्वज ।
लोकानुग्रहक वाक्य निशामय ममाक्षतम् ॥ ६३

अद्य प्रभृति ये केचित् स्नान कुर्वन्ति मानवा ।
क्षालयित्वा ह्यघौघास्ते गच्छन्त्विवन्द्रपुर हि ते[2] ॥ ६४

आनृण्या तर्पणगुणैर्दिवयान्तु[3] विकलमषा ।
पितृनथ मनुष्याश्च नयन्त्यूर्ध्वमध स्थितात्[4] ॥ ६५

ब्रह्मोवाच

इत्थ वाक्य समाकर्ण्य त्रिदशा धर्मवत्सला ।
उपसगम्य देवेश त्रियम्बक त्रिपुरान्तकम् ॥ ६६

शिव च प्रणिपातेन प्रपूज्येद महद् वच ।
ऊचु प्राञ्जलय सर्वे श्रोतुकामा दिवौकस ॥ ६७

त्रैलोक्यपावने तीर्थे अस्मिन् स्नानादिक च यत् ।
देवदेवमहेशान ! भूय कथय मार्जनम् ॥ ६८

यदुवाच ततो देव ऋषीन् देवानशेषत ।
आह्लादनकर[5] वाक्य लोकद्वयफलप्रदम्[6] ॥ ६९

तदह सप्रवक्ष्यामि स्नानस्यात्र ह्लदोत्तमे ।
विधान शृणु कल्याणि ! मार्जनस्य यथाक्रमम् ॥ ७०

---

1 B₂—सर्वादय सुरा ।

2. B₂—क्षालयित्वा पापौघास्ते गच्छन्ति पुर हरे ।

3 A₁ B—तर्पणगुणैर्दिव यान्ति ।

4 B₂ अध स्थिता ।

5 B₂ आह्लादनतर ।

6. B₂ त्रैलोक्यद्वयफलप्रदम् ।

अयने द्वे विषुवे द्वे रविसङ्क्रमणे तथा ।
नित्यनैमित्तिके स्नात्वा पुण्येऽहनि विशेषत ॥ ७१

ग्रहोपरागसयोगे प्रयाणे चाप्यथात्मन ।
कामान्येतानि सप्तैव योऽधिगच्छति पार्वति ॥ ७२

त्रैलोक्ये यानि तीर्थानि स्नानस्य फलमश्नुते ।
दान वा स्वल्पमन्यद्वा होम वाथ शिवार्च्चनम् ॥ ७३

अक्षय चाव्यय प्रोक्तमन्त तस्य न विद्यते ।
श्रुतश्च क्षयितो मेरु[1] कालपर्यावसानत ॥ ७४

सम्यक् बिन्दुसर स्नानमक्षय परिकीत्तितम् ।
कि तस्य बहुभिर्यज्ञै स्नातो बिन्दु ह्रदे तु य ॥ ७५

यावत्तिष्ठन्ति देवाश्च तावत् स दिवि मोदते ।
अस्य तीर्थस्य माहात्म्य वक्तु वर्षशतैरपि ॥
न समर्थो महेशानि कथयिष्ये तथाप्यहम् ॥ ७६

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे बिन्दुह्रदसजातो नाम एकविशोऽध्याय[2] ॥

---

1. $B_2$—श्रुतश्चाक्षयितोरु ।
2. B · बिन्द्रुह्रदसम्बादे एकादशोऽध्याय· ।

# द्वाविंशोऽध्यायः

## सनत्कुमार उवाच

इति तस्य वच श्रुत्वा ब्रह्मण परमात्मन ।
देवी प्रहस्यमाना तु चालयित्वा शिरोऽब्रवीत् ।। १

## पार्वत्युवाच

किं नु जाप्य तथा न्यास मन्त्रबीज तु तर्पणम् ।
पिण्डकर्म नमस्कार यथावद् वक्तुमर्हसि ।। २

परमस्मिन् यथान्याय स्नातव्य पुण्यमिच्छता ।
दातव्य च कथ दान द्विजातिभ्यो विशेषत ।। ३

विस्तरेणानुपूर्वेण यथातथ्य पितामह ! ।
अस्मिन् क्षेत्रे द्विजातीना यत् कृत्य तद् ब्रवीहि मे ।। ४

## ब्रह्मोवाच

शृणुष्वावहिता देवि ! महात्म्यमघनाशनम् ।
श्रीशङ्करमुखोद्गीत तीर्थराजस्य साप्रतम् ।। ५

कृत्तिवास समासाद्य मुनयस्त्रिदिव गता ।
मार्जनात् प्लवनात् पानाद् यमसयमतत्परात् ।। ६

प्रवर सर्वतीर्थाना विन्दूद्भवह्लद स्मृत ।
सर्वपापक्षयकरो महादेव-पियकर ।। ७

रत्नपर्वतमासाद्य यथा रत्नान्यवाप्यते ।
कृत्तिवास समासाद्य तथा प्राप्नोति वाञ्छितम् ।। ८

मार्गशीर्षे तु यो मासे स्नात्वा बिन्दुह्लदे शुचि ।
कृत्तिवास समासाद्य भक्तित पूजयेत् शिवम् ।। ९

निष्काम सत्त्वसम्पन्न सत्यवादी दृढव्रत ।
अहिंस्रः सर्वभूतेषु यथात्मनि तथा परे ।। १०

ॐ नम कृत्तिवासाय इति देवस्य भक्तित ।
जपेदष्टशत प्राज्ञः स्थित्वा देवस्य दक्षिणे ॥ ११

एव प्रतिदिन प्रात मासमेक निरन्तरम् ।
स्नात्वा व्रजेदिन्द्रलोक विमानेन विराजित ॥ १२

दशवर्षसहस्राणि भुक्त्वा भोगान् सुरै सह ।
तत्क्षणादिह चागत्य साधूना च सता कुले ॥ १३

धनधान्यवता गेहे नरो जायते भोगवान् ।
शिवप्रसादादुक्तोऽसौ शिवयोग नियच्छति ॥ १४

पुष्यमासे तु य स्नायात्तस्मिन् सरसि चोत्तमे ।
कल्यमुत्थाय निर्वर्त्य करणीय यथाक्रमम् ॥ १५

ब्रह्म-क्षत्र-विट्शूद्राणा वर्णाश्रम विभागश ।
सुनिवद्ध तपोनिष्ठा सर्वाश्रम निवासिनाम् ॥ १६

साधारणमिद वाक्य पुसा वै योषितामपि ।
ॐ नमस्ते शङ्करेशान मन्त्रनाथ प्रसीद मे ॥ १७

क्षालयाशेषदुरित पूरयस्व मनोरथम् ।
अनेन मन्त्रजाप्येन मासमेक निरन्तरम् ॥ १८

ब्रह्मचारी अध शायी यतवाक्कायमानस ।
अनन्तवासुदेवाय नमस्याय नमस्य च ॥ १९

ततो देव प्रतिरयेत् कृत्तिवास प्रदक्षिणम् ।
अष्टमूर्त्ति समासेन वन्दयित्वा समाहित ॥ २०

कृत्तिवास सुरारिघ्न भावेनैकेन पूजयेत् ।
भक्त्या चाव्यभिचारिण्या विभवाच्छक्तितो यथा ॥ २१

प्रसाद्य देवदेवेश प्रार्थयेद् गतिमुत्तमाम् ।
देवदेव महेशान नमस्ते त्रिपुरान्तक ॥ २२

गतिं मे परमां देहि शाश्वत सुकृतं विभो ।
इत्युच्चार्य नमस्कृत्य निष्पापो जायते नर ॥ २३

समाप्ते तु व्रते तस्मिन् भवेत पूर्णमनोरथ ।
निष्कलमषो शियाजुष्टो दीर्घमायुरवाप्नुयात् ॥ २४

देहान्ते च स्मृतिं[1] प्राप्य विद्याधरगति लभेत् ।
मनोज्ञ विपुल भोग गन्धर्वैश्च निषेवितम् ॥ २५

सर्वबन्धुसमायुक्त प्राप्नुयादिह सुन्दरि ! ।
कामगेन विमानेन कामचारी विचक्षण ॥ २६

सर्वकल्याण-सयुक्त स्वर्गलोके महीयते ।
अथ माघस्य यत् स्नान शृणु पातकनाशनम् ॥ २७

दत्त्वा कृष्णतिलान् शीर्षे मज्जयेत् सुसमाहित ।
नमो विश्वश्रवे[2] (?) नित्य मज्जयामि तवाम्भसि ॥ २८

पापापनोदन कुरु मे सुकृतस्यापि बृहत्फलम् ।
इति मन्त्र समुच्चार्य सप्तवारान् प्रयत्नत ॥ २९

सप्ताभिमन्त्रिते तोये मज्जये तदनन्तरम् ।
स्वधर्ममपि चावेक्ष्य सन्ध्योपासनकर्म यत् ॥ ३०
निर्वर्त्य निखिलान् जाप्यान् वासुदेवाय वन्दनम् ।
तस्माद् विनयधैर्येण जितात्मा विजितेन्द्रिय ॥ ३१

नमस्कार प्रकुर्वीत अष्टमूर्ति महेश्वरम् ।
प्रदक्षिण नमस्कार[3] कृत्तिवास समाहित ॥ ३२
कुर्यात्तु परया भक्त्या शिवसूक्त हृदा[4] जपन् ।
समाप्ते व्रत सकल्पे स्नपनार्च्चन कर्मणि ॥ ३३
द्विगुण तु जपेद्देव कृत्तिवास जगद्गुरुम् ।
एव य कुरुते मास स न शोच्य कदाचन ॥ ३४
अधनो धनमाप्नोति अपुत्र. पुत्रमाप्नुयात् ।
सुवर्ण मणिमुक्ताढ्य कुले जायेत धर्मवान् ॥ ३५

अनेक जन्म ससिद्धस्ततो याति परा गतिम् ।
फाल्गुने मासि सप्राप्ते प्रात स्नान करोति य. ॥ ३६

शीर्षे सर्वौषधि दत्त्वा स्नातव्य विधिनोदितम् ।
नमो नमो महादेव नाम चाष्टशत जपेत् ॥ ३७

---

1 B$_2$—गति ।

2 B$_2$—ॐ नमो विश्ववसे ।

3 B$_2$ प्रदक्षिणनमस्कार ।

4. B$_2$, हृदि ।

कृत्तिवास समासाद्य पूजयेत् प्रणव जपन् ।
एव य कुरुते विद्वान् मासमेक नरोत्तम ॥ ३८

सर्वकाम[1] समृद्धोऽसौ जायते नात्र सशय• ।
तेजस्वी बलसपन्न सौभाग्य ललिता गति ॥ ३९

•हाधनो महात्मासौ ज्ञातीना[2] श्रेष्ठता व्रजेत् ।
इह पुण्यवता गेहे धनधान्य समायुतः ।
विद्या-विनयसपन्नो मृत स्वर्गे महीयते ॥ ४०

चैत्रे मासि महाभक्त्या प्रात स्नायो भवेत्तु य• ।
सिद्धार्थग्रहण कृत्वा जपेच्चैव षडक्षरम् ॥ ४१

शतानि पञ्च तोयस्थो भूयो मन्त्र षडक्षरम् ।
जप्त्वा चैत्र हरि दष्ट्वा ततो गच्छेच्छिवालयम् ॥ ४२

अष्टमूर्ति गनि देव लोकनाथ सुरेश्वरम् ।
प्रदक्षिण कृत्तिवास शक्तित पृजयेद् बुध ॥ ४३

अष्टाङ्गेन नमस्कार क्षामयित्वा तु निष्क्रमेत् ।
एव मासे तु सपूर्णे कृत्वा ब्राह्मण-भोजनम् ॥ ४४

प्राप्नोति परम भोग सर्वस्थितिमनोरमम् ।
बहुपुत्रश्च शुरश्च[3] विद्याविनयसयुत ॥ ४५

सर्वकाम समृद्धिश्च सर्वलोकप्रियकर ।
धार्मिक सत्यवादी च बहुभृत्यश्च भोगवान् ।
इहलोके भवेत्पूज्यो मृत स्वर्गे महीयते ॥ ४६

वैशाखे च तदा[4] मासे शुश्रूषा कुरुते शिवम् ।
बिन्दुद्रवह्लदे स्नान प्रातरुत्थाय मानव ॥ ४७

शिरास्याभ्युक्ष्य गोमूत्र स्मरण चण्डिकापते ।
कृत्वा स्नान यथोद्दिष्ट कुर्यान्मन्त्रमुदीरयेत् ॥ ४८

---

1. C सर्वकाम
2. $B_2$ जातीनां
3. $B_1$, $B_2$—बहुपुत्रश्च धनवान् ।
4. $B_2$ तथा ।

बिन्दु बिन्दु समाहृत्य निर्मितस्त्व पिनाकना ।
वृजिन हर मे सर्व बिन्दुसागर ते नम ॥ ४६

उत्तीर्य सलिलात्प्राज्ञो दृष्ट्वा देव जनार्दनम् ।
नमस्कृत्वा व्रजेच्छीघ्र कृत्तिवासनिकेतनम् ॥ ५०

प्रदक्षिण त्रय कृत्वा विशेद् गर्भगृह बुध ।
लिङ्गस्य दक्षिणे भूत्वा[1] इम मन्त्रमुदीरयेत् ॥ ५१

नमस्ते कारणाव्यक्त स्थुलसूक्ष्मस्वरूपणे ।
विश्वमूर्त्तिषु सूक्ष्माय शाश्वते कृत्तिवाससे ॥ ५२

इत्येव मासपर्यन्तमछिद्रेण दिने दिने ।
मन सकल्प्य य कुर्य्याद्दे व सकल्पमानस ॥ ५३

अरोगी स सुखी भोगी महात्मा समपद्यते ।
बान्धवाढ्य शुचिर्विद्वान् जायते शतपुत्रक ॥ ५४

बिन्दुह्रदप्रभावेन प्रेत्य चेह स मोदते ।
सत्यमम्ब ! मयाख्यात शिववाक्य निरामयम् ॥ ५५

ज्येष्ठे मासि निवोधेद प्रात स्नान ह्रदोत्तमे ।
गोक्षीर शिरसाऽभ्युक्ष्य मज्जयेत्सुसमाहित[2] ॥ ५७

'नम शिवाय' जप्तव्यमिति मन्त्रमुमापते ।
सुगुप्त प्रणवादिष्ट षडक्षरमनुत्तमम् ॥ ५७

द्वादशोत्तर शतद्वे च मार्जन तर्पण तत ।
कृत्वाथ वासुदेव च क्षामयित्वा शिव व्रजेत् ॥ ५८

प्रदक्षिण नमस्कार पूजन कृत्तिवासस ।
स्तुतिं दण्डप्रणाम च यथापूर्ववदाचरेत् ॥ ५६

नमस्ते भीमरूपाय कालिकान्ताय धूर्जटे ।
कृत्तिकौतुकवासाय कृत्तिवास नमोऽस्तुते ॥ ६०

इम[3] मन्त्रवर भक्त्या दशवारान् प्रकल्पयेत् ।
पूर्णे मासे तत पूजा यथावदनुपूर्वश ॥ ६१

---

1 $B_2$—स्थित्वा ।

2 $B_1$, $B_2$—स्नापयेत् ।

3 $B_1$, $B_5$—इद ।

क्षीरस्नानादिना देव कृत्वैव कृत्तिवाससम् ।
ज्ञानभागी यशोभागी धनरत्नपतिर्भवेत् ॥ ६२

विधेयास्तस्य भृत्याश्च सन्ततिर्निभृता[1] सदा ।
अरोगी च सुखी पूज्यो राजवल्लभतामियात् ॥ ६३

जीवमानो भवेत् पूज्य प्रेत्य चेह[2] शुभा गतिम् ।
प्राप्नुयान्नात्र सन्देह शिवस्य वचन यथा ॥ ६४

आषाढे त्वथ वक्ष्यामि प्रात स्नान ह्रदोत्तमे ।
क्षीरमामलक शस्तमुत्तमाङ्ग प्रलेपने ॥ ६५

ॐ बिन्दुह्रद नमस्तुभ्य महादेवेन निर्मितम्[3] ।
विश्वबिन्दु ! जगद्बीज ! मज्जयामि तवाम्भसि ॥ ६६

इति मन्त्र समुच्चार्य शिववक्त्राद् विनिःसृतम् ।
नव वा पञ्च वा वार मज्जयेत्सुसमाहित ॥ ६७

ततोऽनन्त समभ्यर्च्च्य दृष्ट्वा देव महेश्वरम् ।
प्राप्नुयान्निखिलान् कामान् कृत्तिवासप्रसादत[4] ॥ ६८

श्रावणे श्रद्धया युक्तो यस्तु स्नान करोति वै ।
गत्वा बिन्दूद्भवे सौम्ये यवान् दत्त्वा शिरस्थले ॥ ६९

स्नानमन्त्रमिद वाक्य सर्वभूतहित परम् ।
समुच्चरस्तत स्नायाद् ह्रदे पुण्यजलेऽम्बिके ! ॥ ७०

ॐ नमस्ते शशिभृन्नाथ प्रीतिदाय महात्मने ।
पाप नाशय मज्जेऽह बिन्दूद्भवह्रदाय ते ॥ ७१

स्नात्वा पुण्यजले तत्र सतर्प्य पितृदेवता ।
पूर्वोक्तेन विधानेन उपसर्पेच्छिवालयम्[5] ॥ ७२

अभ्यर्च्च्य देवमीशान[6] लिङ्ग त्रिभुवनेश्वरम् ।
अष्ट प्रदक्षिण कृत्वा नमस्कुर्य्यात प्रयत्नत ॥ ७३

---

1 , $B_2$—निश्चया ।
2 $B_2$—प्रत्यर्च्चेह ।
3 $B_2$ बिन्दुह्रद नमस्तेऽस्तु महादेवविनिर्मितम् ।
4 $A_1$, C—कृत्तिवास प्रसादत ।
5. $B_1$ $B_2$—जप कुर्य्यात् शिवालये ।
6. $A_1$, C—लिङ्गमीशान ।

नम स्वारोचिषे तुभ्यमुग्राय पतये नम ।
कालज्ञ पञ्चभूतात्मा विश्वात्मासि शिवोऽव्यय ॥ ७४

अनेन मासमेकैक भक्ति कृत्वा सदाशिवे ।
समाप्ते द्विगुणा पूजा कृत्वा पाप क्षय नयेत् ॥ ७५

भाजन सर्वकल्याण कुले महति जायते ।
निर्जितारि प्रशान्तश्च बहुभृत्य परिच्छद ॥ ७६

इह भोगवता श्रेष्ठ स्वर्ग[1]तश्चाप्यनुत्तम ।
सर्वपापविनिर्मुक्तो मृत स्वर्गे महीयते ॥ ७७

मासि प्रौष्ठपदे कुर्य्यात् प्रात स्नान ह्रदोत्तमे ।
गोमयेन मृदा कृत्वा क्षालन गात्रशोधनम् ॥ ७८

ॐ नमस्ते शिवभक्ताय क्षेत्रबीजात्मने नम ।
उद्भवोऽसि जलस्यान्ते कारणाव्ययसस्थितो ॥ ७९

इत्युच्चार्य त्रयो वारान् मज्जयेत्तत्र वारिणि ।
कुर्य्यात् प्रयत्नतो देवि ! तत सन्ध्यादितर्पणम् ॥ ८०

देवस्य सदन गत्वा त्वष्टमूर्त्तिमतन्द्रित ।
दृष्ट्वा समर्च्चयित्वा तु कृत्तिवासोऽन्तिक व्रजेत् ॥ ८१

कृत्तिवास जगद्वास गोप्तासि परमेश्वर ।
प्रपन्नोऽह भवोद्विग्नस्त्राहि मा परमेश्वर ॥ ८२

इति प्रसाद्य त देव निष्क्रम्य च विभोर्गृहात् ।
सद्यो निष्कल्मष साधु शुचि स्यात्प्रियदर्शन ॥ ८३

जनानुरागजनक[3] सौभाग्य द्युतिमान् सुखी ।
सम्पन्नबलवीर्यश्च प्रजावान् सुवपु सुखम् ॥ ८४

भुक्त्वा[4] भोग महाभाग्य देवेष्वपि सुपूजित. ।
रुद्रवद् विचरेत् स्वर्गे शूर सर्वाङ्गसुन्दर ॥ ८५

---

1. $B_2$ सर्वत ।
2 A1, $B_2$—इति प्रसादित देवं ।
3 A1, C—जनानुरागकनक
4. B —भुक्त्वा ।

मासे चाश्वयुजि स्नान प्रातरुत्थाय यश्चरेत् ।
शिरस्याज्य कुशाग्रेण दत्त्वा मज्जेत् स मन्त्रवित् ॥ ८६

ॐ नमस्ते शम्भुनाथाय भूतेश ! तिपुरान्तक ! ।
स्नान करोमि देवेश ! मुच्यता मम किल्विषम् ॥ ८७

नववारान् प्रयत्नेन तत सन्ध्या समाचरेत् ।
तमनन्त नमस्कृत्वा कृत्तिवासालय व्रजेत् ॥ ८८

पूजयित्वा यथोद्दिष्ट मार्गेण परमेश्वरम् ।
प्रदक्षिण तत शस्त मन्त्रोच्चारणपूर्वकम्[1] ॥ ८९

शशाङ्काङ्कित ! भस्माङ्ग ! गङ्गाधर ! नमोऽस्तुते ।
प्रसीद परमेशान ! आदिकर्त्त शिवाव्यय ! ॥ ९०

अष्टाङ्गेन नमस्कार दशवारान् समाहित ।
कृत्वा व्रजेत्ततो धीर स्वाश्रम[2] किल पार्वति ! ॥ ९१

पूर्णमासव्रतस्यास्य प्रीतो भवति शङ्कर[3] ।
ददात्यतुलसभोगमभिप्रेतफलान् बहून् ॥ ९२

चिरकालाषित पृथ्वी देहान्ते त्रिदिवालयम् ।
व्रजेद्दिव्यविमानेन कोटि भास्कररोचिषा ॥ ९३

यावच्चन्द्रार्क पर्यन्त कृत्तिवासप्रसादत ।
सर्वभोगसमृद्धेन वसत्यमलवर्च्चसः ॥ ९४

तत् क्षयादिह चागत्य जायते पृथिवीपति ।
श्रीमाश्च गुणवान् शूरो द्विजदेवार्च्चने रत ॥ ९५

शिवयोग समासाद्य शिवधर्मोत्तरोदितम् ।
अक्षये शिवलोके तु शिवेन सह मोदते ॥ ९६

अथ वै कार्त्तिके मासि य स्नाति च ह्रदोत्तमे ।
स्वशीर्षे चन्दन लिप्त्वा किंचिदभ्युदिते रवौ ॥ ९७

ॐकारसहित मन्त्रमघोर सजपन् शुचि ।
भुक्तिमुक्तिप्रदातार तारक शिवद शिवम् ॥ ९८

---

1 $B_2$—पूजन ।

2. C—स्वग्राम ।

3. $B_2$—केशव ।

तत सन्ध्या यथार्हेण निर्वर्त्त्य निखिलान् क्रमात् ।
पूर्वह्णिक यथोद्दिष्ट वासुदेवार्च्चन तथा ।। ९९

कृत्वा पादहरायाश्च देव्या वै पूजन शिवे[1] ।
तत शिवालये पश्येत्क्रमात्तु[1] सर्वदेवताः ।। १००

नदिन च महाकाल गणाध्यक्ष वृष द्रुमम् ।
कुमार गणचण्ड च सावित्री द्वास्थमेव च ।। १०१

भवानी गोवधूनम्नी कृत्तिवाससमेव च ।
प्रदक्षिण नमस्कार कृत्वा च भक्तितोऽर्च्चनम्[2] ।। १०२

ॐ नमस्ते परमार्थाय पर्य्यायगुणवर्त्तिने ।
ध्यानसूक्ष्मस्वरूपाय आत्मयोने निरञ्जन ।। १०३

लिङ्गस्य दक्षिणे भूत्वाप्यष्टौ वारानुदीरयेत् ।
क्षामयित्वा ततो गच्छेत् स्वाश्रम शिवमानस ।। १०४

अनेन विधिना भक्त्या मासमेक समापयेत् ।
समाप्ते च व्रते तस्मिन् पूजा द्विगुणिता भवेत् ।। १०५

एव य कुरुते विद्वान् स न शोच्य कदाचन[3] ।
कृत्तिवासा स्वय तस्य प्रसादमधिगच्छति ।। १०६

प्रसन्ने सर्वभूताना गतिरस्मिश्च जायते ।
पूरयत्यखिल काम देवैरपि सुदुर्लभम् ।। १०७

क्रीडते शाश्वते स्थाने जरारोगविवर्जित[4] ।
रुद्रस्यानुचरो भूत्वा स रुद्रै सह मोदते ।। १०८

एव य कुरुते विद्वान् वर्ष वाथ यतव्रत ।
पूर्णे सम्वत्सरे कुर्य्यात्तेनैव विधिनार्च्चनम् ।। १०९

स च मान्यतरो लोके पूज्यो लोकस्य पावन ।
विन्दूद्भवप्रभावेन शिवानुग्रहभाग् भवेत् ।। ११०

अप्रमेयगुणश्चापि माहात्म्यमतिमानपि ।
भोगी श्रुतिधर प्राज्ञो दर्शनीयतमाकृतिः ।। १११

---

1 B₂—क्रमश ।
2 B₂—विभक्तोऽर्च्चनम् ।
3. B₂, विद्वान्नाशोच्य स कदाचन ।
4 B₂ जरारोगविवर्जिते ।

जीवमानो भवेत्पूज्य प्रेत्य स्वर्गे वसेच्चिरम् ।
कामचारी म तेजस्वी वैमानिक अनौपम ॥ ११२
ब्रह्मवद् विष्णवदुच्चै शिववच्च सुबन्धुभि[1] ।
बिन्दुह्लदप्रसादेन च्यवेन्नतु कदाचन ॥ ११३

ब्रह्मोवाच

एवमाह तदा देव शितिकण्ठस्त्रिलोचन ।
कृताञ्जलिपुटान् सर्वान्महेन्द्रादीन् दिवौकस ॥ ११४
य इद शृणुयाद्भक्त्या पठेद् वा नियत शुचि ।
नाधयो व्याधयस्तस्य नचैवेष्टवियोजनम् ॥ ११५
न दरिद्रो न रोगी स्यान्न शत्रुपरिपीडित ।
भाजन सर्वभद्राणा लोकद्वयफलप्रदे ॥ ११६

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्य्यां सहिताया द्वितीयेऽशे बिन्दुह्लद-माहात्म्ये प्रतिमासव्रतकीर्त्तन नाम द्वाविंशोऽध्याय[2] ॥

---

1 $A_1$, C—सुबिन्दुभिः ।

2 $B_2$ इत्येकाम्रपुराणे षट साहस्रयामैश्वर्य्यां सहिताया द्वितीयेऽशे बिन्दूद्भवमाहात्म्ये प्रतियासव्रतकीर्त्तनो नाम द्वादशोऽध्याय

$B_1$ ॰ बिन्दुह्लदमाहात्म्ये प्रतिमासव्रत[illegible]थनो नाम द्वाविंशोऽध्याय ।

# त्रयोविंशोऽध्यायः

ब्रह्मोवाच

भूय प्रोवाच वै देवान्नीलकण्ठ उदारधी ।
तीर्थयात्रासमीहास्तान् मुनीन्द्रास्त्रिदिवौकस ॥ १

श्रीशकर उवाच

अथ नैमित्तिक स्नान सर्वपापप्रणोदनम् ।
सर्वकामप्रद वक्ष्ये निबोधत सुरोत्तमा ॥ २

देवीपादहरायाश्च पुरतो दृष्टिगोचरे ।
अनन्तवासुदेवस्य दृष्टि सम्मीलने पथि ॥ ३

तत्रासौ परमा वापी पुराणे परिकीत्तिता ।
तस्या स्नात्वा सकृल्लोका नाकपृष्ठमितो गता ॥ ४

दृष्ट्वा[1] देवा इमा वापीं केशवो भगवानयम्[2] ।
स्वय नारायणो देवस्त्वनन्त पुरुषोत्तम ॥ ५

सर्वान्तरात्मा भगवानय विष्णुर्गदाधर ।
अध्यक्षो वै कृतश्चात्र वासुदेवो महाह्रदे ॥ ६

पर्यवस्थितवान् साक्षादनन्तो ह्रदसन्निधौ ।
वेत्ति सर्वात्मनो बुद्धि ददाति सदृश फलम् ॥ ७

सत्त्व रजस्तमोद्भव पृथक् तेषा फलोदयम् ।
प्रवदन्ति हृषीकेश प्रददाति पृथक् फलम् ॥ ८

अनुज्ञाप्य ततो[3]ऽनन्त मज्जयेत्तस्य वारिणि ।
अवन्दनादनन्तस्य स्नानाद्य कर्म निष्फलम् ॥९

वासुदेव नमस्कृत्वा त्वनन्त विश्वतोमुखम् ।
स्नातुमिच्छामि देवेश सम्यक् सिद्धि प्रयच्छ मे ॥ १०

---

1 $A_1$, $B_2$—सृष्ट्या ।

2 $B_2$—भगवान् मया ।

3. $B_2$—ह्यतो

इत्युक्त्वा नाभिमात्रेण तोयमध्ये विशेत्तत ।
उपस्पृश्य यथान्याय सपवित्र उदङ्मुख ॥ ११

स्मरेद्देव विरूपाक्ष शशाङ्ककृतशेखरम् ।
पञ्चवक्त्र त्रिनयन मृगिण च कुठारिणम् ॥ १२

स्कन्धे स्कन्ध तत सव्ये दक्षिणे नन्दिकेश्वरम् ।
पृष्ठे देव महाकाल न्यास कुर्य्यात्तु मातृवत् । १३

न्यस्य श्रीकण्ठक न्यास कवच चण्डभैरवम् ।
न्यस्तामेखलपर्यन्त पुष्कर सरसोद्धरेत् ॥ १४

मज्जयेत्सलिले चाथ पवित्रमघमर्षणम् ।
अभिमन्त्र्य पिवेत्तोय सोमपानसम शिवम् ॥ १५

प्रथम शक्तिवीजेन द्वितीय शैवकेन च ।
तृतीय तु भवेद्वीज तत सन्ध्या समाचरेत् ॥ १६

स्वधर्मविधिनोक्तेन तूष्णी जाप्य मुदाहृतम् ।
पिण्डदानादिक चाथ कुर्य्याच्छास्त्रोक्तवर्त्मना ॥ १७

पुरतो वासुदेवस्य बिन्दुह्लदजलान्तिके ।
सोपानोपलपीठे तु विमले च सुविस्तरे ॥ १८

तिलतण्डुलमिश्रेण प्राङ्मुख सुसमाहित ।
आदित्यप्रमुखान् देवान् ऋषीन् भूमि सभूधरान् ॥ १९

क्षेत्राध्यक्ष हृषीकेश पुण्डरीकाक्षमव्ययम् ।
ततो याम्यमुखो भूत्वा त्वपसव्य समाचरेत् ॥ २०

पाणी जान्वन्तरे कृत्वा सपवित्रतिलै सह ।
उदकास्त्रीश्चैव एकैक प्राददच्छुचि[1] ॥ २१

पितृन् पितामहाश्चैव तथैव प्रपितामहान् ।
मातामहास्तथा श्रीश्च अन्याश्चापि मरुद्गणान् ॥ २२

ईशानाभिमुखो भूत्वा मनुष्याञ्जलिमाक्षिपेत्[2] ।
विसर्जन तत कार्य्यं तथैव[3] पितृदैवतम् ॥ २३

---

1 B₃— उदकाञ्जलिं स्त्रीश्चैव एकैक प्राददत् शुचि ।

2 B₃—मनुष्योञ्जलिमाक्षिपेत् ।

3, B₃—यथावत् ।

एव य कुरुते सम्यक् स्नान बिन्दुह्रदे नर ।
तारयेन्निखिलान् वशान् सप्तपूर्वान् परास्तथा ॥ २४

स नयत्यात्मनात्मान या गति मुनयो गता ।
यज्वानो भूरिदातारो य प्रविश्यन्त्यकल्मषा ॥ २५

त प्रविश्यन्त्यसदिग्ध बिन्दुह्रदजले प्लुता[1] ।
ततोऽनन्त समभ्यर्च्च्य देवी पादहरा तथा ॥ २६

कृत्तिवास नमस्कृत्य कृतकृत्यो भवेन्नर ।
अनन्तवासुदेवाय ये यजन्ति समाहिता ॥२७

सदाऽह सुलभस्तेषा पूरयामि मनोरथम् ।
स्नान सन्ध्या जपो होम पिण्डोदक वलिक्रिया ॥ २८

तीर्थस्यास्य यथोद्दिष्टमनन्त विष्णुपूजिते ।
तथा पादहरा देवी वन्द्या स्नानादनुक्रमात्[2] ॥ २९

कामदा शुभदा गोप्ता रूपसौभाग्यदायिनी ।
अयने विषुवे द्वे च स्नात्वा भक्त्या जितेन्द्रिय ॥ ३०

सर्वपापाद् विमुच्येत ज्ञानाज्ञानकृतोऽपि वा ।
रविसक्रमणे चैव स्नानपिण्डोदक च ये ॥ ३१

प्रकुर्वन्ति मनो भक्त्या ते यान्ति रविमण्डलम् ।
ग्रहोपरागसमये त्वयने चन्द्रसूर्ययो ॥ ३२

पुण्येऽहनि स विज्ञेय सर्वपापभयापह ।
पुण्यक्षेत्रं प्रयत्नेन चाव्यय पुण्यमिच्छता ॥ ३३

कृत्तिवास सुरश्रेष्ठ विश्वमूर्त्तिमनामयम् ।
विश्वबिन्दुमविच्छिन्न स्रवत्यनिशमक्षयम् ॥ ३४

तत्र स्नात्वा च दत्त्वा च सलिल पितृदेवता ।
होमार्च्चनविधानानि दानानि विविधानि च ॥ ३५

अन्यतीर्थाच्छत पुण्य सहस्रगुणित फलम् ।
अक्षय फलमाप्नोति सकृत्तत्र कृत शुचि ॥ ३६

---

1 $B_2$—जला प्लुता ।

2 $B_2$—बिन्दुस्नानादनुक्रमात् ।

क्षयं हेमाचलस्यापि सागरस्य रसोदधे ।
कालान्ते गदित शस्तमक्षय सरस· फलम् ॥ ३७

स्नानदानादिकास्तत्र चाक्षया परिकीर्त्तिता· ।
अभूज्जगदिद प्रोक्तमनन्त शिवसन्निधौ ॥ ३८

बिन्दुह्लदजलस्नातु पुण्यस्यान्तो न विद्यते ।
कि· तस्य बहुभिर्यज्ञै स्नातो बिन्दुह्लदे यदि ॥ ३९

किं तस्य तपसा तप्त स्नातो बिन्दूद्भवे यदि ।
देवान् पितॄन् प्रयत्नेन तर्पित्वा पिण्डकर्मणा ॥ ४०

अक्षयाँल्लभते लोकानन्तर्जलगतो नर ।
पञ्चत्व चात्र ये यान्ति गति तेषा शृणुष्व मे ॥ ४१

कृतानि कोटिपापानि पुण्यानि सुबहूनि च ।
क्षणेन तानि भुज्यन्ते नरै· शम्भो प्रसादत ॥ ४२

योगिनो या गति यान्ति ता गति समवाप्नुयु· ।
बिन्दुह्लदजले मर्त्त्या ये त्यजन्ति कलेवरम् ॥ ४३

ते यान्ति त्रिदिव भित्वा ज्योतिर्लोकमनामयम् ।
तत शिवपुर गत्वा शिवसायुज्यमप्नुयु ॥ ४४

य[1] वै ध्यायन्ति देवाश्च वसवो मुनिचारणा ।
स एव सलिलश्रेष्ठ पुनात्यखिलभूर्भुवम् ॥ ४५

अष्टम्या शुक्लपक्षस्य भक्त्या स्नाति च यो ह्लदे ।
स निश्चयेन वै वाक्यं कृत्तिवासोऽर्च्चने रत ॥ ४६

ब्रह्मचारी शुचि स्नात सत्यवादी जितेन्द्रियः ।
अहिंस्र परमोदान्त शिवभक्तो दृढव्रत[2] ॥ ४७

यस्यैव विधिना स्नात जात बिन्दूद्भवे ह्लदे ।
अग्निष्टोमफल तस्य सदक्षिणमुदाहृतम् ॥ ४८

चतुर्दश्यां तु कृष्णाया[3] य स्नाति विमले ह्लदे ।
स याति शिवसालोक्य कृत्तिवास प्रसादत· ॥ ४९

---

1 $B_2$—ये ।

2 $B_2$—कृतव्रत ।

3 $B_2$—पूर्णाया ।

स्नात्त्यष्टम्या[1] तु यो भक्त्या मासि मार्गशिरादिषु ।
अतिरात्रस्य यज्ञस्य फल समधिगच्छति ।। ५०

चतुर्द्दश्या निमज्जेद् य सवत्सरसमाहित ।
स याति परम स्थान यत्र हैमवतीपति ।। ५१

सद्भावमिदमाख्यात गुह्यं हितमनुत्तमम् ।
न्यास मुद्रा तथा वीजमनन्ताच्चर्चा वलिक्रिया. ।। ५२

एव य कुरुते सम्यक् स न शोच्य कदाचन ।
प्रज्ञावान् बलसम्पन्नो भाजन सर्ववस्तुषु ।। ५३

निर्विघ्न सर्वकामेषु[2] सदादेवानुकूलता ।
निर्वृत्ता[3] सन्ततिस्तस्य सानुरागा सदा नरा ।। ५४

बिन्दुह्लदजले स्नानमनन्तमुखदर्शनम् ।
अष्टमूर्त्तिनमस्कार न'ल्पस्य तपस फलम् ।। ५५

बिन्दुह्लदजले स्नात्वा दृष्ट्वा श्रीपुरुषोत्तमम् ।
चन्द्रचूड समालोक्य चन्द्रचूडो भवेन्नर ।। ५६

कृत्तिवासो नमस्कारो यतात्मा सयतेन्द्रिय· ।
निष्कामात् पुनरप्राप्ति सकामात्पूरयेत्किल ।। ५७

चतु सागरपर्यन्त सान्तरीक्षे नभो दिशि ।
पाताले यानि तीर्थानि तेषा स्नानाद् विशिष्यते ।। ५८

## ब्रह्मोवाच

ऋषिसिद्ध हितोद्दिष्ट[4] भुवनत्रयपावनम् ।
महादेवेन वै प्रोक्तमेतद् वचनमम्बिके ! ।। ५९

एतच्छ्रुत्वा सुरगणा स्नात्वा नत्वा त्रिलोचनम् ।
पेतु स्वतेजसा दीप्तास्तस्यैव चरणाम्वुजे ।। ६०

---

1 $B_2$—शुक्लाष्टम्या ।

2 $A_1$, $B_1$, C—सर्वकामेभ्य ।

3. $B_2$—अछिन्ना

4. $B_2$—नराणा च हितोद्दिष्ट ।

देवदेवोऽपि भो मातस्तुतोष सर्वदेवताः ।
भगवान् लिङ्गमूर्त्तिश्च तत्रैव किल सस्थितः ॥ ६१
बिन्दुह्रदजले स्नान कृत्तिवासो माहात्म्यकम् ।
क्षेत्रदर्शन ससिद्धि श्रुत्वा पापक्षय भवेत् ॥ ६२

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे
बिन्दुह्रदमाहात्म्य-कथन नाम त्रयोविंशोऽध्याय[1] ॥

———

1. ...बिन्दुह्रदमाहात्म्य नाम त्रयोदशोऽध्याय. ॥

# चतुर्विंशोऽध्यायः

## ब्रह्मोवाच

श्रुत्वा च देवसंघास्ते भक्तिमन्तस्तत शिवे ।
माहात्म्य विदित कृत्स्न परस्यास्य पुरातनम् ।। १

क्षेत्रराजस्य देवस्य माहात्म्य भुवि दुर्लभम् ।
उत्फुल्लनयना सर्वे महेन्द्राद्या[1] दिवौकस ।। २

विचरन्ति महाक्षेत्रे एकोनकोटिरूपधृक् ।
प्रतिष्ठन्ति तथा लिङ्गमर्च्चयन्ति यथार्थत ।। ३

निखिलैर्देववृन्दैश्च निखिलाश्चाभिपूजिता ।
ऊनकोटि· समासेन कृत्तिवास पुन पुन ।। ४

आम्रच्छायातले चाथ शङ्करप्रीतिदेऽम्बिके ! ।
प्रासादान् विविधान् शस्तान् कर्त्तु च त्रिदिवेश्वरा ।। ५

सर्वदेवपित शक्रो विश्वकर्माणमब्रवीत् ।
इच्छेऽहं पूजितु लिङ्ग विधत्स्वायतन शुभम् ।। ६

वाढमित्येव स प्राह लघुहस्तश्च विश्वकृत ।
चकारायतन सद्यो मनोज्ञ चारुदर्शनम् ।। ७

सिद्धेश्वराददूरेण पूर्वस्या दिशि पार्वति ! ।
विश्वकर्मा महाप्राज्ञ इन्द्रेश्वरमकल्पयत् ।। ८

प्रतिष्ठा विधिनेन्द्रोऽपि निवृत्ति सहदक्षिणाम् ।
देवैश्च ऋषिसघैश्च महोत्सवमकारयत् ।। ९

यथा संक्षेपतश्चापि सक्षेपेणेतरेतरा ।
चक्रिरे चैव सदनानुच्चनीचान् सुमध्यमान् ।। १०

वर्णोद्यान् विविधान् रम्यान् वनमालोपशोभितान ।
हेमराजतवैदुर्यान् विद्रुमस्फटिकोपमान् ।। ११

---

1. A₁, C—महेन्द्रादि ।

नीलजीमूतसकाशान् सन्ध्याभ्रमिव पाटलान् ।
पाण्डरान् हेमसकाशान् पद्मरागसमप्रभान् ।। १२

सर्वत्र सुखसचारान् मनोज्ञान् प्रीतिवान् शिवान्[1] ।
मरीचिविकचोत्कारगन्धर्वनगरोपमान् ।। १३

प्राकारविमलोदग्रास्तुङ्गतोरणमालिन ।
हर्म्याकारगृहाकारान् विमानवरशोभितान्[2] ।। १४

प्रासादान् सुविभक्ताश्च चारुचित्रमलकृतान् ।
विद्युतवत्र[3] इवाम्भोदान् चन्द्रकान्तावभासितान्[4] ।। १५

पुष्पावतस माल्याढ्यान् पारिजातस्रजोत्तमान् ।
सुसचारानुपासङ्गान् सोपानसुपरिच्छदान् ।। १६

पताकाकलिकास्तुङ्गान् कलगन्धर्वशोभितान् ।
सिद्धाश्रमानभिद्योतानाखण्डल पुरोगमान् ।। १७

अभ्रमातङ्गसघातान् पूर्णेन्दुविमलप्रभान् ।
भानुमन्तगिरिप्रख्यान् समतुङ्गान्निवेदितान् ।। १८

हिमवन्तगुहाकारान् कलमूर्द्धान् सुशोभितान् ।
तेजोवतोऽत्र विख्यातान् विपुलानपराजितान् ।। १९

बिन्दुफेनतरङ्गाभान् मन्दराचलसन्निभान् ।
राजहसवलाकाभान् मुक्ताफलदलोत्करान् ।। २०

कामिनीहारसकाशान् हाराक्रान्तकुचानिव ।
प्रचकार गुणाभोगो विश्वकर्मा विचक्षण ।। २१

शरदीव महोत्फुल्ल-सुपुष्पविपुलद्रुमै ।
चूतैराम्रातकैर्विल्वै कर्णिकैस्तिलकावृतै ।। २२

चम्पकै सरलैस्तालै र्मुचुकुन्दाऽतिमुक्तकै ।
वृन्दारकैः सुमनसै-र्देवदारुसचन्दनै ।। २३

---

1. $B_2$—शुभान् ।

2 A1, C—वीथिपान् ।

3 $B_2$—विद्युद्वन्ता ।

4. $B_2$—चन्द्रकान्तविभूषितान् ।

दिव्यवृक्षै सुपुष्पाढ्यै समान्तादुपशोभितै ।
सद्योमुक्तव्रतकरैर्द्योतमानैरितस्तत ॥ २४
मत्त[1]वर्हिणसघृष्टैर्विहङ्ग-विविधस्वनै ।
प्रासादमविलै[2] शुभ्रै भ्राजमानो नगोत्तम ॥ २५
कैलास इव सुव्यक्त स्वर्णकूटो विराजते ।
वीणाबेणुमृदङ्गैश्च पटहै पटुनादितै ॥ २६
नृत्यमानैरनेकैश्च साप्सरैर्नृत्यकोविदै ।
जगुर्गन्धर्वपतयस्तुतस्तत्र तु खेचरै ॥ २७
धूपैर्बहुविधैर्जुष्ट गन्धै सागुरुचन्दनै ।
विशिष्टैर्मरुतै सूक्ष्मै सहशम्भुगुणामृतम्[3] ॥ २८
वासोपस्करसश्लिष्टैर्वितानव्यजनस्रज. ।
पुष्पप्रकारमत्यर्थ[4] विद्योतितमिवाम्बरम् ॥ २९
नात्युच्छ्रित नातिनिम्न स्थलीप्रायमनोरमम्[5] ।
समन्तात् क्रोशपर्यन्त सुप्रिय शूलपाणिन ॥ ३०
युष्ट त्रिदशसघैश्च हराश्रममनुत्तमम्[6] ।
कृतमुत्कीर्णपाषाण सोपानपदपंक्तकम ॥ ३१
चतुष्कविपुल दिव्य सुसचार बहूदकम् ।
दात्यूहशिखिनादेन कललोत्कीणमार्दवम् ॥ ३२
सर्वत्र फलपुष्पाढ्य चम्पकोद्यानशोभितम् ।
मृगपक्षिगणाकीर्ण मत्तसारसनादितम्[7] ॥ ३३
प्रमोदमतुल सेव्य रुचिर प्रियदर्शनम् ।
देवलोकेष ये गुह्या गन्धर्वेष्वितरेषु वा ॥ ३४
इह ते भूधरानीता धीमता विश्वकर्मणा ।
तुष्ट्यर्थ देवदेवस्य शङ्करस्य च निर्मितम् ॥ ३५

---

1 $B_2$—नान्त ।

2 $B_2$—प्रासादविमलै ।

3 $B_2$—गुणावृत ।

4. $B_2$—युष्टप्राकारमत्यथ॰ ।

5 $B_2$—मनोहर ।

6 $B_2$—नराश्रममनुत्तमम् ।

7. $B_2$—मत्तसारङ्गनादितम् ।

एवं तु आश्रमं दिव्यमिन्द्रादीनां मनोहरम् ।
वापीनां शतशश्चक्रे दिव्यकूपान् पृथक् पृथक् ।। ३६

स्वादुमूलफलास्तत्र ह्रदाश्च नलिनीवनम् ।
नीलोत्पलवनान् स्फीतान् पुण्डरीकोपशोभितान्[1] ।। ३७

हंसकारण्डवोपेतान् रथाङ्गकुलनादितान् ।
जीवजीवचकोरौघान् सरसीकुलमालिनः[2] ।। ३८

स्वच्छतोयान्मनोज्ञाश्च झषकूर्मसमाकुलान् ।
वादित्रविविधैर्नादै-र्वेणुवीणादिपञ्चकैः ।। ३९

सर्वैश्च शुशुभे क्षेत्रं प्रियसंजननं महत् ।
नारदस्तुम्बुरुश्चैव हाहाहुहुरलंवृष ।। ४०

जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
भूतसंमोहनैश्चित्रैः स्वर्गसौम्यार्जवैर्गुणैः ।। ४१

सुरयोषित् सहस्रैश्च चारुमुख्यैर्दिदृक्षुभिः ।
स्तूयमानैरनेकैश्च स्वररागानुवन्दिभिः[3] ।। ४२

आक्रीडनकरैर्धन्यैः[4] संगीतमधुरस्वनैः ।
किन्नरैर्मधुरैर्गीतैर्वाद्यकोलाहलायकैः ।। ४३

सामान्यशिखिनां वृन्दैः कन्याराजीवलोचनैः ।
उद्यानगोपुरैर्धन्यैर्हेमाट्टालकमण्डितैः ।। ४४

दृश्यमानैरनेकैश्च दाम्पत्यैर्गगनचरैः ।
मुनिवैखानसैः सिद्धैस्तूयमानैस्तपोधनैः ।। ४५

सशिष्यैः शुश्रूषायुक्तैरग्निहोत्रपरायणैः ।
मुमुक्षुभिर्मुक्तसङ्गैः फलमूलाम्बुभोजनैः ।। ४६

पक्षमासनिराहारैः सिद्धयोगेश्वरैर्द्विजैः ।
ब्रह्मविष्णु सशक्राद्यैः पूज्यमानः सुरोत्तमैः ।। ४७

तुतोष भगवान् रुद्रः सर्वेषां प्रपितामहः ।
आदाय निखिलां पूजां प्रत्येकैकमनुग्रहात् ।। ४८

---

1 B2—स्वादुफलाकास्तत्र ह्रदाश्च वनजीवनम् ।

2. B2—सरम्याकुलमालिनः ।

3. A1, B1, C—स्वरचारानुवन्धुभिः ।

4. B2—आक्रीडनैः ।

अर्च्चित प्रीतियुक्तेन प्रचकाश इवाद्भुतम्।
लिङ्गमूर्त्ति विहायाशु सद्यो विग्रहवानभूत्॥ ४९

ब्रह्मोवाच

ततस्ते विदित देह नागभोगैरलङ्कृतम्[1]।
पश्यमाना मुदा देवा हर शरणमागता॥ ५०

बन्धुरीकृतकष्टास्ते कुड्मलावद्धपाणय।
निपेतु सहसा पादौ शितिकण्ठस्य ते सुरा॥ ५१

तुष्टुवुर्वाग्भिरिष्टाभिरिद वचनमब्रुवन्।
मन्दरे नीलये[2] (?) विन्ध्ये ऋषभे नीलनैषधे॥ ५२

पारिपात्रे सुमेरौ च हिमवद्गन्धमार्दने।
श्रीशैले वा विशालाज्ञान्मार्यमत्यन्त बिन्दुभि[3]॥ ५३

लोकालोके त्रिलोके वा जलस्थलगतेष्वपि।
व्यक्तमव्यक्तमेवासीदव्यक्तैकमहच्छुचि॥ ५४

देहे चैवाङ्गभूतेन दुर्लभस्त्व जगद्गुरो।
तव दर्शनमिच्छन्ति रूपेणानेन देवता॥ ५५

योगिनो वितरागाश्च ये चान्ये भवभीरव।
पुण्यहीना न पश्यन्ति दिव्य रूप स्फुट विभो॥ ५६

येनाभिन्नमिद विश्व कृत्तिवास नमोऽस्तु ते।
एको देव पुर[4] प्रोक्त एकोऽप्यजनयत्क्वचित्॥ ५७

अद्वितीय प्रवर्त्तेत जगत् सर्व हिते विभो।
लिङ्गरूपमुपासन्नो[5] जगद्योनिस्तु शङ्करम्॥ ५८

मुमुक्षवो गता लोक वैष्णव शङ्कर महत्।
फल प्राप्तुमिदानी ये समग्र तव दर्शनम्।
कुर्वन्तीच्छन्ति वै धीरास्ते[6] कृतार्था न सशय॥ ५९

---

1 $B_2$—नापभोगैरलङ्कृतम्।

2 $B_2$—निलये।

3 $B^2$—श्रीशैले वारिशालाया कृतमत्यन्तबन्धुभि।

4. $B_2$—पार।

5 $B^2$—लिङ्गरूपमुपासन्तो।

6. $B_2$—धारास्ते।

## ब्रह्मोवाच

सोऽथ देवपतिस्तास्तु प्राह गम्भीरया गिरा ।
भवता प्रत्ययार्थोऽय क्षेत्रस्यास्य महात्मन ॥ ६०

तेन विग्रहवानस्मि नासौ परमिको मत[1] ।
अविग्रहमसकल्पमत सदसदात्परम्[2] ॥ ६१

परमार्थमिद प्राहुरगम्यमिति शाश्वतम[3] ।
अशक्य भावरहित नाभावैरेव गृह्यते ॥ ६२

देहमात्रमनालम्ब देहावयववर्त्तिनम् ।
लिङ्गमूर्त्तिसमुद्भूत भूतानुग्रहहेतवे ॥ ६३

आराधनमविभ्रान्त कुर्वन्नेवाऽवसीदति ।
जगद्बीजमिद लिङ्गमाराध्य कलुषापहम् ॥ ६४

ससारभयभेत्तार कामद मुक्तिद शिवम् ।
एकचित्तो भवेद् यस्तु स याति परमा गतिम् ॥ ६५

आदिमध्यान्तरहित व्यापक मूर्त्तिमुत्तमम् ।
सर्वारम्भमनारम्भ रुद्रलिङ्ग सुरार्च्चितम् ॥ ६६

भजध्व च पर देवा स्वर्णकूटाश्रमे च माम् ।
एकाम्रकवने नित्यमेकोनकोटिमूर्त्तिषु ॥ ६७

तत्राप्यष्टसु यत्नेन भूयश्चैव समाहित ।
निवसाम्यहमत्रैव सदा सर्वात्मना स्वयम् ॥ ६८

पूजित प्रीतिमभ्येमि भक्त्या दूर्वाङ्कुरैरपि ।
अन्यतीर्थात्सहस्रैक साम्प्रत प्रीतिदा सुराः ॥ ६९

पूजा सर्वासु गृह्णामि इत्युक्त्वान्तर्दधे विभु ।
सकृत्पूजाविधानेन दर्शन स्पर्शनेन वा ॥ ७०

कृत्तिवास समासाद्य त्वनन्त फलमाप्नुयात् ।
बिन्दूद्भवजलस्नान होमदानादितपणम् ॥ ७१

---

1. $B_2$—परमिवो मात ।
2. $B_2$—सदत् स तत् परम ।
3. $B_2$—परमार्थ बिद, प्राहुरगमभिति शाश्वतम् ।

एवमक्षयमप्यत्र तारयेन्निखिलान् कुलान् ।
गा च भूमि हिरण्य च गजाश्वरथवाहनम् ॥ ७२

अनड्वाह[1] वर रत्न वस्त्रमाल्यानुलेपनम् ।
बालव्यजन छत्रादि लिङ्गपुरणमेव च ॥ ७३

भक्तित श्रद्धया युक्तो वित्तशाठ्यविवर्जित ।
एव य कुरुते विद्वास्तस्मै देव कपालभृत् ॥ ७४

प्रयच्छति स्वक लोक सोऽनन्तफलमश्नुते ।
कृत्तिवास समासाद्य तथा ब्राह्मणभोजनम् ॥ ७५

स्वल्पमक्षयमित्याहु क्षेत्रेऽस्मिन् ब्रह्मवादिन ।
तेजस्वी च यशस्वी च श्रीमान् परपुरञ्जय ॥ ७६

बलवान् रूपसम्पन्न सौभाग्य प्रियदर्शन ।
पुत्रपौत्रसमृद्धिश्च भृत्यज्ञातिसमन्वित ॥ ७७

भोजनै सर्वकामैश्च दीननाथजनप्रिय ।
नि सपत्न सदाचार कृत्तिवास प्रसादत ॥ ७८

स्वर्गे च बिपुलान भोगानाल्हादनकर परम् ।
शक्तित सर्वभोगाश्च भूक्त्वा यान्ति शिवालयम् ॥ ७९

शिवस्यानुचरो भूत्वा शिवेन सह मोदते ।
कृत्तिवास प्रसादेन न च्यवेत्स कदाचन ॥ ८०

य इद पुण्यमाख्यात पठेत्पर्वसु पर्वसु ।
श्रुतेन हि महेशानि ! स्मृतेन कथितेन च ।
सद्य. पापाद् विमुच्येत नरो याति शिवालयम् ॥ ८१

इति जनानन्दहितोपदेश शिववदन-कमलगलितम् ।
त्रिदशमनुजभुजङ्गमावृत तमज विभुमुपास्य यान्ति
शान्तिम् ॥ ८२

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे
समन्तात् क्षेत्रमाहात्म्य नाम चतुर्विशोऽध्याय.[2] ॥

---

1 $B_2$—अनन्त्य हि ।

2 समन्तात् क्षेत्रमाहात्म्यं नाम चतुर्दशोऽध्याय: ।

# पञ्चविंशोऽध्यायः

## सनत्कुमार उवाच

देवी वाचमुवाचाथ ब्राह्मणममितद्युतिम् ।
सर्वत्र चापरोक्षस्त्व त्वा विभु कारण विदु ॥ १

पूजित निखिल क्षेत्रे शक्राद्यैश्च दिवौकसै ।
एकोनकोटिलिङ्ग च दर्शस्पर्शगुणात्मकम् ॥ २

सनातनतरे तत्र सर्वामरनिषेविते ।
श्रोतुमिच्छामि भूयोऽपि कीर्तनीयान् प्रचक्ष्व मे ॥ ३

ततो ब्रह्मा स्मित[1] प्राह दिव्यज्ञानसमन्वित ।
साधु पृष्ट महाभागे साधु साधु नमोऽस्तु ते ॥ ४

शृणुष्वावहिता देवि ! युद्धमाश्चर्यदारुणम् ।
पुरावृत्त प्रवक्ष्यामि देवदानवयोर्यथा ॥ ५

तस्मिन् क्षेत्रे समायाते यजितु देवतागणे ।
शुश्राव दानवेन्द्रोऽसौ हिरण्याक्ष सुदुर्मति ॥ ६

चिन्तया परयाविष्ट पर्यतप्यत मन्दधी ।
पुरोधास्तस्य विख्यातो वैधसस्यात्मजात्मज[2] ॥ ७

सर्वशास्त्रार्थतत्त्वज्ञ उशना भार्गव कवि ।
पावकादित्यसकाशो विद्याशिक्षणको गुरु ॥ ८

तमीशान जगामाशु ह्युपस्पृश्य कृताञ्जलि ।
सविषादमिद वाक्य स्वगुरु ब्रह्मवादिनम् ॥ ९

देवैर्जुष्ट[3] महाक्षेत्रे ह्यस्मत्पक्षक्षयावहम् ।
समृद्ध्यर्थं सुराणा च असुराणा निरशकम् ॥ १०

---

1. $B_2$ C—स्थित ।
2. $B_2$ भार्गवैर्धवश्चात्मज: ।
3. $B_2$ तत्त्वैर्जुष्ट ।

अस्यार्थं विदित यच्च त्वयाऽस्माक च मङ्गलम् ।
यद् विनाश सुराणा हि सम्यक् समुपदिश्यताम ॥ ११

## ब्रह्मोवाच

हिरण्याक्षवच श्रुत्वा वेधा प्राहार्थतत्त्ववित्[1] ।
शृणुष्वासुरराजेन्द्र मद् वाक्य परम हितम् ॥ १२
यज्ञकर्मरता देवास्त्वविघ्नन्ति सुरोत्तमा[2] ।
अविघ्नाऽसुरसिद्धार्थे मा विघ्नस्तद्विपर्यय[3] ॥ १३
सुरासुरक्रमात्सिद्धौ धर्माधर्मसमाश्रितौ ।
देवाना यज्ञविघ्नो हि दानवाना महावृष ॥ १४
मखभागभुजो देवास्तुष्टि प्राप्स्यन्ति पुष्कलाम् ।
तस्मात् सर्वप्रयत्नेन विघ्नमावहतासुरा ॥ १५
गुरोरिति वच श्रुत्वा हिरण्याक्षादयोऽसुरा ।
समेतु सहित सर्वे ऊचुर्विघ्नविधि प्रति ॥ १६
निर्वापयाम पञ्चाग्नि घनपाश्वश्मवर्षण ।
अन्ये प्राहुर्वेधिष्याम शालावेदिषु ऋत्विज ॥ १७
अन्ये प्राह समस्तान् वै व्यञ्जनान् दूषयाम्यहम् ।
कश्चिदाह सदस्याश्च हविर्होतॄश्च सस्थितान् ॥ १८
कश्चिद्दीक्षितमुद्दिश्य पत्नी तस्य हराम्यहम् ।
यथासौ न भवेद् यज्ञो विधास्यामस्तया तथा ॥ १९
आज्यश्रुवप्रणीतादीनुपाध्याय सदक्षिणम् ।
चित्तवृत्ति हरिष्यामो यथासौ न भवेत्क्रतु ॥ २०
क्रतौ नष्टे क्रियाभ्रष्टे देवपक्षे निराकृते ।
सुखिनः स्म समृद्धाः स्म ज्ञातिबन्धुसुहृज्जनै ॥ २१
कृत्वैव समय दैत्या जग्मुरेकाम्रक वनम् ।
प्रच्छाद्य माययात्मान पश्यन्ति निभृत सुरान् ॥ २२

---

1 $B_2$ तद्वित् ।

2 $A_1$, B,C – स्त्वद्विघ्नत्वसुरोत्तमा ।

3 $B_2$ अविघ्नामरसिद्धार्थेऽविघ्नस्तव विपर्यय. ।

लीनास्ते पादपाग्रेषु निकुञ्जेषु तटे वने ।
स्थिताश्छिद्र समीक्षन्तेऽप्यनिश निमिषेश्वरा ॥ २३

गजाश्वगर्दभोष्ट्राभा हिसन्तो द्रुमलक्षिता ।
ददृशुस्ते महाश्चर्य शुश्रुवुस्ते महाध्वनिम् ॥ २४

स्वाहाकारान् स्वधाकारान् वषट्कारान् प्रति प्रति ।
ऋग् यजु सामघोषाश्च सुधावृष्टि सनातनीम् ॥ २५

उत्थितानि पताकानि कदलीस्तम्भरोपितान् ।
स्थापितान्युदकुम्भानि यूपाश्चैव पृथक् पृथक् ॥ २६

पशु चैव पुरोडाश चरुग्रास पशुक्रिया ।
सोमोत्पादनसस्थाश्च दीक्षितान् सहपत्निकान् ॥ २७

वेदिकारोहण दिव्य मन्त्रपूताभिषेचनम् ।
परिक्रमणमूर्द्धाङ्ग पात्रासादनसस्कृतम् ॥ २८

पादौ नूपुरसयुक्तौ हसलीला सुमध्यमा ।
मञ्जुघोषावती सौम्या हसकोरु सुजानुनी ॥ २९

पीनश्रोणितटोल्लास[1]-रोमराजी कृशोदरी ।
पयोधरभराक्रान्ता पृथुवक्षा स्वरूपिणी ॥ ३०

ललितायतदोर्दण्डा· कम्बुग्रीवा सुवर्चस ।
चित्रहारार्पितारस्का. स्फुरत्यधरपल्लवा ॥ ३१

स्मेरगण्डस्थलोद्भासा सुनासाश्चारुहासिनी ।
सुभ्रूचलितविभ्रान्त-उत्फुल्ल-कमलेक्षणा ॥ ३२

अर्धेन्दु स्फुटमूर्धानाः कुण्डलेक्षणमण्डिता ।
कर्णपत्रावतसेन सीमन्तालकमालिनी ॥ ३३

गौरीश्यामानवद्याङ्गी सर्वाभरणभूषिता ।
गन्धर्वकलनादन्ती[2] शोभनीयतमा शुभा ॥ ३४

कलापकुन्तलाक्रान्त-पारिजातस्रजोत्तमाः ।
नानावेशस्त्वपश्यस्ता प्रीतिगर्भसमन्विताः ॥ ३५

विबुधान् विविधाकारान् यज्ञोत्सव विभूषितान् ।
कुण्डलाद्युपहारास्तान् कृष्णाजिनसुमेखलान् ॥ ३६

---

1 $A_1$, C—पोतश्रोणि, $B_2$—पादशोणितटोल्लासा ।

2 $B_2$, गन्धवकलिता दन्ता ; ।

पश्यन्तश्चरित दैत्याः समाक्रान्तु[1] न शक्नुयु ।
ब्राह्मण रूपमास्थाय विचरन्ति यथेच्छया ॥ ३७

यज्ञे सदसि होमे च पात्रादिषु च सर्वश ।
शिवमादौ च मध्ये च शिवमन्ते च देवता ॥ ३८

असमर्था विकर्तु ते शिवतेजो दुरत्ययात् ।
निरस्ता ह्यभवन् दैत्या शिवतेजोऽभिवृहिता ॥ ३६

धूमेन हविषा गन्धैर्ब्रह्मघोषपदाक्षरै ।
नोपसर्पन्ति ते दैत्या दानवाऽसुरराक्षसा ॥ ४०

कृत्स्न रुद्रमय मत्वा नाभिभूता कथचन ।
छिद्रमीक्षन्ति ते क्रूरा अप्रसह्य नराधमा ॥ ४१

स्वर्णकूटे महायज्ञे यज्वानो मघवादय ।
मुनय स्तुतिभूयिष्ठा याज्ञिकान्[2] बहुऋत्विज ॥ ४२

पठन्ते विबुधा ग्रन्थान् न्यायवैशेषिकादिकान् ।
इतिहास पुराणानि आगमान्मुनिभाषितान् ॥ ४३

कल्पसूत्र निरुक्त वा ब्राह्मणाद्यैर्विधानत ।
सदिग्धनिर्णयप्रश्ना शिवसहितमेव वा ॥ ४४

क्रियते परमो यज्ञो दीयते दानमम्बिके ।
अनन्तमक्षय वित्त सर्वोपकरणै सह ॥ ४५

यूपवेदीमल कृत्य परिपूर्णाश्च पण्डिता ।
अग्रगा बहुशिष्याश्च भूतग्रामाश्चतुर्विधा ॥ ४६

रेमिरे पितर साध्या वायुभूता जलाशया ।
दिव्यन्तरीक्षभूभागा[3] ग्रहा नद्योऽद्रिसागरा ॥ ४७

भौमपातालद्वीपाद्या यावन्तश्च दिवौकस ।
यज्ञार्थहोममायाता प्रभूतधनसाधना ॥ ४८

न तत्र मलिना दीनास्फुट्क्षामविकलेन्द्रिया. ।
न नास्तिका भयत्रस्ता किल्विषा न परद्रुह ॥ ४६

---

1 $B_2$ समाक्रान्त ।

2 $A_1$, C—याज्ञिवान् ।

3, $B_2$—दिव्यन्तरीक्ष नभोभागा ।

न मृषा न च मात्सर्यं नैव दम्भोपजीविन ।
आक्रोशकार पापिष्ठा गर्हिता न च लोलुपाः ।। ५०

न कार्पण्या शठा मूर्खा दूषका पिशुनाधमा ।
वाग्दुष्टा दूषिताचारा न सन्ति गुणनाशका ।। ५१

क्षेत्रे वरिष्ठे वरदा सुरेशा वर च यज्ञ वरदाश्च विप्रा ।
वर च यज्ञ हविषा धन च वर वरेण्य वरद शिव च ।। ५२

त्रैलोक्यगुह्य च गुणाधिवास ससारसार परम विभु च ।
स्थूल च सूक्ष्म च परावर च यजन्ति देवा भुवि कृत्तिवासम् ।। ५३

अनादिमादि पुरुष पुराण गोप्तारमीश भुवि देवतानाम् ।
ज्ञेय सदा ज्ञानवतामनादि गुरोर्गुरु त प्रणमन्ति देवा ।। ५४

नमन्ति सिद्धा मुनयश्च सर्वे सर्वे जना पुण्यतमा प्रमेयम् ।
निवृत्तवाक्ये बहव स्वगाथास्तमक्षर वेदविदो वदन्ति ।। ५५

य सूक्ष्मबुद्धया विवृति कथचिद् योगेश्वर योगविदैर्मुनीन्द्रै ।
अध्यात्मदीप सुरसिद्धसघा यजन्ति देव भुवि कृत्तिवासम् ।। ५६

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया द्वितीयेऽ शे
देवासुरसग्रामे ऋतुदर्शन नाम पञ्चविशोऽध्याय [1] ।।

---

1 $B_2$ °द्वितीयेंऽशेदेवासुरसग्रामे ऋतुदर्शनो नाम पञ्चदशोऽध्याय ।

# षड्विंशोऽध्याय:

ब्रह्मोवाच

यज्ञमेव समालोक्य दानवा भृशदु खिता ।
विघ्नार्थमनुवर्त्तन्ते लम्बमाने दिवाकरे ।। १
नक्तमेव समीक्षन्ते चिन्ताछद्माकुलाशया ।
बभौ सन्ध्यारुण व्योम दिड्मुख पिञ्जरह्यभूत् ।। २
सन्ध्या सर्वे समीक्ष्याथ याजका द्विजपार्थिवा ।
नदी गन्धवती जग्मुर्देवा लवणसागरम् ।। ३
उपासन्तो निजा सन्ध्या सवनस्यास्य याज्ञिका. ।
सदस्या. सहशिष्यैश्च काम पर्यचरन् वने ।। ४
तच्छिद्र[1] वीक्षते दैत्या क्रूररूपा दुराशया ।
अरणी यज्ञपात्राश्च जह्रुस्ते तु समावृता ।। ५
उलूखलान्यनेकानि आज्यानि पशुभि सह ।
चरु च चरुपात्राणि समिधस्ते महासुरा ।। ६
ह्रीयमाणास्तु तान् दृष्ट्वा शक्राद्यास्त्रिदिवौकस ।
नानाशस्त्रोद्यतकरा ऋषयो वेत्रपाणय ।। ७
निषेदु सहसा ते वै दृष्ट्वा रूप भयङ्करम् ।
विचक्रुशुर्भयोद्विग्ना उरुश्चक्रन्दुराहता[2] ।। ८
तत केचित् युयुधिरे शेरते भुवि चाहता ।
दैत्या शस्त्रहता मुग्धा रुधिरेण समुक्षिताः ।। ९
मृता शेषा[3] प्रयातास्ते विक्राशन्तो हतातुरा[4] ।
अब्रह्मण्याश्च ब्रह्मण्या विक्रमन्त पराड्मुखा ।। १०

---

1 $B_2$—उच्छिद्र ।

2 $A_1$, C—उरुश्चक्र दुराहता. ।

3 $B_2$—मृतशेषा ।

4. $B_2$—हतासुरा. ।

तानपश्यन् सुरगणा विक्रमन्तो भयातुरान् ।
आपृच्छन्त किमित्येव भय चाकस्मिक वच ॥ ११

प्रलयान्त सम नाद तुमुल लोमहर्षणम् ।
तयोरेव सदस्तस्य[1] सर्वत श्रूयते वच ॥ १२

दैत्यदानवसघेन राक्षसेनासुरेण च ।
विध्वस्त क्रतुभागोऽयमन्वर्थं[2] वसु किंचन ॥ १३

दूषित पाकमस्निग्ध पानमन्नादिक बहु ।
दुद्रुवुस्ते ततो देवा मुनय सिद्धचारणा ॥ १४

स्वेषु स्वेषु[3] समासाद्य पश्यन्तोऽपि दिवौकस ।
समन्तात् वस्तुविध्वस्त निर्वापितहुताशनम् ॥ १५

आजग्मु सहतास्तस्मात् पराभूता परेण च ।
नि श्वसन्तो यथा नागा कषायीकृतलोचना ॥ १६

अपर परमीक्षन्तस्तपावन्त[4] सुरेश्वरा ।
तदर्थं मन्त्रवितर्तिं प्रतिकर्तुं न शक्नुयु ॥ १७

ता रात्री दु खदा घोरा व्युषिता.[5] सर्वदेवता ।
प्रभाते विमले रम्ये अभ्युदित[6]दिवाकरे ॥ १८

प्रात्त सन्ध्यामुपासित्वा[7] यथावन्मुनिदेवता ।
सर्वे एव समायाता हुताहुतिकृतिक्रियाः ॥ १६

स्यन्दनान् वाहनान् शुभ्रान् कवचान् शुभ्रसस्मितान् ।
प्रावृतास्ते मुहूर्त्तेन सुरा वै दिव्यसायकान् ॥ २०

कार्मुकान् सहतूणीरान् शक्त्यृष्टितोमरोत्करान ।
नानाशस्त्रान्महाभीमान् दैत्यपक्ष-क्षयावहान् ॥ २१

---

1 $B_2$—समस्ताश्च ।
2 $A_1$, $B_1$, C—सदर्थं ।
3 $B_2$—स्वेष्ट स्वेष्ट ।
4 $B_2$—परमीक्षन्तस्त्वप्लावन्तः ।
5 $B_2$—ह्यूषिता ।
6 $B_2$—त्वभ्युदित ।
7 $B_2$—सन्ध्यामुपाश्रित्य ।

समासाद्य ततस्ते तु तस्थु सग्रामलालसा ।
स्वे स्वेऽनीके तदा ते च सायुधा समवस्थिता ॥ २२

जग्मु शतसहस्राणि छादयन्तो नभस्थलम् ।
आदित्या वसवो रुद्रा[1] विश्वेदेवा मरुद्गणा ॥ २३

साध्या पितृगणा यक्षा सिद्धविद्याधरोरगा ।
गन्धर्वा मुनय सिद्धा विद्याधर सचारणा ॥ २४

किन्नराश्चाप्सरो नागा ब्रह्माविष्णुप्रजापति ।
देवराज पुरस्कृत्य प्रययुस्ते दिवौकस ॥ २५

लोकपाला समस्तास्ते महेश्वरपुरोगमा ।
आश्चर्यं वशमापन्ना साग्रामिकमलकृता ॥ २६

स्फीता अत्यन्तदुर्वारा सागरोर्मिसमोद्यता ।
महारथसमुद्योता महाकवचधारिण ॥ २७

भ्राजमानैरनेकैश्च महाद्रि[2]-शिखरोपमै ।
छत्रध्वजपताकैश्च द्योतमाना समन्तत ॥ २८

वादित्र विविधोद्घृष्टै सिहनाद निनादिभि ।
तुमुल चाभवत्तेषा धराकाश[3] प्रपूरिरे ॥ २९

तेन शब्देन महता दैत्या ऋद्धा सदानवा ।
प्राप्ता देवान् प्रसादन्त[4] प्रोच्यमाना दिते सुता ॥ ३०

निर्जग्मुश्च मदोन्मत्ता विप्रचित्त-पुरोगमा. ।
हिरण्याक्षाश्रिता[5] सर्वे सभृत्यबलवाहना ॥ ३१

ज्ञातिभि सपुरोगैश्च महाभीम-पराक्रमै ।
गदाकरै कवचिभि पुत्रपौत्रै समन्विता[6] ॥ ३२

यानैर्बहुविधाकारैर्विमानै सुमनोहरै ।
स्यन्दनैर्मेघवृन्दाभैर्व्यूहवन्तै सुवर्चसै ॥ ३३

---

1 $B_2$—विश्वे ।

2 $B_2$— महार्हं ।

3 $B_2$—धराकाशौ

4 $B_2$—पुणदन्ता ।

5 $B_2$—हिरण्याक्षस्य सुता ।

6 $B_2$—पुत्रपौत्रसमन्विता ।

दशवद्धैरष्टवद्धै पञ्चवद्धै· सहस्रश ।
विमान विथी-सच्छन्नै कामगै कामरूपिभि ॥ ३४

वरलब्धैर्महासत्त्वैर्जितरङ्गै मैनस्विभि ।
युद्ध कुर्वद्भिरव्यग्रैर्गृहातपरमायुधै [1] ॥ ३५

कुले जाता मदान्मत्ता विकार समरप्रिया ।
मदमत्ताश्च मातङ्गाश्चलत् शिखरिणोपमा ॥ ३६

सकल्प-बलसपन्न-महाभूत-प्रचोदिता । ।
शतशोऽथ सहस्राणि सादिनश्च सुदुर्जया [2] ॥ ३७

धनु प्रचण्डदोर्द्दण्डा परानीकविमर्द्दकाः ।
हरय पवनोपेता महावृन्दाभ्रसनिभा ॥ ३८

विद्रुमारुणमञ्जिष्ठा सन्ध्याशोणार्कवर्चस ।
शूरा कौशेयवसना जाम्बूनदपरिच्छदा ॥ ३९

किङ्किणीरववित्रस्ता क्ष्वेडमानास्तुरङ्गमा ।
दृष्ट लक्षभिद शूरा वद्धतूणा धनुर्द्धरा ॥ ४०

पाशासि यष्टिवर्माढ्या[3] स्वम्यर्थं कृतनिश्चयाः ।
असख्येया प्रमेयाश्च दैत्यसेना पदातय ॥ ४१
वृक्षगुल्मनिभा सर्वे सर्वे सग्रामदुर्जया ।
वशीकृतपरा [4] क्रूरा कामचारा दुरसदा ॥ ४२
केतुमन्त पृथक् ख्याता यज्ञविघ्ना सुरद्विष ।
वाहनाद्यकलच्छवासैरवैरश्वसमैर्जवै ॥ ४३

खरोष्ट्र-महिषैर्व्याघ्रै खङ्गै सिंहैर्मृगैर्गजै ।
भ्राजमाना ह्यनेकैश्च शरदीव नभस्थलम् ॥ ४४
द्योतमाना प्रभायुक्ता शरच्चन्द्र इवोद्यता ।
शङ्खभेरीमृदङ्गश्च पट्टहै पटुनादितै ॥ ४५
वेणुभिर्भर्झरै कास्यैस्तुमुल चाभवन्नभ ।
नानातूर्यनिनादैश्च बृहितैर्गजवाजिभि ॥ ४६

---

1 $B_2$—विनिन्यरथकुर्वद्भिरव्यग्रै परमायुधै ।

2 $B_2$—सादिसारोहि-दुर्जया ।

3 $A_1$, $B_1$, C—यष्टिवत्साश्वा ।

4. $A_1$, $B_1$, C—कृतवश्यपरा ।

सिंहनादरवोदधृष्टैर्धनुषो ज्यारवेण च ।
अभवत्तुमुल तेषा देवदानव सेनयो ॥ ४७

स्वनवन्तो दिश सर्वा द्यौर्भूमिश्च समन्तत ।
चुक्षुभु सरिता नाथा श्रीमन्तोऽप्यचलोत्तमा ॥ ४८

चचाल वसुधा तस्मिन् सशैलवनकानना
सर्वशस्त्रोद्यतकरौ सन्निपातौ सुरासुरौ ॥ ४९

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे देवासुर-सग्रामे देवासुरसन्नहन नाम षड्विंशोऽध्याय [1] ।

---

1. B₂— देवासुर-सग्रामे संनहनो नाम षोडशोऽध्याय.।

# सप्तदशोऽध्यायः

## ब्रह्मोवाच

सनह्यतु[1] उभे सैन्येऽप्यन्योन्यमभिवर्षिणौ ।
पूर्णमक्षोभ्य सपातौ शस्त्रौघ कलिलाबुभौ[2] ॥ १

विचित्रवसनोपेतौ चित्रध्वज-समाकुलौ ।
द्योतमानौ प्रभावन्तौ स्वनवन्तौ युयुत्सूहि ॥ २

प्रलयान्त-विभावन्तौ[3] भैरवौ रोमहर्षणौ ।
सन्निपातौ महासेनौ भानुमन्तौ महत्तरौ ॥ ३

पतन्तौ[4] तौ सन्निवेशौ वेलाम्भसि समावुभौ ।
भ्राजमानौ तु तौ दृष्टावन्योन्यवधकाङ्क्षिणौ ॥ ४

षडङ्गसहितावेतौ महानासीद्व्यतिक्रम[5] ।
तयो समभवद्युद्ध तुमुल घोरदर्शनम्[6] ॥ ५

पृषत्कवर्षमभवत्पर्जन्य इव वृष्टिमान् ।
प्रेर्यन्तवियतामग्रैश्चोपयुक्तै शिलाशतै ।६

पतद्भिर्नामलानीकैधन्विभिर्जयतामम्बरै[7] ।
चर्मासिधरमव्यग्रा वभुवुरकुतोभया ॥ ७

हृयै प्रतिहयाशक्ता वारणैर्वरवारणा ।
रथै प्रतिरथै सख्ये महारथरथोत्तमौ ॥ ८

---

1 A1, B1, C—सन्नहतु ।

2. B2—चित्रध्वज-समाकुलौ ।

3. B2—निभावेतौ ।

4 B2—पतितौ ।

5. B2—व्यतिक्रमौ ।

6 B2—घोरदर्शिनौ ।

7. B2— पत्तिभिर्नामचानेकैर्ध्वनिभिर्जयतामम्बरै, ।

सामान्येन च सामान्यै सममासीत् समागम ।
ज्याघाततलसघृष्टैर्भर्त्स्यमान परस्परम् ॥ ९

गजवाजिखरोष्ट्राणा दन्तिना बृहितैस्तथा ।
नेमितूर्यनिनादैश्च शङ्खभेरिरवोत्करै ॥ १०

योधाना सिहनादैश्च क्ष्वेडनास्फोटनैर्भृशम् ।
प्रचचाल जगत् कृत्स्न क्षोभमान सभूर्भुवम् ॥ ११

एव तु तुमुल शब्द विश्वभूतभयावहम् ।
घोर घोरतर रूप देवदानवयोरभूत् ॥ १२

प्रादुर्भूत महाभीम चतुरङ्गाङ्ग-सक्षयम् ।
ग्रसन्तमिव अन्योऽन्य भ्रमन्तमिव मारुतम् ॥ १३

विशिष्टकवचा शूरा किरीटविषमप्रभा ।
दृढधन्वि दुराधर्षा कुण्डलाङ्गदधारिण ॥ १४

महाभाग्य कुले जाता भर्त्सयन्त परस्परम् ।
अतिप्रवृद्धा परुषा वद्धवैरा सुकर्कशा ॥ १५

तेषा महाशस्त्रवता जयार्थकृतचेतसाम् ।
छिन्नभिन्नविकीर्णैश्च शरैर्व्याप्त नभस्थलम् ॥ १६

शस्त्रौघसन्निपातैश्च सघृष्टजनितस्वनै ।
जलभूम्यवपातज्ञै पतद वीरणसायकै[1] ॥ १७

सधूमज्वालकवलै पन्नगैरिव दष्ट्रिभि ।
खादमानै पिशाचैश्च लेलिहानैरधोमुखै[2] ॥ १८

विकीर्णकवचै शस्त्रै[3]श्छिन्नपातै शिरोरुहै ।
सकेयूरभुजश्छिन्ना[4] एकबाहु द्विबाहव ॥ १९

एकाक्षि विगताध्वस्ता विचित्रमणिकुण्डला ।
समन्तात् पतिता योधा सेनयोरुभयोरपि ॥ २०

---

1 $B_1$, C—जलभूमावपावद्धै पतङ्ग रणसायकै ।
 $A_1$—जलभूमावपावद्धै ॰ ॰ ।

2 $B_2$—अयोमुखै॰ ।

3 ध्वस्तै ।

4. $A_1$, $B_1$, C—सकेयूरभूतश्छिन्ना ।

प्रशान्तरजसोद्धूत[1] मास-शोणित-कर्दमम् ।
प्रकाशमभवत्तेषा महासग्रामकाङ्क्षिणाम् ॥ २१

ततो नालीकनाराचै भल्लै कर्णविकर्णकै ।
तोमरैरर्धचन्द्रैश्च शितै स्फीतैश्च[2] सायकै ॥ २२
सत्पक्षै[3]र्गृध्रपक्षैश्च कङ्कबर्हिणपत्रकै ।
विविधु पृथुसारैस्ते तडिदग्निसमप्रभै ॥ २३

हरिभिश्चरणोत्कृष्टैर्दन्तवद्भि[4] सुदन्तिभि ।
विहस्तपतिताश्चान्ये विक्रोशन्त परस्परम् ॥ २४
हतयोधा प्रवीराश्च हताश्वा हतवाहना[5] ।
पारिप्लवास्तथाश्वाश्च[6] विचरन्ति यथेच्छया ॥ २५
वाणै केचित् विभिन्नाश्च खड्गैश्चापर एव वा ।
केचित् प्राणैश्च[7] निर्भिन्ना पतन्ति पृथिवीतले ॥ २६

भि नदेहा विलम्बाभा समन्ताद्रणमूर्धनि ।
उभावपि महासत्त्वा समानबलविक्रमाः ॥ २७

विचक्रपतिता भग्ना अक्षविक्षिप्त-कूबरा ।
हतवाहा हतौघास्ता विमौलिपतिता मृता ॥ २८
मृतशेषा दृढा भीता प्रयाताश्च भयातुरा ।
कुलधर्म परित्यक्तास्तथा लज्जा श्रिय यश ॥ २९
नि शङ्का विह्वलाश्चान्ये शत्रु रणमुपागता ।
ताश्च दृष्ट्वा शचीनाथो देवानाह इद वच ॥ ३०

शक्र उवाच

तिष्ठ! तिष्ठाङ्ग! मा भैष्ठ अल त्रासेन देवता ।
मयि जीवति[8] शत्रुघ्ने को युष्मान् त्रासयिष्यति ॥ ३१

---

1 A1, B1, C—प्रशान्तराजसोद्धूत ।
2. A1, B1, C—पीतैश्च ।
3 B2—सपक्षै ।
4. B2—दन्तवद्भिश्च दन्तिभिः ।
5. B2 —हतयोधप्रवीराश्च हताश्वरथवाहनाः ।
6. A1, B1, C—पारिप्लवास्तथा विश्वा ।
7 A1, C—प्राणाग्र ।
8. A1, C—नन्दति ।

पश्यन्तु विबुधा सर्वे मयि सग्राममुद्यते[1]।
वधिष्येऽहं रिपून् सर्वान् पश्यध्वमकुतोभया ॥ ३२

प्राकृता इव वित्रस्ताः कथ रज्यत सत्तमा ।
तिष्ठध्व निर्भया सर्वेघ्नन्तु सर्वान् महीसुरान् ॥ ३३

ब्रह्मोवाच

इतीन्द्रस्य वचः श्रुत्वा क्रोधसरक्तलोचना ।
पुरस्कृत्य सहस्राक्ष योद्धुकामा व्यवस्थिता ॥ ३४

ते सुरा विगतत्रासा शक्रेण प्रतिबोधिता ।
समेत्य निर्भया सर्वे पुनर्योद्धुमपागता ॥ ३५

ऐरावतगत श्रीमान् वज्रपाणि सुरेश्वर ।
विस्फार्य कार्मुक हृष्टो व्यधमच्छुङ्गमुत्तमम्[2]। ३६

महता इषुवर्षेण शक्त्यृष्ठि परिघेण च ।
शतघ्नी मुषलै शूरैस्तोमराङ्कुश-पट्टिशैः ॥ ३७

नागवक्त्रैर्महाघोरैर्ज्वलद्भिरिव पावकै ।
उल्काशनिसमस्पर्शैर्वज्रेण शतपर्वणा ॥ ३८

जघान समरे शत्रून् देवविद्याधरोरगै ।
गन्धर्वयक्षमुख्यैश्च सख्ये सह शिवप्रिये ! ॥ ३९

प्रोज्झिता समरे दैत्या शक्रबाणप्रपीडिता ।
विध्वस्ता विरथा दीना हतशेषा महासुरा ॥ ४०

भ्रष्टमाल्याम्बरधरा सर्वे विगलितस्पृहा ।
अयोधनगता दैत्या वातोद्धूता घना इव ॥ ४१

असौ दैत्य महासेना शक्रवाणप्रपीडिता ।
अशरण्या शरण्यार्थं प्रतीची दिशमाश्रिता ॥ ४२

कुनृपेण यथा राष्ट्र प्रभग्न जनवर्जितम् ।
तत्तथा विहिता सेना भयार्त्ता च पराङ्मुखा ॥ ४३

1 B₂—सग्राम उद्यते ।
2 B₂—वधमुत्सङ्गमुत्तमम् ।

तमपश्यद्धिरण्याक्ष स्वमनीक पराङ्मुखम् ।
उवाच हययन्तार यहि शत्रु रण प्रति ॥ ४४
निर्वापयामि देवेन्द्र गिरेरग्निमिवाम्बुद ।
लोकपालानह नागान् यक्षराक्षसकिन्नरान् ॥ ४५
अस्मद् बलनिहन्तार दुर्बल दुर्मति रणे ।
पापिष्ठ क्रूरकर्माण शक्र सम्यग् वधाम्यहम् ॥ ४६
इति सदिशतस्तस्य[1] क्रुद्धस्य दनुजेश्वरा ।
सिहद्विरदवत् सर्वे निर्जग्मु सर्वतोऽसुरा ॥ ४७
दैत्यदानवमघास्ते दर्पोद्धूता[2] सुरद्विष ।
विहाय भवन क्रुद्धा गुहा मुक्त्वेव केशरी ॥ ४८
सन्नह्य द्रुत भीमास्ते भीमकार्मुकधारिण ।
वद्धगोधाङ्गुलित्राणा कवचेन विराजिता ॥ ४९
बीरवेशधरा सर्वे सर्वास्त्रविधिपारगा ।
तपोवीर्यबलोत्कृष्टा बलेन महता वृता ॥ ५०
निर्घोषरसना भीमास्तुमुलमभिसकुला ।
मायायुद्धाश्रिता[3] सर्वे कामरूपा विभीषणा ॥ ५१
अनेककोटिसयुक्ता अमरेन्द्रजिघासव ।
जगर्ज्ज च महासैन्य साट्टहासमिवाम्बुद ॥ ५२
आकृष्यमाणा आकृष्या अप्रमेया दुरासदा ।
वियद् विमानसच्छन्ना मनोज्ञाश्चारुदर्शना ॥ ५३

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे देवासुरसग्रामो नाम सप्तविशोऽध्याय[4] ॥

---

1 B—सदर्शितस्तस्य ।

2 $B_2$—हर्षोद्धूता ।

3 $A_1$, $B_1$, C—मायायुद्धाय धामिश्रा. ।

4. ... देवासुरसग्रामे सप्तदशोऽध्याय ।

# अष्टाविंशोऽध्यायः

## ब्रह्मोवाच

देवदानवराजान अभिजाता[1] युयुत्सव ।
स्वै स्वैर्बलै समाजग्मु सुसभृत-महायुधा ॥ १
प्राग् भावे चैव मेरोस्तु विमर्दस्त्वभवत्तयो ।
तयस्त्रिश समाख्याता[2] द्विगुणा परवाहिनी ॥ २
विप्रचित्तिश्चितिश्चैव ततो देवान्तक क्रुध ।
शङ्कुकर्णस्तथा शङ्कु पृथुश्च पृथुलोचना ॥ ३
अमृतार्च्चिच शतार्च्चिश्च कर्कन्दु कनकप्रभा ।
असिलोमा पुलोमा च कालकेय कुलध्वज ॥ ४
द्रुमिलो दृमसेनश्च द्रुमिकर्णो महाबल[3] ।
विशालो विकटो भीमश्चण्डवेग उडुप्रभ ॥ ५
मर्द्दन. शरभ[4] शान्त शान्ततेजा जनान्तक ।
पृथुकीर्त्ति सुकीर्त्तिश्च चारुकीर्त्ति सुकुण्डल ॥ ६
सुघोषो घोषद शूरो मेघवाहन हारितौ[5] ।
ऐन्द्रोऽथ मदनो भ्रान्त शिव सूर्यः प्रतर्दन[6] ॥ ७
मेदो मेदशिख क्रौञ्चो भङ्गुरो भङ्गमेखल ।
तारक पृथुरोमा च कालनेमि सुरार्दन ॥ ८
कवच केशनो वृत्तो हिरण्यकशिपुस्तथा ।
एते चान्ये च बहवो दैत्याश्च दानवासुरा.[7] ॥ ९

---

1 $B_2$—अभिजग्मु ।

1 $A_1$, $B_1$, C—नयाख्याता ।

3 $B_2$—महातल ।

4 $A_1$, $B_1$ C—पशभ ।

5. $A_1$, $B_1$, C—हारित ।

6 $B_2$ —प्रदर्शन ।

7. 1, $B_1$, C—दैत्यदानवकासु रा. ।

स्पर्द्धमाना विलीयन्ते सन्निपातो महानभूत् ।
महता वाणवर्षेण छादयन्तो नभस्थलम् ।। १०

हारयन्ति रथान्नागान् प्रेषयन्तो नभस्थलम् ।
यम क्षयाय कुर्वन्त सर्वं एव महाहवे[1] ।। ११

तद् युद्ध कदन घोर सर्वभूतभयावहम् ।
सकुल तुमुल युद्धमद्भुत लोमहर्षणम् ।। १२

समन्तादभियोत्स्यन्त समाहूय परस्परम् ।
महाहव भयायुक्त[2] सोम शुक्र बुध क्रुध ।। १३

भौम भीमो गुरु वृत्तो भार्गवोऽसुरमन्त्री हि ।
शौरि सैहिकमासाद्य केतु त्वष्टामुपागमत् ।। १४

ग्रहैश्च ग्रहमारब्धा लोकपालान्निवोध मे ।
इन्द्र हिरण्यकशिपुश्चन्द्र चित्ति प्रतापवान् ।। १५

द्रुमिलस्तु तथादित्य धनद द्रुमिलात्मज ।
वरुण च बृहत्कीर्त्ति सुकीर्त्तिधममेव च ।। १६

चित्रभानु बिशालाख्यो विप्रचित्ति पुरन्दरम् ।
कालनेमी रणे स्कन्द कालकेयो विनायकम् ।। १७

शुन्दोपशुन्दावश्विभ्या जयन्त कनकध्वजः ।
असिलोमा पुलोमा च मित्रावरुणमेव च ।। १८

वसवश्चाष्टदैत्यैश्च रुद्रैरेकादशै सह ।
एकादश बलोत्कृष्टा दानवाश्च परन्तपा ।। १९

मरुद्गणैश्च पञ्चाशद् युयुधुर्युधि दानवा ।
अयोध्यत[3] कृतक्रोधा घोरस्त्वासीद् व्यतिक्रम ।। २०

अपरैश्चापरैः शस्तै सामान्यै सदृशैर्भृशै ।
अक्षोभ्या परिमेयन्तौ जेतुकामौ सुरासुरौ ।। २१

तत्रास्त्रबलिनो[4] दैत्या. सहायोत्था दुरासद ।
सहायबलसम्पन्ना देवपक्षक्षयावहा ।। २२

---

1 $A_1$, C—महाह्रदे ।

2. $A_1$, C—महद्विभ्रशयासवत ।

3 B—अयुध्यत ।

4. $B_2$—ततस्तु बलिना।

विरेजु सर्वतो दैत्या गगनोल्केव विश्रुता[1]।
तीर्यगुद्‌ध्र्व विरेजुस्ते सान्तरीक्ष दिशोदश ॥ २३

हेमपुखा प्रकाशन्ते खद्योतैरिव शर्वरी।
महानिर्घातनिर्घोष स्तयित्नुरिवाम्बरे ॥ २४

निर्भेदमभवत्तेषा रणरोषवशावुभौ।
छिन्नभिन्नविकीर्णास्ते पतन्ति वसुधातले ॥ २५

अन्योऽन्य व्यस्त[1]योवास्ते नगौ हैमवताविव।
प्ररूढवपुषो भीमा क्षतजै क्षिप्तभूषणाः[2] २६

रणरेणुसिक्तदेहा वीक्षमाणा समन्तत ।
रुधिरार्द्रा कबन्धाश्च नृत्यमाना सहस्रश ॥ २७

खाद्यमाना पिशाचैश्चासृगा[3]स्यत्वक्-बलाशिभि ।
रौद्रमायोधन जज्ञे नाऽप्य वै तत् परस्परम्[4] ॥ २८

स्वानि चैव परे हन्ति परश्चापरमेत्र च ।
गृध्रगोमायुकङ्काश्च स्वनवन्तो दिशो दश ॥ २९

प्रचकम्पे तदा भूमि सशैलवनकानना ।
ये च यैश्च समाख्यातास्ते च तैश्च समायुधि ॥ ३०

षण्मुख कालनेमिश्च द्वौ रथस्थावुपस्थितौ।
धनुर्वेदविदौ चोभौ ख्यातकीर्त्ति-मनस्विनौ ॥ ३१

तेजवन्तौ बलाध्यक्षावन्योऽन्यमभिवर्षिणौ।
छादयन्ताविषुव्रातैर्दीर्घबाहू बलान्वितौ ॥ ३२

उवाच युधि दुर्धर्षं कालनेमिर्महासुर ।
रणकर्मानुसप्राप्त पुरुषस्त्व विशेषत ॥ ३३

द्रक्षन्तु बहवश्चात्र दर्शयस्व निज बलम्।
वाढ्मित्येव स प्राह कुमार प्रहसन्निव ॥ ३४

---

1 $B_2$—वसु ।

2 $B_2$—पतङ्ग प्राप्तभूषणा ।

3 $B_2$—मास ।

4. $A_2$, C—परस्परम् ।

न वाक् प्राणाश्च[1] सग्रामे कर्मं एव समाचर।
इत्युक्त्वा नवभिर्बाणैराशीविषसमप्रभैः ॥ ३५

तमापतन्त चिच्छेद भूयस्त्रिशन्मुमोच ह[2]।
दैत्य क्रोधसमाविष्टो व्यसृजत्सप्तसप्ततिः ॥ ३६

कार्त्तिकेयस्तमायान्त चिच्छेद कृतहस्तवत्।
गतमेवाऽसृजत् क्रुद्ध शतेन शतनिर्जित ॥ ३७

सहस्र व्यकिरन् दैत्य स्कन्दश्चिच्छेद तान् शरान्।
सछाद्य शरवर्षेण कुमारस्य महारथ ॥ ३८

अदृश्यस्त्वभवत्सख्ये चाश्मद् गर्भस्त्विवाम्भसि।
दु खिता देवगन्धर्वा नि श्वस्योष्ण पुन पुन ॥ ३९

अभवन् स्तम्भिता सर्वे जहृसुर्दैत्यदानवा।
कार्त्तिकेयोऽथ सक्रुद्धो अर्द्धचन्द्रै शिलाशतै.[3] ॥ ४०

दशबाणै कालनेमि द्रुमनेमि च षोडशै।
द्वादशेन मद जघ्ने[4] वृत्र चाष्टैरताडयत् ॥ ४१

नवभि शङ्कुकर्ण च कुम्भ पञ्चभिरेव च।
हेमबिन्दु सुलोमान यमलोकमदर्शयत् ॥ ४२

चुकोप द्विगुण चासौ शीघ्रास्त्रो लघुविक्रम।
प्राहिणोच्छल्य[5]मादाय पश्यत्सु च सुरेषु च ॥ ४३

मुक्तमात्र खमाविश्य ज्वलन्तमिव पावकम्।
तमायान्त सुदीप्ताङ्ग कुमार प्रहसन्निव ॥ ४४

कर्णकै शतधारैश्च निकृत्य दशधा क्षितौ।
पातयामास देवेशि! तव पुत्रो महायशा ॥ ४५

तत शक्ति समादाय यष्टिमाला-विभूषिताम्।
सर्वप्राणैश्च ता शक्ति मुमोच वरदानव ॥ ४६

---

1 $B_2$—प्रमाणाश्च।

2 $B_2$—विमोह च।

3 $B_2$—शिताशतै।

4 $B_2$—द्वादशैर्मदजघ्ने च।

5. $B_2$—शूल।

जगामार्कं समालक्ष्य कुमारवधकाङ्क्षिणा ।
तामभ्यागमगता वीक्ष्य कालपाशाधिका मृधे ॥ ४७

कालायासमयैर्घोरैरसुर तमपोथयत् ।
चुकोप स महादैत्यो भूय कार्मुकमाददे ॥ ४८

प्राहिणोच्छरवर्षेण धारापातैरिवाम्बुद ।
वधमानौ तु तौ वीरौ चित्रयोधौ दुरासदौ ॥ ४९

वायव्यमथ सावित्र्य याम्य कौवेरवारुणे ।
सौम्य मैत्र तथाग्नेय कृतप्रतिकृताविमौ ॥ ५०

अच्छिद्रैर्दृढसन्धानैरेकादेको विशिष्यते ।
पश्यमानावुभौ सैन्यौ हस्तचापमवाहनत्[1] ॥ ५१

सैन्यमानीय वेगेन व्रीडित कृत्तिकासुत ।
तमेव सव्यधत्तूर्ण भूयश्चान्यवधद्धनु ॥ ५२

द्रुतमात्र लुनात्याशु सव्यदक्षिणयोरपि ।
तत शक्तिमुपादाय मुमोच ज्वलनप्रभाम् ॥ ५३

मुक्तमात्र च तज्ज्योतिर्दूर्लक्ष्योरसि सपतत्[2] ।
विभेद कवच देह मुक्तमात्रेण तत्क्षणात् ॥ ५४

शक्तिविद्ध कालनेमि वासयित्वा निजे रथे ।
रणभूमेर्निनायाशु सारथिस्तस्य तत्क्षणात् ॥ ५५

साधुवादोऽथ भूर्लोके स्वर्लोके चाभवन्महान् ।
देवगन्धर्वऋषय पूजयन्ति च षण्मुखम् ॥ ५६

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे कालनेमिशक्तिविद्धो नाम षट्विंशोऽध्याय [3] ॥

1 B —हस्तचापमवाहयन ।

2 B₂—मुक्तमात्रात्तदाज्यायिदुलक्षोरसि सचित् ।

3, B₂— कालनेमिशक्तिविद्धो नामाष्टदशोऽध्याय ॥

## ऊनत्रिंशोऽध्यायः

### ब्रह्मोवाच

अथ याते[1] च निर्भग्ने कालनेमौ महासुरे ।
देवाश्च जय-उद्धृष्टा विद्रुते च परे जने ॥ १

तदा दैत्यपति क्रुद्धश्चकार कदन[2] महत् ।
अत्यद्भुतकर वीर्यं परसैन्य-विघट्टनम् ॥ २

एतस्मिन्नन्तरे वीरौ द्वन्दयुद्धविशारदौ ।
द्रुमसेनोऽशुमाली च सिह सिंहमिवासुरौ ॥ ३

अन्योऽन्यमभिजघ्नन्तौ भर्त्स्यमानौ यदृच्छया ।
निजाभ्यासगतावेतावासाद्य रथिना वरौ ॥ ४

साश्वश्च सरथ· सूतश्छत्रचामरकेतुभिः ।
सूर्यांशुदहनैर्दग्धस्तुलाराशिरिवापतत् ॥ ५

द्रुमसेने भस्मभूते[3] विसर्पन्ति मरीचय ।
अदहत्त[4] परानीक प्रलयार्क-समप्रभ [5] ॥ ६

पावक पृथुसेनश्च चेरतू रणमूर्धनि ।
पवनेनानुविद्धेन कालाग्निरिव दानवान् ॥ ७

अनिलानलसयोगे दु.सहस्तु तथाभवत् ।
अशक्ताश्च यथा दैत्या विप्रनष्टा सहस्रश ॥ ८

---

1. $A_1$, C—ख्याते ।
2. $B_2$—क्रन्दन ।
3 $A_1$, C, $B_2$—भस्मीभूते ।
4 $A_1$, C—अददत्त ।
5, $A_1$, C—समप्रभौ ।

विक्रोशन्तो विचेष्टन्त शाश्वत विगतप्रभा ।
केचित् वाहनसकीर्णा सागरेषु सरित्सु च ॥ ९

दानवा भयसविग्ना हित्वात्मान यशोगणम्[1] ।
धूमान्धकारवितत स्फुलिङ्गर्च्चिशतोज्वलम्[2] ॥ १०

भूमान्तरीक्ष[3]-गगन ज्वाला चैव समावभौ ।
स्वनवन्त प्रभावन्त शिखाकुटिलभासुरम् ॥ ११

नि सपत्नकर भीम यशोनाश प्रवर्त्तते ।
एतद् भीम समालोक्य विप्रचित्तिरभाषत ॥ १२

एषोऽहमुद्यत सख्ये तिष्ठध्वमकुतोभया ।
दधार कार्मुक दैत्यो बाण वारुणमोजसा ॥ १३

दुर्धर्षं दुसह रौद्र भूयो भाति विभावसुम् ।
वारुणेनास्त्रराजेन निर्वापित हुताशन ॥ १४

प्रशान्तस्त्वतिभूयिष्ठो निष्पन्नोऽप्यनिलो वभौ ।
विप्रचित्तिशरोद्भूत छादयन्त नभस्थलम् ॥ १५

वितत चाम्बुवर्षं वै दैत्यचापपरिच्युतम् ।
तमवेक्ष्य शचीनाथ सत्वर पर्यधावत ॥ १६

दैत्यकोटिं समाविश्य भूय सग्राममुद्यत ।
प्रोत्साहित निज सैन्य सन्निपत्य रणाङ्गणे ॥ १७

ततोऽब्रवीत् सहस्राक्षो मातलिं सुरसारथिम् ।
रथ नयाशु मे तत्र यत्रास्ते सुरसूदन ॥ १८

शमयेऽह रणे व्यक्त विप्रचित्ति रणाङ्गणे ।
हिरण्याक्षसुतान् सर्वान् नमुचि मुचिशम्बरौ ॥ १९

एव वदन्त त स्कन्द यात सेनासमन्वित ।
विचचार गत सख्ये त्रिदिवेन बलेन च ॥ २०

सन्निपातो महानासीत्तुमुल लौमहर्षणम् ।
प्रकम्पते तदा भूमि सशैलवनकानना ॥ २१

---

1 $A_1$—यशोगता, $B_2$—दिशोगता: ।

2 $B_2$—स्फुलिङ्गर्च्चिः शतोज्वल ।

3 $B_2$—भूम्यन्तरीक्ष ।

सूर्यश्चन्द्रो दिशा नाथा विद्रवन्ति दिशो दश ।
मिश्रभूता विराजन्ते चित्रभूतास्त्वदर्शना ॥ २२

आविद्धकिरणग्रस्ता किरीटकवचोज्वला ।
चारुचामरछत्रैश्च वासोभि समलङ्कृता ॥ २३

धनुभिर्धन्विर्भिग्रस्ता[1] पतङ्गै: पतगोत्तमा ।
नागैर्नागान् नगेन्द्रश्च वनद्वीपानिवोत्कटान्[2] ॥ २४

तुमुल चाभवत्तेषा युद्ध देवासुरक्षयम् ।
स्वेदोद्भिन्नशरीरास्ते रक्तासक्ताश्च दारुणा ॥ २५

सदष्टौष्ठपुटा सर्वे न विदु स्व पर बलम् ।
छिन्नोरुबाहव केचित् कृत्तदन्ता गजोत्तमा ॥ २६

निपेतुर्विमुखा दीना शतशोऽथ सहस्रश ।
घोर विनाशन जात मासशोणितकर्दमम् ॥ २७

सन्त कतिपया योधास्तस्थु शमितदुर्जया ।
नाम विश्राण्य चान्योऽन्यमाहूयन्त परस्परम् ॥ २८

प्रेतराजवश सख्ये विवस्वान् नमुचि तथा[3] ।
मेदो वरुणमासाद्य सञ्चरस्तु समीरणम् ॥ २९

वृत्तो धनदमाहूय कालकेयो हुताशनम् ।
शीताशु पृथुरोमाण विप्रचित्ति शतक्रतुम् ॥ ३०

घोर विनाशन जात मासशोणितकर्दमम् ।
हिरण्याक्षो रणे रुद्र हिरण्यकशिपु केशवौ ॥ ३१

द्वावेतौ तु रणोद्रेकौ युधि युद्धविशारदौ ।
सुरसेनापति स्कन्दस्तारकं समयोधयत् ॥ ३२

जयन्तोऽपि महादेव व्यापृच्छन्त परस्परम् ।
विप्रचित्तिश्च बलवान् देवराज उभावपि ॥ ३३

व्याविध्य निशितैर्बाणैरन्योऽन्यवधकाक्षिणौ ।
तीक्ष्णवाराहकर्णेन विद्रुतान्तरकेण च[4] ॥ ३४

---

1 $B_2$—धनुभिर्ध्वनिभिर्ग्रस्ता ।

2 $B_2$—वनद्विपान् बलात्कटान् ।

3 $B_2$—नमुचिर्यथा ।

4 $B_2$—तीक्ष्णवाहाविकिर्णेन विद्रुतास्तारकेण च ।

जघानोरसि त शक्रो वज्रकल्पेन चाहवे ।
विवेश कवच भित्वा वल्मीकमिव पन्नग ॥ ३५

क्रोधमाधाय गम्भीरमुवाच युधि दानव ।
दुष्कृत च कृत कर्म यदि शक्य[1] सुरेश्वर ! ॥ ३६

इदानीं च मयात्सृष्ट सोढुमर्हसि दुर्मते ! ।
तमुवाच हसन्निन्द्रो दर्शयस्व निज बलम् ॥ ३७

जघान दैत्योऽप्यष्टाभिर्ज्वलद्भिरिव चाशुगै ।
तमायान्त स चिछेद भूयश्चापि दशैर्हयान्[2] ॥ ३८

तानेव चित्रकर्माऽसौ शतेन पुनरावृणोत् ।
शतमप्यलुनाच्छक्र सहस्र मुमुचे बली ॥ ३९
अस्त्रयुद्धविदावेतौ दुरायासकृतश्रमौ ।
सतत पृथुधारेणाप्यसख्येन सुपर्वणा ॥ ४०

अन्तर्धान गतावेतौ नीहारैरशुमानिव ।
अथ शक्र समीरेण प्रेषयामास मार्गणान् ॥ ४१

कर्णिकैरर्धचन्द्रैश्च भल्लैश्चानतपर्वभि ।
नालीकै क्षुरधारैश्च नाराचैश्च करच्युतै ॥ ४२

प्रेक्ष्यमाणैरनैकैश्च पर्जन्यैरिव भूधरान् ।
पश्यमानैरनैकैश्च हस्तचापमपाहरत् ॥ ४३

सोऽन्यमादाय वेगेन दानव सह्यकार्मुक[3] ।
तच्छिन्न च महेन्द्रेण भूयश्चान्यद्दधद्धनु ॥ ४४

मदान्धोऽसौ लुनात्याशु सव्यदक्षिणसस्थितान् ।
पुरत पृष्ठत पार्श्वे सशरै किरणादिभि ॥ ४५

छिन्नधन्वा तयोरन्त शूलमादाय दानव ।
देवराजस्तु त दृष्टवा लुनाद् बाणेन पञ्चधा ॥ ४६

समरे चतुरो वाहान् शीघ्रकारी सुरेश्वर ।
हताश्वो रथमुत्सृज्य गदापाणि रथो ययौ ॥ ४७

---

1 A₁, C—यदशक्य ।

2 A₁, C—भूयश्चाष्टदशैर्हयान् ।

3. B₂—सह कार्मुकै ।

तमायान्त समालोक्य लोकक्षयमिवान्तकम् ।
विव्याध निशितैर्बाणै शरै सन्नतपर्वभि ॥ ४८
विच्छिन्नैश्च प्रशान्तैश्च[1] हेमपुखैरजिह्मगै ।
एव शतमनेक च सहस्र लक्षमेव च ॥ ४९
यन्तार चतुरो वाहान् जघान च ननाद च ।
स्यन्दन देवराजस्य उज्जहार अपोथयत् ॥ ५०
अवप्लुत्य शरच्छन्न अक्षविक्षिप्तकूवर ।
अपयाते[2] शचीनाथे ह्यनाथा सर्वदेवता ॥ ५१
दिशो दश पलायन्ते माध्वसोद्भ्रान्तचेतस ।
एकस्थानगते युद्धे विसज्ञा मुनयोऽमरा ॥ ५२
उच्चनाद प्रकुर्वन्ति सदैत्यासुरदानवा ।
भयाद् दर्पहता शान्ता निरुत्साहा गतप्रभा ॥ ५३
अशरण्यास्तत शम्भु शरणार्थमुपागता ।
तानागतान् सरान् दृष्ट्वा प्रोवाच वृषभध्वज ॥ ५४
अलं त्रासेन भो देवास्तिष्ठध्वमकुतोभया ।
इत्युक्त्वा स समुत्थाय रुद्र क्रोधसमुच्छ्रित ॥ ५५
ननाद सुमहानाद स्वभावप्रलयान्तकृत् ।
तुमुल घोर सनाद जगत् क्षोभकर परम् ॥ ५६
दीर्यन्ते गिरयो भूमौ ससागर-सरीसृपा ।
श्रुत्वा त्रासकर नाद पातालतलवासिनाम्[3] ॥ ५७
उत्ससर्जुस्तदा गर्भं दैत्याना भवने स्त्रिय ।
आलिङ्गयन्ति चान्योऽन्य दैत्याना भवने भयात् ।
आनन्दो देवताना तु हरो युधि जयत्विति ॥ ५८

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे देवासुर-सग्रामे इन्द्रपराजये महेशागमन नाम ऊनत्रिंशोऽध्याय[4] ॥

---

1 $B_2$—प्रागाढैश्च ।
2 $A_1$ C—अपक्षाते ।
3 $B_2$—पातालतलवासिन ।
4. $B_2$ ··· देवासुरसग्रामे इन्द्रपराजये महेशागमन नाम ऊनविंशोऽध्याय. ।

# त्रिंशोऽध्यायः

## ब्रह्मोवाच

रौद्रनादेन वित्रस्ते जगत्यथ चराचरे ।
वासुदेवो महाप्राज्ञ आजगाम हरान्तिकम् ॥ १

बद्धगोधाङ्गुलित्राण कवचेन विराजित ।
कटकेनार्कवर्णेन केयूरेण विराजित ॥ २

शङ्खचक्रगदापाणि पीतवासाश्चतुर्भुज ।
शार्ङ्गधन्वा गदापाणिरुपसगम्य शङ्करम् ॥ ३

उवाच प्रणयाद् वाक्य देवदेवमुमाधवम् ।
ब्रह्मेन्द्र-मुनिभिर्जुष्ट क्रुद्ध रुद्र पिनाकिनम् ॥ ४

ज्वलन्त तेजसा युक्त कोटिभास्करवर्च्चसम् ।
दैत्येन्द्रमथनार्थाय कृतोद्यममनुत्तमम् ॥ ५

पाणौ कुड्मलबद्धास्ते बन्धुरीकृतकन्धरा ।
तुष्टुवुर्वाग्भिरिष्टाभि पृथक्तेजोऽप्यभेदवत् ॥ ६

## ब्रह्मोवाच

अभिन्नौ देवमुख्यौ तौ जग्मतुरद्भुतौजसौ[1] ।
मूर्त्तिमन्तौ विधातारौ दैत्येन्द्रवधकाङ्क्षिणौ ॥ ७

प्रस्थितौ रिपुनाशाय देवौ युद्धविशारदौ ।
दीनार्तोद्धरणार्थाय धृतसाधारणव्रतौ ॥ ८

अथ देवा सगन्धर्वा. पुरस्कृत्य पुरन्दरम् ।
अनुजग्मु रणे रुद्र भूय एवाभिमर्षिण[2] ॥ ९

---

1 $A_1$, C—बभूवतुरतोजसौ, $B_2$—बभूवुरद्भूतौजसौ ।
2. $B_3$,—एवाभिमर्षिता ।

सबभूव महाघोर ततो युद्ध सुदारुणम् ।
अस्त्रसघातमत्यर्थं समन्तादसुरा सुरान् ॥ १०

वज्राशनि समप्रख्येरुल्काज्वालापरिच्छदै ।
योधास्तु बह्वस्तत्र पतिता रणमूर्धनि ॥ ११

ध्वस्ततूणीरनाराचा खड्गास्त्ररुधिरोक्षिता ।
पिण्डीभूतशिर काया कूर्मा स्थल इवोधृता ॥ १२

शोकदग्धा स्मृता छिन्ना ऊर्ध्वाक्षिशिरस. क्षितौ ।
दलीभूताश्च मातङ्गा वज्रघ्ना गिरयो यथा ॥ १३

ततोऽमरास्त्रनिर्भिन्ना[1] भिन्नमस्तककन्धरा ।
विक्रोशन्तो गजा भीता सृजमाना स्ववाहिनीम् १४

मतशेषगजेन्द्रौघा विद्रवन्ति मदोज्झिता ।
विमुखा पितरो यान्ति नास्तिक्य पितरो यथा ॥ १५

रुद्रवाणाशु निर्दग्धा भस्मीभूता महासुरा ।
परिपेतू रणे योधा शितिकण्ठशराहता ॥ १६

महारथवरैवृन्दै शातकुम्भ-परिच्छदै ।
नानाविधैरलकारै सर्वे वीरा विराजिता ॥ १७

पुरस्कृत्य हिरण्याक्ष सर्वदैत्या समाययु ।
वृषध्वजस्तदा वीक्ष्य दैत्यसेनासमागमम् ॥ १८

घनानीकमिवाकाशे[2] सविद्युद्रविमण्डले ।
विस्पष्टभ्रू कुटी क्रुद्धः प्रादुर्भूतस्त्रिलोचन ॥ १९

पिनाक धनुरुद्यम्य लीलयेव महेश्वर ।
सददाह रिपु सख्ये बाणैर्विशिखसन्निभै ॥ २०

हिरण्यकशिपुर्दूरादाजुहाव त्रिलोचनम् ।
विवृत्तनयन प्राशुरूर्ध्वकेशो विभीषण ॥ २१

हरित् श्रमश्रुर्महादष्ट्र[3] कृष्णाङ्गो नीललोहित ।
कामरूपी दुराधर्षो मायावी दुरतिक्रम ॥ २२

---

1 A1, C—ततोऽमराशविभग्ना ।

2. B2—घनानीकसमाकाशे सविद्युद्रविमण्डल ।

3. A1, C—हरिश्चश्रीमहादष्ट्र ।

सर्वास्त्रविद्वान् स क्रूरो देवद्विजविरोधक ।
सदा क्रुद्धो मदोन्मत्त प्रमाथी बलवत्तर ॥ २३

रथेन रथमासाद्य द्वावेतावचलोपमौ ।
मारुतोद्यतविक्रान्तौ धनुरुद्यम्य सस्थितौ ॥ २४

सरव्धघनवृन्दाभौ प्रेर्यमाणौ शिलीमुखान् ।
अथ सेनापति स्कन्दो विप्रचित्ति रणाजिरे ॥ २५

महता रथवृन्देन द्वावेतौ समितिञ्जयौ ।
द्वन्द्वयुद्धविदावेतौ धनुर्वेदेषु पण्डितौ ॥ २६

विख्यातौ यशसा द्वौ तौ सेनाध्यक्षावरिन्दमौ ।
सग्रामदूरवोढारौ स्वाम्यर्थकृतनिश्चयौ ॥ २७

अन्योन्यमभिजघ्नन्तौ विजिगीषू धनुर्धरौ ।
महता बाणवर्षेण देवासुरसमागमे ॥ २८

क्रुन्तौ[1] तौ च रुषा सैन्ये अभिजातौ धनुर्धरौ ।
तुमुल चाभवद्भूयोऽप्यवन्ध्य घोरदर्शनम् ॥ २९

क्रव्यादचपला भूमिर्युद्धभूमौ तरङ्गिणी ।
मध्ये याति महाभीमा परलोक-प्रवाहिनी ॥ ३०

तुरङ्गगलमाला[2] सा पत्तिमानवती सती ।
ईदृश्या च महानद्या वितरन्ति सुरासुरा. ॥ ३१

निमज्जन्ति रथा नागा प्लवन्ते हरिपक्षिण[3] ।
द्रवन्ति रुधिरोत्पीडा[4] विक्रोशन्ति भयातुरा ॥ ३२

ब्रह्मोवाच

अथ दामोदर श्रीमान् पुण्डरीक्ष अव्यय ।
सोऽपि विस्फार्य निर्घोष महति स्यन्दने स्थित ॥ ३३

वैनतेयध्वजोपेतो मायाशेषनिसूदन ।
हिरण्याक्ष समक्षे वै प्रोवाच प्रहसन्निव ॥ ३४

---

1. $B_2$—कृतौ ।
2. $A_1$ C—तुरङ्गखरमाला ।
3. $B_2$—पक्षिणस्तदा ।
4. $B_2$—रुधिरोद्गीर्णा ।

स्थिरो भव दुराचार यज्ञविप्लवकारक ।
द्विजधर्मक्रतूद्विग्न[1] वेदमन्तविदूषक ॥ ३५

फल प्राप्स्यसि दुर्बुद्धे दुर्नयस्य कृतस्य च ।
चक्रेण शितधारेण सहरामि शिरस्तव ॥ ३६

पिवन्तु रुधिर चाद्य गृध्रगोमायवस्तव ।
पुत्रै सह रणे मूढ प्रयासि यममन्दिरम् ॥ ३७

कृष्णावाक्य निशम्येद दैत्य. कोपानलप्रभ ।
उवाच कृष्ण जानामि यत्त्व वक्ष्यसि पण्डित' ॥ ३८

न वाक्येन विभेम्यद्य मुच्यता सायकान् ।
ससुरोरगयक्षैश्च सिद्धविद्याधरै सह[2] ॥ ३९

त्वा च जेतु समर्थोऽह स्थिरो भव महाहवे ।
मद्बाणगोचर प्राप्तो नाद्य जीवन् प्रयास्यसि ॥ ४०

एवमुक्त्वा ह्यदीनात्मा जघान नवति शरै ।
स चिच्छेदान्तरे तास्तु भूयस्त्रिशदवाकिरत् ॥ ४१

एकेन[3] चेषुणा कृष्णो लुनात्याशु रिपो शरान् ।
सहस्रमसृजत् क्षिप्र लघुहस्तो महासुर ॥ ४२

ते शराश्चित्रपुङ्खाश्चाप्यसख्येया अजिह्मगा ।
सहता सरला दीना बाणा सन्नतपर्वण ॥ ४३

छादयन्तोऽम्बर तीक्ष्णा कङ्कबर्हिणवासस ।
नीहारमिव सर्वत्र ख धरा च प्रपूरिरे ॥ ४४

छिन्नभिन्नविकीर्णाश्च समन्तासीद्[4] व्यतिक्रम ।
निपुण दर्शयामास विव्याध दशमार्गणै ॥ ४५

सृष्टास्ते दानवेन्द्रेण भ्राजमाना इवेषव ।
चुकोप द्विगुण वीर सिहनाद ननाद च ॥ ४६

---

1. $A_1$, $B_2$ C—द्विजधर्मत्रयोद्विग्न ।
2. $B_1$, C—सुरसुरोरगैर्यक्षै सिद्धविद्याधरोरगै, ।
3. $A_1$—एतेन ।
4. $B_2$—सर्वत्रासीद् ।

मयेन विहिता माया सोऽसृजद्दानवोत्तम ।
मुक्तमात्रे खमाविश्य विद्युच्चपलविद्रमा[1] ॥ ४७

पुरत पृष्ठत पार्श्वे अधोर्ध्वविकृतानना ।
दुरातिगा सुदुर्लक्ष्यास्तमोघोराच्च विग्रहा ॥ ४८

विस्फार विकृत रौति भैरव लोमहर्षणम् ।
महान्ध विकृत दृष्ट्वा त्रस्ता देवा विदुद्रुवु । ४९

मुहूर्त्त ध्यानमाविश्य विष्णु सत्यपराक्रम ।
उज्जहाराऽप्रमेयात्मा चक्र सर्वास्त्रनायकम् ॥ ५०

अखण्डमण्डल तीक्ष्ण सहस्राशु समप्रभम् ।
प्रलयानलविद्योत तमस्तीव्रानुद परम् ॥ ५१

नाम्ना सुदर्शन चाम्ब[1] दैत्यान्तकरण रणे ।
भुजस्य शिखरे भाति महादावाग्निसन्निभम् ॥ ५२

आविद्धमिव तेजासि कालाग्निप्रलयार्कवत् ।
मुमोच भगवान् कृष्णश्चक्र शत्रुनिसूदनम् ॥ ५३

मुक्तमात्रमभूद्रुद्र द्रुष्प्रेक्ष्य चातिभासुरम्[2] ।
हत्वा च निखिलान् दैत्यान् भुजेनोत्तमत्तेजसा ॥ ५४

तमायान्त महाभीम चक्रमप्रतिम रणे ।
विव्याध चास्त्रवर्षेण चक्रस्योपरि दानव ॥ ५५

पतङ्गा इव दीप्ताग्नौ निपतन्तीषवो मृधे ।
बाणस्थान् स समासाद्य जज्वाल भृशमस्त्रराट् । ५६

चक्र तु सहसा प्राप्य हिरण्याक्षशिरोऽचिरात् ।
पपात सहसा कृत्स्ना चालयन् स वसुन्धराम् ॥ ५७

कृत्वा कर्म महत्तच्च भूय कृष्णकर ययौ ।
मृत-शेषाश्च ते दैत्या विद्रवन्ति दिशो दश ॥ ५८

त्यक्त्वात्मान यश शौर्य माहात्म्य स्वकुलोचितम् ।
जीवाशया भयोद्विग्ना विशन्ति गिरिकन्दरे ॥ ५९

रुद्रतेजहतो वीरो हिरण्यकशिपुस्तदा ।
प्रयातश्च रणाद्भग्न सक्षीण निजमत्सर ॥ ६०

---

1 B₂ — सनिभा ।

2. B₂—गतिभास्वरम् ।

न सहिष्णु रणे शक्र सोऽपि भग्नो महासुरः।
हित्वा रथाश्वयन्तार तत सोऽन्तर्दधे बली॥ ६१

निजमाया समास्थाय प्रययौ दीनमानस।
कृत्तिवासस्तु भगवान् जघान दश दानवान्॥ ६२

चतुरङ्गेन पूर्णेन दशकोटिबलै सह।
क्षणेन भस्मसान्नीत कामदेव यथा पुरा॥ ६३

दनु देवान्तक शाम्ब पृथुक्षेत्र सुलोचनम्।
हिरण्यकशिपोर्ज्येष्ठ विशाल विकट द्रुमम॥ ६४

उन्माद दशम चैव महादेवो जघान वै।
अपरान् दानवान् सर्वान् स्कन्दद्या प्रजह्रु रणे॥ ६५

नि सपत्नमभूत्तत्र देवा मुदितमानसा।
मुनय सिद्धगन्धर्वा साप्सरोरगकिन्नरा[1]॥ ६६

पुष्पवृष्टि विमुञ्चन्ति सुरदुन्दुभिनादिता।
जयस्व देव[2] जयस्व मधुसूदन॥ ६७

एव सर्वे प्रपूजन्ति त्रिलोचनजनार्दनौ।
स्वे स्वे स्थान यथापूर्व देवा निहतकण्टका।
गतोऽमरावती शक्र सर्वदेवैर्नमस्कृत॥ ६८

इत्येकाम्रपुराणे षट साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे देवासुर-सग्रामे हिरण्याक्षबधो नाम त्रिशोऽध्याय[3]॥

1. $B_2$—किंकरा।
2 $B_2$—जयदेव च।
3. $B_2$—·· देवासुरसग्रामे हिरण्याक्षबधो नाम त्रिंशोऽध्याय

# एकत्रिंशोऽध्यायः

## सनत्कुमार उवाच

एव ब्रह्मवच श्रुत्वा देवी प्रीतिमनाऽभवत्[1]।
नमस्कृत्वा शिव मूर्ध्ना भूय प्रष्टु प्रचक्रमे ॥ १

पार्वत्युवाच उवाच

पितामह महाप्राज्ञ सर्वतत्त्वार्थकोविद ।
जित्वा हत्वा रणे दैत्यान् दानवानसुरान् शठान् ॥ २
किं चकार ततो देवस्तस्मिन क्षेत्रे महाक्रतौ ।
विघ्नानन्तर-तत्कार्यं[2] तन्ममाख्यानुमर्हसि ॥ ३

ब्रह्मोवाच

शृणुष्वऽवहिता देवि! माहात्म्य कृत्तिवासस.।
एकाम्रके महाक्षेत्रे पुरावृत्त ब्रवीमि ते ॥ ४
वृत्ते देवासुरे युद्धे आश्चर्ये लोमहर्षणे ।
भार्गव परमाश्चर्यमागम्य पितर स्वकम् ॥ ५
नमस्कृत्य श्वसन् वाक्य वाष्परुद्ध सवेपथु ।
उवाच वचन चेदमसुराणा हितोदयम् ॥ ६

शुक्र उवाच

तातात्यन्तविचित्रोऽय देवैर्दैत्या विनिर्जिता[3]।
अल्पवीर्यं शचीनाथो लोकपालास्तथैव च ॥ ७
क्रूरकर्मा हृषीकेश. प्रसह्येन शशाक सः।
अभिज्ञ शकर सख्ये स्कन्दो दुर्बल दुर्मति ॥ ८

---

1. $B_2$ ह्यभूत् ।
2. $B_2$ विघ्नान्तरत' कार्यं ।
3. $B_2$ निपातिता. ।

मध्यस्थ सतत ब्रह्मा इतरेषु च का कथा ।
भूयो भूयो मया दृष्टो दानवैर्देवता जिता ॥ ९

साम्प्रत देवता शक्ता जेतु कार्त्स्न्येन मामकान् ।
एतत्कारणमन्यच्च भवान्मे वक्तुमर्हति ॥ १०

## ब्रह्मोवाच

इति पुत्रवच श्रुत्वा वाक्यमेवमविक्लिदम्[1] ।
शान्तपूर्वमिद प्राह पुत्र सानुनय वच[2] ॥ ११

## भृगुरुवाच

यथा वक्ष्यसि पुत्र त्व न मृषा बलिनोऽसुरा· ।
दानशीलाः सदा शूरा भोगिनो मानिन सदा ॥ १२

देवा सत्त्वमया प्रोक्ता अक्रुद्धाश्चाप्यलोलुपा ।
अकार्पण्या अहिस्राश्च यज्ञ स्वाध्यायतत्परा ॥ १३

धर्मज्ञा कर्मकुशला धर्मगोब्राह्मणप्रिया· ।
अनसूयपरा दवा सत्वार्थ-हिततत्परा ॥ १४

ब्रह्मण्या शिवभक्ताश्च शौचवन्तो जितेन्द्रिय. ।
जितात्मनो जितक्रोधा सत्यवाक्कायमानसा ॥ १५

भूरिदा यज्ञशोलाश्च शरणागतवत्सला ।
पूजयन्ति विरूपाक्ष भक्तिमन्त सदा सुरा ॥ १६

तेन ते विजयिष्यन्ति मा कृथास्तात ! शोचनाम् ।
श्रुतिशास्त्रपुराणानि सागानि निखिलानि च ॥ १७

श्रुतानि कि त्वया वत्स न पाद श्लोकमेककम् ।
धर्मो जयति नाधर्म सत्य जयति नानृतम् ॥ १८

क्षमा जयति न क्रोधो विष्णुर्जयति नासुरा· ।
धममूलमिद विश्व धर्ममूल यश श्रियः ॥ १९

धर्मज्ञ सतत विष्णु शिवदेह-समुद्भव ।
शिवशक्तिमय विश्व ताभ्या योऽप्यवमन्यते ॥ २०

---

1 B₂. वाक्यमेव सविक्लव ।

2. A₁. पुत्रसानुनय वच , C—पुत्रस्यानुनय वच ।

न च प्रेत्य न चाप्यत्र स सुखी समजायत।
दुःखभोगश्च सततं व्याधयोऽल्पायुरेव च।। २१
राज्यच्युतिर्यशोनाशोऽप्यनाराधितधूर्जटे ।
नरके नियतं वासो यातनाभृशकर्कशे[1] ।। २२
पतन्ति हि तमिस्रे च अनाराधितशङ्करा ।
सदा देवद्रुहो दैत्यास्तामसा पापनिश्चया ।। २३
च्यवन्ते पदविभ्रष्टा कथं पुत्र प्रतप्यसे[2]।
असत्यसन्धा कृपणा परस्वेषु च तत्परा ।। २४
अधर्मशीला पुत्रास्ते गताश्च निधनं शुभम्।
पतन्ति नरके पुत्र ये द्विषन्ति महेश्वरम्।। २५
स्वकर्मप्रभवैस्ते च प्राप्ता दोषौ पराभवम्।
भज देवं विरूपाक्षं जहि मोहं निरर्थकम्।
प्राप्स्यसे परमानन्दं शाश्वतं शिवसम्मतम्।। २६

ब्रह्मोवाच

पितुरेवं वचः श्रुत्वा धर्मज्ञस्य ततोऽम्बिके! ।
कृताञ्जलिपुटो भूत्वा कविः प्राह शनैरिदम्।। २७

शुक्र उवाच

भगवन्! सप्तभिः पूर्वं पूजितोऽसि कृपानिधे।
भवान् कालत्रयज्ञश्च भवान् धर्मज्ञ एव च ।। २८
अवशिष्टाश्च ये सन्ति दानवा मम पुत्रका ।
कथयस्व शुभं यत्तु तेषां भूयाद् यथाऽधुना ।। २६
न भवेन्नरकं येन राज्यभ्रंशो भवेन्नतु।
एतदिच्छाम्यहं श्रोतुं यद्यनुग्रहतास्ति मे ।। ३०

भृगुरुवाच

शृणु पुत्र प्रवक्ष्यामि दैत्यानां हितमुत्तमम्।
यत्कृत्वा लभ्यते दैत्यैर्महती सम्पदुत्तमा ।। ३१

---

1. B2 यातनाभूतकर्कशे।
2. B2. प्रतप्यते।

एकाम्रकवने रम्ये सिद्धगन्धर्वसेविते।
लिगोनकोटिसकीर्णे भविष्यत्यासुर हितम्॥ ३२
निर्ममो निरहङ्कार-स्त्यक्त्वा[1] सर्वपरिग्रह.।
अहिस्र सर्वभूतेषु दत्त्वाचाभयदक्षिणाम्॥ ३३
सुखदु खसमो भूत्वा यथात्मनि तथा परे।
सम सर्वेषु भूतेषु रागद्वेष-विवर्जित॥ ३४
योगयुक्त सदा दान्त समलोष्ट्राश्मकाञ्चन।
मन सयम्य सच्चित्तौ[2] युञ्जन्नेव सदात्मनि॥ ३५
नि प्रपञ्च निराभास निर्गु ण परमेश्वरम्।
शब्द स्पर्शरसातीत प्राणरूपविवर्जितम्॥ ३६
निष्कल निर्मल शान्त परातीत पराभवम्[3]।
निश्चलैकमना भूत्वा बुद्धया धृतिगृहीतया॥ ३७
विहाय निखिलान् दु खान् गर्भवासादिसम्भवान्।
प्राप्स्यन्ति विपुलामृद्धि या सुरैरपि दुर्लभा॥ ३८

शुक्र उवाच

एकाम्रकवन कुत्र कुत्रास्ते परमेश्वर।
कथ वा जायते ऋद्धिर्दैत्याना प्रीतिवर्धनी॥ ३९
इदानी ब्रूहि मे तात! विशेष परम हितम्।
हृदये परमाह्लादो जायते वचनात्तव॥ ४०
कृतार्थोऽह भविष्यामि प्रसङ्गात्तात निश्चितम्।
ब्रूहि मे पावन क्षेत्र दानवाना हित यथा॥ ४१

भृगुरुवाच

सम्यक् पृष्ठ त्वया वत्स! श्रृणुष्व गदतो मम।
कारण सप्रवक्ष्यामि[4] दैत्याना परम शिवम्॥ ४२

---

1 $B_2$ शक्त्या।
2 $B_2$, मच्चित्तो।
3 $B_2$ पुराभवम्।
4. $A_1$ C. सविधाष्यामि।

दक्षिणस्याम्बुधेस्तीरे उत्कलासनमण्डले ।
महानदीति विख्याता दुहितृशतशोभिता ॥ ४३

तस्याश्च तनया सौम्या नाम्ना गन्धवती नदी ।
स्वादुतोया महापुण्या पाविनी लोकभाविनी ॥ ४४

तस्यास्तीराददूरेण सागराम्भ समीपके ।
एकाम्रकवन नाम क्षेत्र परमपावनम् ॥ ४५

स्वर्णकूटगिरे श्रृङ्गे विविक्ते सुमनोहरे ।
आक्रोशमात्र वितत[1] भौमस्वर्ग इहोच्यते ॥ ४६

तत्रास्ते भगवान् भर्गो लिङ्गमूत्तिरनामय ।
वरेण्यो[2] वरद शम्भु सर्वेषा प्रपितामह ॥ ४७

वेदान्ते गीयते यच्च परब्रह्म सनातनम् ।
तदेव लिङ्गमूर्त्या च तिष्ठत्येकाम्रके वने ॥ ४८

य विदन्ति न वै देवा योगिनो गतकल्मषा ।
तमेव[3] साक्षाद्दृष्ट्वा च मुक्ति प्राप्स्यन्ति-निश्चितम्॥ ४९

यस्य लिङ्गवरस्याङ्ग-नैवेद्य गृह्यते सुरै ।
सर्वपापविनाशाय विमुक्तयै भवसागरात् ॥ ५०

नैवेद्य लिङ्गराजस्य महापापविनाशनम् ।
यद् भुक्त्वा ह्यमरा सर्वे स्व स्व पदमवाप्नुयु ॥ ५१

विकारस्तत्र नास्त्येव भक्षणे च द्विजन्मनाम् ।
मुच्यते नात्र सन्देहो यत् स्पृष्ट्वा ब्रह्महा शुचि ॥ ५२

येऽर्थवाद प्रकुर्वन्ति तत्र वै मानवाधमा ।
पच्यन्ते नरके ते च यावदाचन्द्रतारकम् ॥ ५३

अतएव परब्रह्म तल्लिङ्ग नात्र सशय ।
तस्यैवाराधन कृत्वाऽसुराणा भविता शुभम् ॥ ५४

---

1 C, विदित ।

2 $B_2$. अरण्ये ।

3 $B_2$—तदेतत् ।

तस्यैव पार्श्वे प्रवरो महालय[1]-परिणत ।
कल्पवृक्षो मुनिश्रेष्ठ आस्ते परमसिद्धिद[2] ॥ ५५

तमासाद्य नरो भक्त्या कृत्वा चैव प्रदक्षिणम् ।
नमस्कार तत कुर्यादिद मन्त्रमुदीरयेत् ॥ ५६

"नमस्ते कृत्तिवासाय त्वव्यक्ताय द्रुमात्मने ।
महद्रसोपविष्टाय विश्वभूतात्मने नम ॥ ५७

प्रशान्ताय विभक्ताय ज्योतिर्भूताय योगिने ।
अमृताय महेशाय वेधसे कृत्तिवाससे" ॥ ५८

अनेन मन्त्रयोगेन कल्पपादपमीश्वरम् ।
य प्रसादयते भक्त्या तस्य शम्भु प्रसीदति ॥ ५९

स्नात्वा बिन्दूद्भवे तीर्थे सम्यक्कल्पतरु प्रति ।
आचम्य च शुचिर्भूत्वा अभिषिञ्चे द्रुम जलैः ॥ ६०

एकेन गड्डुकेनैव यमसयमतत्पर ।
समाप्ते नियमे चैव कृतकृत्यो भवेन्नर ॥ ६१

उत्तमा सिद्धिमाप्नोति या सुरैरपि दुर्ल्लभा ।
स्वर्णकूटाद्रिसचारी प्रसन्नो भवतीश्वर ॥ ६२

ईश्वर सर्वभूतेषु कर्त्ता हर्त्ता जिता तथा ।
तमेव शरण गत्वा प्राप्नुयादिप्सित फलम् ॥ ६३

शृणु वत्स! विशेष मे स्वर्णकूटाद्रिचारणम् ।
लिङ्गमूर्त्तिधर रुद्र दृष्ट्वाप्नोति पर पदम् ॥ ६४

एकाम्रनाथो भगवान्[3]! जगत्कारणकारणम् ।
भक्तानामनुकम्पार्थं लिङ्गमूर्त्तिधर स्वयम् ॥ ६५

काशी सेतु महेन्द्र च पुण्यक्षेत्राणि पुत्रक ।
सर्वाणि संपरित्यज्य एकाम्रे भाति शङ्कर ॥ ६६

---

1 $A_1$, $B_2$—महाप्रलय ।

2 $B_2$—आपरमसिद्धिद ।

3. $B_2$—यत्र चैकाम्रके काथो ।

शङ्कर परमो बिन्दु[1]र्धर्ममार्गेषु देहिनाम् ।
श्रीशङ्कराच्चर्नादन्यो धर्मो नास्ति विमुक्तये ।। ६७

धर्म एव परो बन्धुर्देहेऽत्र क्षणभङ्गुरे ।
यावद्देहे स्थित जीव तावच्छ्रेयोऽर्च्चन विभो ।। ६८

न शङ्कराच्चर्नात्पुण्यमधिक पृथिवीतले ।
नास्ति नाह तु जानामि तदेव परम हितम् ।। ६९

बहुनात्र विमुक्तेन भाषितेन पुन पुन ।
नास्त्यसाध्य पृथिव्या च प्रसन्ने कृत्तिवाससि ।। ७०

स्वर्णकूट समासाद्य स्नात्वा बिन्दूद्भवे नर ।
दृष्ट्वा कृष्ण महादेव न भूयो योनिजो भवेत् ।। ७१
हरिशङ्करयोरेव दुर्लभ दर्शन सुत ।
एकत्रैव जगन्नाथ पृथक् भूत्वा व्यवस्थित ।। ७२
शङ्कर शरण गत्वा जेष्यन्ति किल ते सुता ।
एतत्ते कथित पुत्र यन्मा त्व परिपृच्छसि ।। ७३

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया द्वितीयेऽशे देवासुरसग्रामे भृगुवाक्य नामैकत्रिशोऽध्याय[2] ।।

---

1 B₂—बन्धु ।

2. B₂— °देवासुरसग्रामे भृगुवाक्य नाम एकविंशोऽध्याय ।

# द्वात्रिंशोऽध्यायः

## ब्रह्मोवाच

पितृवाक्यमिद[1] श्रुत्वा नमस्कृत्वा जगाम स ।
हिरण्यकशिपुर्यस्ते[2] भ्रातृशोकेन पीडित ॥ १

नि.श्वसन्त निष्प्रभ त पराभूत परेण च ।
तथाभूत तमीक्ष्याशु शुक्र प्रोवाच मन्त्रवित् ॥ २

उत्तिष्ठोत्तिष्ठ राजेन्द्र ! जहि चिन्ता श्रृणुस्व मे ।
कारण सप्रवक्ष्यामि विनाशायासुरद्विषाम् ॥ ३

इति तस्य वच श्रुत्वा पर सारामृतोपमम् ।
अभिवाद्यासन दत्त्वाऽब्रवीद्दैत्येश्वरस्त्विदम् ॥ ४

## हिरण्यकशिपुरुवाच

ब्रह्मन् मुह्याम्यह चात्र भ्रमतीव च मे मन ।
अद्यापि खलु मा चिन्ता तीव्रा च परिधावति ॥ ५

भ्रातुर्ज्येष्ठस्य मे मृत्यु स्वजनस्य जनस्य च ।
राज्यभ्रशो यशो नाश कुलस्यास्य क्षयो महान् ॥ ६

इह सग्रामघोरेण भ्रातृशोकेन पीडित ।
सम्यग् भ्रष्ट[3] बन्धुहीन त्रातुमर्हसि वै गुरो ॥ ७

इति ब्रुवाण दीन त कृपया परयाऽम्बिके ! ।
उवाच दानव शुक्रो वाक्य वाक्यविदाम्बर ॥ ८

## शुक्र उवाच

पुरा भग्नाश्च ये देवा साम्प्रत ते महोदयाः ।
तदिद कारण तात निबोध मम सुव्रत ! ॥ ९

---

1 $B_2$ पितुर्वाक्यमिद ।
2. $B_2$ हिरण्यकशिपुर्यत्र ।
3. $B_2$—सपद्भ्रष्ट ।

मम पित्रा यदाख्यात भवता हितमुत्तम[1] ।
तदह सप्रवक्ष्यामि शृणुष्वैकाग्रमानस ॥ १०

दक्षिणाम्बुधितीरे च विविक्ते सुमनोहरे ।
एकाम्रकवन नाम क्षेत्र परमसिद्धिदम् । ११

महासत्रेण ते देवास्तस्मिन् क्षेत्रे नृपोत्तम ।
प्रसादेन विचित्रेण उद्यानै सुमनोहरै ॥ १२

वापीकूपतडागाद्यै· स्नपनार्च्चनकै शुभै ।
आराधयन्ति देवेश कृत्तिवास जगद्गुरुम् ॥ १३

प्राप्तास्तेनातुलामृद्धि विजय चार्थसम्पद ।
सग्रामे विजयप्राप्ति कृत्तिवासप्रसादत ॥ १४

दुर्बला[2]श्चामरा सर्वे तेन ते विजयन्ति ते ।
इति हेतोर्जितो देवैर्भवान् भग्नोऽसि चाहवे ॥ १५

यस्य एकाम्रके क्षेत्रे प्रासादोऽस्ति शिवालये ।
अणुमात्रोऽपि तस्याज्ञ भग्नशब्दो न जायते ॥ १६

पुन किमुच्छ्रित दिव्य विशाल शिवमन्दिरम् ।
तेन ते विजयं प्राप्ता सुकृतेनादिते सुता ॥ १७

स्वर्णकूटगिरे पृष्ठे य करोति शिवालयम् ।
तन्नास्ति यन्नसिध्येत इह चापि परत्र च ॥ १८

सन्ततेश्च न विच्छेद कदाचिच्च भविष्यति ।
सर्वकामसमृद्धात्मा विन्दते सुखमक्षयम्[3] ॥ १९

ब्राह्मणस्तपसा युक्त क्षत्रियो विजयी तथा ।
महाधनी भवेद् वैश्य शूद्र सद्गतिमाप्नुयात् ॥ २०

तस्मात्तमपि राजेन्द्र कुरु त्वायतन[4] महत् ।
सर्वकामसमृद्ध्यर्थं भज देव त्रिलोचनम् ॥ २१

एकोनकोटिमध्येषु त्र्यम्बक त्रिपुरान्तकम् ।
आराधय विरूपाक्ष देवदेव महेश्वरम् ॥ २२

---

1 $B_2$—मम वक्त्रात् समाख्याति भवता हितमुत्तमम् ।

2 $B_2$—दर्द्धराः ।

3. $B_2$—सुखमव्ययम् ।

4. $B_2$—यत्न सदा ।

प्रासादरचनैर्भक्त्या शङ्कर परितुष्यति ।
तुष्टो देवो ददात्याशु यद् यद् इच्छति मानव ॥ २३

तस्य लिङ्गवरस्याङ्ग[1] ! नैवेद्य पापनाशनम् ।
ब्रह्मादीना च दुर्लभ्य मादृशाना पुनस्तु किम् ॥ २४

एकाम्रकवने वत्स[2] ! पक्त्री साक्षाच्च पार्वती ।
भोक्ता चैव स्वय साक्षात् शिव एव सनातन ॥ २५

पूजयित्वा तु तल्लिङ्ग नैवेद्य प्राश्य तस्य वै ।
प्रयाति पुरुषो देव नीलकन्दरमव्यय ॥ २६

सहान्नपूर्णया साक्षाद् यत्र विश्वेश्वरोऽव्यय ।
आस्ते विश्वोपकाराय लिङ्गमूर्त्तधरः स्वयम् ॥ २७

यदृष्ट्वा चैव स्पृष्टा च नरो मोक्षपथ[3] व्रजेत् ।
तदेव शरण प्राप्य न च प्राप्यवसीदति ॥ २८

एकाम्रकवने राजन् ! मूर्त्तिभिश्चाष्टाभिर्युतम् ।
साक्षात् गौरीपति विद्धि परब्रह्म सनातनम् ॥ २९

अतएव महाराज व्रज एकाम्रक वनम् ।
प्रासादेन च दिव्येन आराधय महेश्वरम् ॥ ३०

गन्धै पुष्पैर्महापुण्यै विल्वार्क-कमलादिभि ।
नैवेद्यैर्विविधैश्चैव वासोभि समलङ्कृतै ॥ ३१

दधिदुग्धाभिषेकैश्च घृतैश्च मधुभिस्तथा ।
स्नापयस्व च तल्लिङ्ग वरद भुवनेश्वरम् ॥ ३२

स्तुतिभिश्च पुराणोक्तैरथर्वशिरसा तथा ।
शतरुद्रेण वा राजन् ! तोषयस्व पिनाकिनम् ॥ ३३

नोचेत् सहस्रनाम्ना तु तुण्डिप्रोक्तेन दानव ! ।
सन्तोषय महादेव स ते श्रेयोऽभिधास्यति ॥ ३४

---

1 $B_2$—लिङ्गवरस्यास्य ।

2 $B_2$—तात ।

3 $B_2$—मोक्षमथो ।

## हिरण्यकशिपुरुवाच

नमस्ते गुरवे तुभ्यमशेषार्थप्रवर्त्तने[1] ।
सम्यगुक्त त्वया ब्रह्मन्नस्माक परम हितम् ॥ ३५

शम्भोर्नाम सहस्र तु कथ ज्ञात हि तुण्डिना ।
तुण्डिप्रोक्तं कथ नाम तस्य जात वदाशु माम् ॥ ३६

येन नामसहस्रेण तुष्यते भगवान् शिव ।
एतदिच्छाम्यह श्रोतु प्रसादात्तव वै गुरो ! ॥ ३७

## शुक्र उवाच

शम्भोर्नाम सहस्र तु दुर्लभ ब्रह्मणो नृप ! ।
अन्येषा चैव देवाना मादृशाना च किं पुनः ॥ ३८

ज्ञायते ब्रह्मणैवेद नान्येन नृपसत्तम ! ।
शिवप्रसादान्नाम्ना हि सहस्र शिवनिर्मितम् ॥ ३९

पूजया परया सोऽपि प्रोवाच पाकशासनम् ।
मृत्यवे सोऽप्युवाचेद शिवनाम-सहस्रकम् ॥ ४०

सोऽप्येकादशरुद्रेभ्यो नाम्ना प्रोचेत् सहस्रकम् ।
यज्जपान्नृपशार्दूल ! ते नृपा बलदर्पिता ॥ ४१

रुद्राणा पठनात्तत्र ब्रह्मलोके मनोरमे ।
श्रुत्वा ज्ञात्वा गृहीत्वा तत्तुण्डिना परम हितम् ॥ ४२

पृथिव्या नाम सहस्र[2] तुण्डिना ह्यवतारितम् ।
अतस्तुण्डिकृत नाम सहस्र ज्ञायते भुवि ॥ ४३

पुण्य नाम सहस्र हि शम्भो प्रीतिकर सदा ।
तेन स्तुत्वा महादेव प्राप्नुयादीप्सित नृप ! ॥ ४४

यथा गौरी प्रिया शम्भोर्यथा पुत्रेषु षण्मुख ।
क्षेत्र यथाऽविमुक्त हि तथा नाम सहस्रकम् ॥ ४५

न तथा च प्रिया गङ्गा न तथा च प्रियो हरिः ।
न तथा च प्रियो योगो यथा नाम सहस्रकम् ॥ ४६

---

1 $B_2$—तुभ्यमशेषार्थप्रवर्त्तक ।

2, $B_3$—माहात्म्य ।

अतीव प्रीतिद नाम सहस्र शङ्करस्य च ।
तेनैव तुष्यते शम्भूर्नान्यैर्व्रतशतैरपि ।। ४७

अतएव महाराज ! तोषयस्व पिनाकिनम् ।
सहस्रनाम्ना वरद नान्यै स्तवसहस्रकै ।। ४८

व्रजैकाम्रवन राजन् ! पूजयस्व महेश्वरम् ।
सहस्रैर्नामभि स्तुत्वा लभ्यते ते मनोरथम् ।। ४९

तस्मिन् क्षेत्रे महाराज ! प्रासादेन विशेषत ।
तृप्यते परमेशानो लब्ध्वा गौरी यथा पुरा ।। ५०

एतत्कर्म महाराज ! गत्वा शीघ्र समाचर ।
प्रसादाद्देवदेवस्य सर्वदा विजयी भव ।। ५१

## ब्रह्मोवाच

गुरोर्वाक्यमिद श्रुत्वा स ययौ[1] दनुजेश्वर ।
आससाद महाक्षेत्र स्वर्णकूट मनोरमम् ।। ५२

आम्रच्छाया समाविद्धे कल्पवृक्ष समाश्रिते ।
एकोनकोटिसभूते दिव्यलिङ्ग ददर्श स ।। ५३

ववन्दे शिवलिङ्ग च यथोद्दिष्ट पुरोधसा ।
तत्रैवायतन दिव्य दानव कर्त्तुमुद्यत ।। ५४

एतस्मिन्नन्तरे देवि ! दुलक्ष्या ह्यशरीरिणी ।
दानव प्रति वै वाणी गगनादवतारिता ।। ५५

गच्छ गच्छ सुरेशान ! इतस्त्वं वचनान्मम ।
अन्यत्रायतन कृत्वा पूजयस्वाविशङ्कित ।। ५६

अनर्हस्त्वमयोग्योऽसि इम कर्त्तु महेशितु ।
देवदृडसि प्रासाद चन्द्रमा कारयिष्यति ।। ५७

सिद्धेश्वरसमीपेऽपि यल्लिङ्ग वर्त्ततेऽसुर ! ।
पश्चिमस्या दिशि शुभ तस्यैवाराधन कुरु ।। ५८

इमामन्तर्हिता वाणी श्रुत्वा च दनुजेश्वर ।
जगाम तत्र दीनात्मा नि श्वस्योष्ण पुन पुन ।। ५९

---

1 B$_2$—प्रययौ ।

ददर्श शिवलिङ्ग त नमश्चक्रे महीतले।
साष्टाङ्गेन जगद्धात्रि! पुनः पुनरिद पठन् ॥ ६०

त्राहि मा पार्वतीनाथ! नमस्ते शशिशेखर! ।
दीनस्य करुणापाङ्गै पूरयस्व मनोरथम् ॥ ६१

तत परमहृष्ट स शिल्पिशास्त्रप्रमाणत ।
चकारायतन दिव्य शतक्रतु जिगीषया ॥ ६२

नानावृक्षसमाकीर्ण विहङ्गध्वनिसकुलम् ।
दिव्यतोरणसयुक्तमग्रस्थित जलाशयम् ॥ ६३

एव कृत्वा दितिसुत प्रासाद पार्वतीपते ।
चिन्तयामास मनसा इति दानवसत्तम. ॥ ६४

हन्मि विष्णु प्रसह्येन वसून् सर्वान् मरुद्गणान् ।
लोकपालाननेकाश्च यक्षविद्याधरोरगान् ॥ ६५

वश नयामि गौरीश सूदयामि शतक्रतुम् ।
विचिन्त्य स्वगणैरेव स तल्लिङ्गमपूजयत् ॥ ६६

अथ देवो विरूपाक्ष कृत्तिवासस्त्रिलोचन ।
विज्ञाय मानस तस्य दानवस्य दुरात्मन ॥ ६७

दुर्विज्ञेयस्य दुष्टस्य देवधर्मद्विषस्तथा ।
चुकोप सहसा भर्गो ज्वलदग्निसमप्रभ ॥ ६८

अति क्रुद्धे हरे सद्य पपात भुवि दानव. ।
विसज्ञो विह्वलो मूढो वज्रपात इवाचल ॥ ६९

वमन्त रुधिर वक्त्राद् विशक नष्टचेतनम् ।
मृतावस्थ च त दृष्ट्वा हरस्त्वन्तर्दधे तदा ॥ ७०

अन्तर्धान गते देवे भूय सजीवितोऽसुर ।
देवदेव महेशान नापश्यति यथा पुरा[1] ॥ ७१

ततो विह्वलितो दीनो हिरण्यकशिपु शिवे! ।
विललाप सुदु खेन पुर शशिभृतस्तदा ॥ ७२

## हिरण्यकशिपुरुवाच

अनाथ नाथ मा त्राहि नृशस देवविद्विषम् ।
अनार्यमबल मूर्ख कार्याकार्य-वहिष्कृतम् ॥ ७३

---

1 B₂—सुर ।

निहित कृपण दीन धर्ममार्गविराधनम् ।
त्वत् पादशरण नाथ त्राहि मा वृषभध्वज ! ॥ ७४

अरातिनिहित वीर्यं हतमान हतप्रभम् ।
ज्ञातिमित्रै परित्यक्त त्राहि मा त्रिपुरान्तक ! ॥ ७५

दुःशील मलिन क्रुद्ध सर्वधर्म-वहिष्कृतम् ।
असत्यसन्ध दुर्वृत्त त्राहि मा परमेश्वर ! ॥ ७६

मोहान्धतिमिरे घोरे त्वज्ञाते च सुसकट ।
पतित त्राहि मा देव ! नीलकण्ठ ! जगद्गुरो[1] ॥ ७७

विषयासक्तमत्यन्त मृषा तीक्ष्ण विभीषणम् ।
अनध्यनशील मा त्रातुमर्हसि शङ्कर ! ॥ ७८

न हुत नापि दत्त च कालकर्म[2]-विवर्जितम् ।
वृथा मासाशिन लुब्ध त्व मा त्राहि जटाधर ! ॥ ७९

गुरुशुश्रूषया हीन क्रूर देवद्विज द्रुहम् ।
क्रियाभ्रष्ट गतिभ्रष्ट राज्यभ्रष्ट प्रपश्य माम् ॥ ८०

परोपताप-पिशुन परस्वे त्वतिलोलुपम् ।
परदारे सदासक्त त्राहि मा गिरिजापते[3] ! ॥ ८१

सर्वोपायपरिभ्रष्ट भवन्त शरणागतम् ।
शान्तदर्प पराधीन कृत्तिवास प्रसीद माम्[4] ॥ ८२

अनुभूतोऽस्मि देवेश ! विज्ञाप्यमहमीदृशम् ।
सववर्णाश्रमाद् वाह्य त्राहि मा मदनार्दन ! ॥ ८३

क्षत्रराजमविज्ञात पुरा पापभयापहम् ।
तेनेद दु.खसयुक्तो दह्याम्येको[5]ऽप्यनाथवत् ॥ ८४

---

1 B₂ पतितेस्मि हि मा देव नीलकण्ठ नमोऽस्तु ते ।

2. B₂ वलिकर्म ।

3. B₂ परदारमन-सक्त त्राहि मां नीलकन्दर !,
A₁ ' ' 'नीलकन्दर ! ।

4. B₂. मे ।

5. B₂. दग्धोऽस्म्येको ।

अहो ! मोहाद्विमोहोऽयमात्मद्रोहाद् हि सकटात् ।
अवस्था शुद्धमेकाये निषेकादिव काञ्चनम्[1] ॥ ८५

अन्तर्दु ख[2] मनस्ताप बहिर्दु ख सवेपथुम्[3] ।
नयनास्फोटमत्यर्थं ज्ञानमत्यन्तदुर्दशम्[4] ॥ ८६

मलि दु खससार महामोह-परिच्छदम् ।
अतृप्त त्राहि मा देव ! शशाङ्ककृतशेखर ! ॥ ८७

गङ्गाधर ! नमस्तेऽस्तु मोक्षकारणमव्यय ! ।
अनादि निधनाध्यक्ष स्थूल सूक्ष्म-स्वरूपधृक् ! ॥ ८८

भक्त स्निग्धानुरक्त मा त्राहि मा परमेश्वर ! ।
जगत्कर्त्तर्नमस्तेऽस्तु जगदीश्वर ! शङ्कर ! ॥ ८९

नमस्ते भगवान् ! तुभ्य नमस्ते भक्तवत्सल ! ।
नमस्ते परमानन्द ! सच्चिदानन्दविग्रह ! ॥ ९०

## ब्रह्मोवाच

इत्युक्त्वा दैत्यराजोऽसौ हिरण्यकशिपु शिवे ।
स्मृत्वा गुरोस्तद्वचनमस्तौसीत् पुनरीश्वरम् ॥ ९१

"स्थिर स्थाणु प्रभुर्भाव" इत्यारभ्य महेश्वरि ! ।
"श्रीवर्धनो जगदी"त्यन्तमुवाच परमेश्वरम् ॥ ९२

एव नाम सहस्रैश्च स्तुवन् देव जगद्गुरुम् ।
त्रायस्वेत्युद्गिरन् सद्य पपात वसुधातले ॥ ९३

ततो देवो विरूपाक्ष कृपा चक्रे महेश्वर ।
उवाच मेघगम्भीरमिद वचनमम्बिके ! ॥ ९४

सतुष्टोऽह च ते सत्यमुत्तिष्ठोत्तिष्ठ दानव ।
निबोध वचन श्रेयो युष्माक च ब्रवीम्यहम् ॥ ९५

विक्लवेन च दीर्घेण किंचित् स्तोत्रेण चानघ ! ।
प्रीतोऽस्मि ब्रूहि दैत्येन्द्र धर्मनिष्ठापर वच । ९६

1. B₂—अद्य स्यात् शुद्धर्थे काये निषेकादिव काञ्चनम् ।
2 B₂—अति दु ख ।
3. B₂—सवेपथु ।
4. B₂—ज्ञानहीन सुदुर्ग्रहम् ।

एतत् श्रुत्वा महेशानि महादेवस्य भाषितम् ।
ब्रह्मामृतरस प्राप्य उदतिष्ठत् कृताञ्जलि ॥ ९७

प्राह चाज्ञापयस्वेति यद्यनुग्रहतास्ति मे ।
पूर्वोक्त च वर देहि श्रद्धा नान्यत्र मे विभो ॥ ९८

महादेव इद श्रुत्वा तद्वर[1] धमरोधकम् ।
अन्तर्धान गतो देवो वाचमूचेऽशरीरिणीम् ॥ ९९

अनर्होऽसि अभद्रस्त्व तथापि शृणु मे वच ।
दृढेन मनसा दैत्य तपोनिष्ठापरो भव ॥ १००

प्राप्स्यसे यदभिप्राय तपसा स्वजनेन च ।
निष्काम कुरु कर्म त्व तपसा लभसेऽखिलम् ॥ १०१

इति देववच श्रुत्वा पर सारामृतोपमम् ।
वाढमित्येव दैत्योऽसौ जगाम तप से वनम् ॥ १०२

देवदेवो महादेव सर्वेषा वरदायक ।
भगवान् लिङ्गमूर्त्तिश्च तत्रैवास्ते सनातन ॥ १०३

ब्रह्मोवाच

एव निगदित चात्र हिरण्यकशिपुर्यथा ।
आराधन च वै[2] कृत्वा वर प्राप्य महेश्वरात् ॥ १०४

शक्रोऽपि सर्वदेवैश्च आगम्यैकाम्रके वने ।
चकाराराधन शम्भोर्यज्ञ च बहुदक्षिणम् ॥ १०५

इन्द्रेण पूजितो यस्मात्तस्मादिन्द्रेश्वर विदु ।
इन्द्रेश्वर माहात्म्येन विलय यान्ति किल्बिषा ॥ १०६

सिद्धेश्वरसमीपेन लिङ्गमिन्द्रेश्वर स्मृत ।
पूजयामासुरन्ये च देवा लिङ्गानि कोटिश ॥ १०७

तस्यैव सिद्धनाथस्य पश्चिमाया दिशीश्वरि ।
दैत्येन पूजितो यस्मात् तस्माद्दैत्येश्वर विदुः ॥ १०८

दैत्येश्वर समासाद्य नरो मुच्येत सङ्कटात् ।
देवदानवयोर्युद्धमेव देवि ! पुराभवत् ॥ १०९

---

1 A₁, C—तद् वचो ।

2, B₂—चैव ।

य श्रृणोति नरो भक्त्या दानवेश्वर-कीर्त्तनम् ।
जीवमानो भवेद् पूज्यो देहान्ते शिवता व्रजेत् ।। ११०

य श्रृणोति नरो भक्त्या पुराणप्रवर त्विदम् ।
पठेद् वापि समाधानात् पुत्रायुर्धनभाग् भवेत् ।। १११

य शङ्करस्य महात्म्य लेखयेत् पाठयेत् सकृत् ।
अशोच्य सर्वसत्त्वेषु वशवृद्धिश्च जायते ।। ११२

जीवन्निह कृतार्थं स्यात् सर्वतीर्थफलान्वित ।
देवा पुनस्तामिच्छन्ति मृत स्वर्गे महीयते ।। ११३

पुराण य. पठेन्नित्य मनसाऽप्यवमन्यते ।
नरक याति पापीयान् ब्रह्मस्वहरको यथा ।। ११४

परिपालयति यश्चेद वाचा न विकरोत्यपि ।
स्ववशमुधृत तेन शङ्कर परितुष्यपि ।। ११५

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया द्वितीयेऽशे देवासुर-सग्रामे हिरण्यकशिपु तपोगमन नाम द्वात्रिंशोध्याय·[1] ।।

द्वितीयोऽश समाप्त ।।

---

1 $B_2$ देवासुरसग्रामे हिरण्यकशिपु तपोवनगमन' नाम द्वाविंशोऽध्याय । द्वितीयोऽशः समाप्तः ।

तृतीयोऽंश

# त्रयस्त्रिंशोऽध्याय:

## सनत्कुमार उवाच

श्रुत्वैव परमाश्चर्यमद्भुत लोमहर्षणम् ।
देवदानवयोर्युद्ध पुरावृत्त महेश्वरि ! ॥ १

उवाचेद ततो वाक्य स्मित कृत्वा पितामहम् ।
देवदानवयोर्युद्ध साधु प्रोक्त त्वयानघ ! ॥ २

क्षेत्रस्यास्य प्रभावोऽयमनादिरपरिच्छद ।
तुष्टो देवेन्द्रवसुभि साप्सरोगुह्यकादिभि ॥ ३

मनुभिर्मनुजै सिद्धै सर्वभूतै पृथक् विधै ।
श्रुता मे सर्व एवैतत् प्रसादात्तव सत्तम ॥ ४

भूय किमत्र वृत्तान्त श्रोतुमिच्छामि पूर्वज[1] ।
प्रत्येकैकं यथा तथ्य भगवन् ! शस मेऽखिलम् ॥ ५

## सनत्कुमार उवाच

एव देव्या वच श्रुत्वा प्राहेद कमलोद्भव.[2] ।
धन्यासि देवि ! जननि ! लोकानुग्रहतत्पर ॥ ६

प्रश्नस्य सदृशार्थ च न केनापि प्रकाशितम् ।
त्वदग्रे[3] कथयिष्यामि परं साराक्षर पदम् ॥ ७

ससारभयभेत्तार कामद बरद विभुम् ।
कृत्तिवास नमस्कृत्वा पुराण श्रृणु पार्वति ! ॥ ८

हिरण्यकशिपुस्तस्माज्जगाम तपसे वनम् ।
देवराजस्तु देवैश्च आजगामाथ सवृत ॥ ९

---

1 $B_2$—पद्मज ।

2 $B_2$—कमलासन ।

3. $B_2$—हन्त ते ।

क्षेत्रमेकाम्रक श्रेष्ठ कृत्तिवासो निकेतनम् ।
अपश्यत् क्रमाद् धीमान् त देश सर्वकामदम ॥ १०

अवशिष्टाध्वर कर्म चकारायतनानि वै[1] ।
जुहावाग्नौ यथाकाले विधिवद् द्विजपुङ्गवै ॥ ११

स्थाने स्थाने यथा पूर्वं सदक्षिणमतद्रित ।
सुतृप्तश्चाभवत् तस्मै जातवेदा वरप्रदे ॥ १२

निवृत्तमखकर्माणः समाप्त-वरदक्षिण ।
ब्रह्माविष्णुसशक्राद्या मुनय सिद्धचारणा ॥ १३

तुष्टुवुर्देवदेवेश सहस्रैर्नामभि शिवे ।
तुतोष भगवान् रुद्र सतृप्नो नामभिमखै ॥ १४

ब्रह्माणमग्रत कृत्वा मुनय सर्वदेवताः ।
ववन्दिरे महादेव महात्मान त्रिलोचनम् ॥ १५

पाणौ कुड्मलवद्धास्ते वन्धुरीकृतकन्धरा ।
हर्ष गद्गदया वाचा हर स्तोत्र प्रकुर्वते ॥ १६

देवा ऊचु

जगदादिरनादिस्त्व जगदाधार ईश्वर ।
जगत् कर्त्ता जगद्योनिर्जगदानन्दवर्धन ॥ १७

जयाजरन् जयाजेय जय स्वर्गापवर्गद[2] ।
जय शम्भो महादेव जय गौरीश ईश्वर ॥ १८

नि शेषस्तत्त्वरूपस्त्व निराभासो निरन्तर[3] ।
निर्गुणो गुणभोक्तासि नित्य सदसदात्मक ॥ १९

परत परमानन्द परातीत परात्पर.[4] ।
परमेष्ठी परित्राता पवित्र॰ परम स्मृतः ॥ २०

स्रष्टा॰ भूतपति कृत्स्न विधाता धातुरेवच ।
सहर्ता त्वं हि गोप्तासि ह्येव गीतो मनीषिभि ॥ २१

---

1 $B_2$—पूर्वमायतन च वै ।

2. $B_2$—जया जन्मन् जयः जय जय गौरीश ईश्वर ।

3. $B_2$—नि शेष तत्स्वरूपस्त्व निराभासनिरन्तरम् ।

4. $B_2$—परावर ।

पुष्णासि निखिलान् जन्तून् सर्वेषा प्रपितामह ।
विश्ववीजमिद क्षेत्रमन्तरीक्ष क्षपा दिवा[1] ॥ २२

दिग्वेश ! उदधिभूमिर्देहो देहभृता वर ।
आपोऽग्निर्भूमिराकाश तेजस्तेजोऽसि दुष्प्रभ[2] ॥ २३

अनन्तमनघ चेड्यप्रमेयमगोचरम्[3] ।
प्रलयार्कसमप्रख्य सोमार्धविधृते नम ॥ २४

गङ्गाधर धराधार विश्वभव्य भवत् प्रभो ! ।
विचित्रग्रहनक्षत्रे जटाजूटपरिग्रह ॥ २५

ग्रह तु[4] वितत दिव्य विश्वभूत-निकेतनम्[5] ।
कालकूट धृत कण्ठे नीलकण्ठ नमोऽस्तु ते ॥ २६

कुण्डलाभोगविभ्रान्तौ श्रवणान्त-विभूषितौ ।
माल्यम्बरौ विराजेते बालवल्लिभिरन्वित ॥ २७

यज्ञोपवितनागेन्द्रो वद्धकन्धर-तक्षक ।
ककोटकजटावद्धो धूर्जटि प्रकटोत्कट ॥ २८

शतहासेन्दुकुन्दाभ विद्युच्चकित निर्मल ।
महाहासभ्रुवोद्भास सुनासा तिलकोज्ज्वत ॥ २९

त्रायस्व परमानन्द भूतनाथ नमोऽस्तुते ।
इभत्वचारुवद्धौ तौ अक्षसूत्र रविप्रभौ[6] ॥ ३०

तक्षको मणिनागश्च लेलिहानौ भुजङ्गमौ ।
केयूरौ[7] कटकावेतौ महाश्वेत धनञ्जयौ ॥ ३१

पद्ममेखलमासाद्य महापद्मस्तु नाभकम्[8] ।
शङ्खकुलिकविख्यातावुरुभ्या भुजगोत्तमौ ॥ ३२

---

1. $B_2$—यमादिवान् ।
2 $B_2$— तेजस्तेजोऽग्निदुष्प्रभम् ।
3 $B_2$—अनन्तमनघाचिन्त्य ।
4 $B_2$— ग्रहन्तु ।
५ $A_2$, C, $B_1$ — विषभूत-निकेतनम् ।
6 $A_2$, $B_1$, C—भुजयोश्चारुवद्धौतावक्षसूत्र रविप्रभौ ।
7. $B_2$, C—करकौ ।
8, $B_2$. महापद्म सनाभिक. ।

कम्बलाश्वतरावेतौ जानुमण्डलमाश्रितौ ।
चरणाम्बुजलग्नौद्वावेलापत्रविलोहितौ ॥ ३३

नूपुराङ्गदमत्यर्थं कुर्वन्तौ पन्नगोत्तमौ ।
सुमुखो हस्तिकर्णश्च हिंस्र तीव्र विषोल्बणौ ॥ ३४

व्यालोला फणिनो देहे फणाशतमितस्तत ।
हविर्हव्य श्रुवस्थालो ब्रह्मा ऋत्विक्-पुरोहित ॥ ३५

स्वयमग्नि स्वय होता उद्‌गाताध्वर्युरेव च ।
स्वय यज्ञविधाता च यज्ञाङ्गो यज्ञसम्भव ॥ ३६

ॐकार प्रणवो वेदा यज्ञरुपिश्च ते नम[1] ।
नम सर्वात्मने तुभ्य भूतभव्य भवत् प्रभो ॥ ३७

असख्येयमपारस्त्व महीयाय महाद्युते ।
विज्ञानगुणसम्पन्न नमस्ते ज्ञानसगर ॥ ३८

कूटस्थवाच्यो य साक्षात् पञ्चब्रह्म नमोऽस्तु ते ।
य[2] श्राद्धे श्राद्धभोक्तासि पितृणा प्रपितामह ॥ ३९

पूज्यानामपि पूज्यात्मा महादेव नमोऽस्तु ते ।
बुद्धिप्रिय[3]-गुणावासः सत्व सत्त्ववता वर ॥ ४०

अधिकर्मास] नैष्क्रम्य आदिदैवतदर्शन ।
पाणोऽपान समानश्चोदानव्यानौ त्वमेव च ॥ ४१

त्व च प्राणभृता श्रेष्ठो वरिष्ठ सर्वदेवता ।
तत्रानेक प्रवक्ता च मायामोहकर प्रभु ॥ ४२

त्रिपुरारि स्मरध्वसी त्रिनेत्रस्तु त्रिशूलधृक् ।
उमापतिर्विरूपाक्षस्त्रैलोक्यपतिरीश्वर ॥ ४३

त्रिगुणातीत एकात्मा विधृतानेकविग्रह ।
अन्धकारे ! जगन्नाथ ! सुराणा प्रीतिवर्धन॰ ॥ ४४

भीमरूपधराप्युग्र त्र्यम्बकाय नमोऽस्तु ते ।
प्रसीद अमराध्यक्ष विपक्षक्षयद प्रभो ॥ ४५

---

1 A1 B2 यज्ञरूपी शिवो नम ।

2 B1, C—त्व ।

3 B1—बुद्धी ि्रय, A2—बुद्धीन्द्रिय ।

श्रीमान् माङ्गल्यनिलय स्मृतमात्राघनाशन ।
स्वर्णकूटालयोमेश पुण्डरीकाविनश्वर[1] ॥
सुब्रह्मण्य नमस्तेऽस्तु शितिकण्ठ सुरार्च्चित ॥ ४६

इति स्तुतिवचनोपचारहृद्य
चतुर्वदनारविन्द-विनिसृतम्[2] ।
सकलदुरितौघविनाशशील
कुसुमधनुषाराति-प्रियप्रद च ॥ ४७

स्तोत्रेण स्तौति योऽनेन भक्तिमान् सयतेन्द्रिय ।
सर्वार्थान् पूरयेत्तस्य षण्मासाभ्यन्तरे हर. ॥ ४८

ब्रह्मोवाच

अथ प्रीतिमना भूत्वा नीलकण्ठ सुरारिहा ।
उवाच त्रिदशान् मध्ये पूर्णचन्द्रनिभानन ॥ ४९

किमाहुर्देवता सर्वा ब्रह्माद्या मुनिचारणा ।
ब्रुवध्व यदभिप्राय सिध्यन्त्यर्था न सशय ॥ ५०

तमुवाचाब्जसभूत सह सिद्धै सुरासुरै ।
एव तु वरमिच्छामो यद्भवान् सुमुखस्तदा ॥ ५१

प्रसन्ने च विरूपाक्षे किमन्यदधिक फलम् ।
कौतूहलेन सिध्यन्ति धर्मकर्मार्थमोक्षका ॥ ५२

तथापि प्रवरे क्षत्रे वनैकाम्रे जगत् प्रभो ।
कालेन कियता नाथ देव्याश्चात्र समागम ॥ ५३

क्षेत्र च भ्राजते नादौ विना शक्त्या भवानपि ।
अनाथाश्च वय सर्वे मातृहीना गतप्रभाः ॥ ५४

एतदिच्छाम्यह श्रोतु अव्यक्ता भवतः स्थितिम् ।
प्रसह्य च यथाकाल प्रासादस्य च सम्भव ॥ ५५

एतत्त्वमचिराद् ब्रूहि पर कौतूहल हि न ।
निशम्य सुरसघास्तान् महादेवोऽभ्यभाषत ॥ ५६

---

1. $B_2$—पुण्डरीकाजिनाम्बर ।
2. $B_2$—चतुर्वदनारविन्दगलितम् ।

तदिद सम्प्रवक्ष्यामि महादेवस्य भाषितम्।
लिङ्गमूर्त्तौ स्थितस्तत्र यथा मामवदत्पुरा ॥ ५७

## सनत्कुमार उवाच

अथ ब्रह्माणमासीन ब्रहीति मुनयोऽवदन्।
तामुवाच[1] ततो देवी त चाप्यसित पार्वती ॥ ५८

किमाख्यातेन चास्यापि अनुमाता[2] स्वय किल।
जहास मुदितेत्युक्त्वा वीक्ष्यमाणा त्रिलोचनम् ॥ ५९

नयनोन्मीलजनितानन्दाश्रुपुलकाञ्चिता ।
उच्यता वदता श्रेष्ठ तथापि त्व पितामह ! ॥ ६०

देव्या एवमनुज्ञातो इद प्राह प्रजापति ।
शृण्वन्तु ऋषयो देवास्त्वत् प्रसादेन पावति ! ॥ ६१

एकामे स्वपति देवि ! अन्वगच्छदुपासितुम् ।
स्वर्णकूट गिरिश्रेष्ठ ददर्श लवणाम्भसि ॥ ६२

क्षेत्रराज समग्रेण लिङ्गकाय पृथक् पृथक् ।
कल्पवृक्ष पर दिव्य नदी विमलवाहिनोम् ॥ ६३

मनोज्ञ विपुल शुभ्र सान्द्रचित्रमलकृतम् ।
नानाधात्वङ्कित शृङ्ग रसाविद्ध[3] सुवर्च्चसम् ॥ ६४

शिवक्षेत्र पर धाम पवित्र पापनाशनम् ।
भास्वर योगिभिर्युष्ट विमल सुशिलातलम्[4] ॥ ६५

न तेन सदृश कश्चित्रषु लोकेषु विद्यते ।
किं वा नो बहुनोक्तेन कैलासादतिरिच्यते ॥ ६६

सर्वर्तुफलपुष्पाढ्या पादपा किशलन्विता ।
सारङ्गा मदमत्ताश्च विष्किराकुलपत्रका ॥ ६७
परपृष्टरव हृद्य मयूरवरनादितम् ।

दात्युह कलविंकाश्च राजहसाश्चकोरका ॥ ६८

---

1 $B_2$—अनुवाच ।

2 $A_2$, $B_1$, C—अनुमात्रा ।

3 $B_2$—रसावद्ध ।

4. $B_2$—च शिलातलम् ।

रथाङ्गा शिशुनासक्ता[1] जीवजीवकनादिता ।
पुष्करिणी सुतोयाश्च पद्मोत्पलविराजिता ॥ ६९

एव बहुविध रम्य सुपुष्पित-मनोहरम्[2]
एकाम्रकवन पुण्य शिवधाम सनातनम् ॥ ७०

समन्तात् शिवलिङ्गेन व्याप्त क्षेत्रमनुत्तमम् ।
मैने वै मनसा तुष्ट पश्यन्ति सा च देवता ॥ ७१

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहितायां तृतीयेऽशे देव्यावतरण[3] नाम त्रयस्त्रिशोऽध्याय.[4] ।

---

1 $B_2$—पिशुनासक्ता ।

2 $B_2$—पुष्पित सुमनोहरम् ।

3. A, C—देववरण ।

4. $B_2$, V ····तृतीयेऽशे देव्यावतरण नाम प्रथमोऽध्याय ।

# चतुस्त्रिंशोऽध्याय:

## ब्रह्मोवाच

सा[1] ददर्श महाक्षेत्र पुण्य रम्य हराश्रमम् ।
सुप्रीतमनसाचार्या प्रोवाच शिवसन्निधौ ॥ १

अह त्वस्मिन् वरे क्षेत्रे वस्तुमिच्छामि शङ्कर ! ।
सहैव विचरिष्यामि भवन्त पर्युपासती ॥ २

दाक्षायण्या वच श्रुत्वा ईश्वर प्राह शान्तया ।
शृणुष्व कथयिष्यामि क्षेत्रस्यास्य माहात्म्यकम् ॥ ३

आद्यादाद्यातर पूर्वं तपोवनमनुत्तमम् ।
गोप्य तिष्ठाम्यह कान्ते ! उषित्वा वरवर्णिनि ! ॥ ४

एकाम्रकस्य माहात्म्य दुरितौघविनाशनम् ।
अकथ्य सर्वदा पूर्वं साम्प्रत शृणु मे प्रिये ! ॥ ५

यत्राह तत्र भवती भवत्या मम सन्निधि॰ ।
आवयोरन्तर नास्ति दुग्धे क्षिप्त पयो यथा ॥ ६

यदिच्छसि प्रिये स्थातु क्षेत्रे त्रिभुवनोत्तमे ।
मदर्च्चनार्थैतिष्ठाशु प्रच्छन्नेनात्मन स्वयम् ॥ ७

य य रूप समास्थाय भवन्ती चानुरूपिणी ।
तेनैवाह पुमान् भूत्वा रमिष्येऽह त्वया सह ॥ ८

भज भद्रे ! वर क्षेत्रमनुयास्याम्यह तव ।
समय चक्रतु स्तौतु ययतुस्त्वरित क्रमात् ॥ ९

आसाद्य भवन दिव्य शिवक्षेत्र निरामयम् ।
पर्यंचक्राम[2] सा दृष्ट्वा कौतूहलसमन्विता ॥ १०

---

1 $A_2$, C—त ।

2. $B_3$—पर्यंक्रामत

पुरो ददर्श गच्छन्ती साद्भूत लोमहर्षणम् ।
ह्रदाद् विनिर्गता गाव सहस्रा वर रोहिणी[1] ।। ११
शङ्खकुन्देन्दुधवला. पय स्फीता सुवर्च्चस ।
प्रयातास्तदनुज्ञाता गिरीन्द्रतनया स्थिताः ।। १२
धारयाध्मातपयसा शिवलिङ्ग समागता. ।
प्रस्रवन्त्य स्वय दोग्धा लिङ्गमुखस्य शेखरे ।। १३
पर्यायेण सहस्रैश्च प्रोज्झित क्षीरमुत्तमम् ।
आपूर्यमाण तत्रेश कृत्तिवास पयोमृतम् ।। १४
प्रदक्षिण नमस्कृत्य गावस्ता कृतकृत्यका ।
दत्त्वा पयोऽमृत लिङ्गे भ्राजमाना स्वतेजसा ।। १५
तेनैव च स्वमार्गेण विविशुर्ह्लदमुत्तमम् ।
जग्मुस्ता निलय सर्वा वरुण्यस्य महात्मन' ।। १६
एव विदितवृत्तान्ता पार्वती परया मुदा ।
ततैव वसति चक्रे भवति तव पुरानघे[2] ।। १७
स ह्लदो गोऽभिरामोऽसौ गोसहस्रेति विश्रुत. ।
माहात्म्य तस्य वक्ष्यामि शृणु त्व गिरिकन्यके ।। १८
स्नात्वा तस्मिन् महातीर्थे पितृन् दत्वा जलाञ्जलीन् ।
देवाः पितृन् मनुष्याश्च अक्षय फलमाप्नुयु ।। १९
मास्यश्वयुजि सप्राप्ते त्वष्टम्या नियत शुचि ।
सुधिय शुक्लपक्षस्य स्नान कुर्वन्ति ये नरा ।। २०
विधान कथित तेषा स्वय देवेन शम्भुना ।
शृणु प्रीतमना देवि ! पापसघात-भेषजम् ।। २१
गोमूत्र गोमय क्षीर दधि सर्पि कुशोदकम् ।
दत्वा शिरसि गोर्यम्ब ! मन्त्रेणानेन मज्जयेत् ।। २२
"ॐ नमस्ते ज्ञानशुद्धाय त्रयीमूर्त्तिमताय च ।
स्नान करोमि देवेश प्रसीद परमेश्वर" ।। २३
इत्युक्त्वा मज्जयेत् तत्र शिवमन्त्रमुदीरयेत् ।
पञ्चवारान् विविक्तेन तत सन्ध्या समाचरेत् ।। २४

---

1 $B_2$—ह्रदाद् विनिर्गता मास्तु सहसा वरवर्णिनी ।

2 $B_2$—पुरा त्व भववल्लभे ।

यथावस्थितपूर्वेण तर्पयेत् पितृदेवता ।
स्नात्वा दत्त्वा यथाशक्त्या विप्रमुख्येभ्य[1] एव च ॥ २५

गोसहस्रेश्वर देव शीतलैरम्बुभिर्बुध ।
स्नापयित्वाऽथ सपूज्य कृत्तिवास ततो व्रजेत् ॥ २६

अष्टमूर्त्ति समासेन वन्दन कृत्तिवाससे ।
सपूज्य विधिवद्देव ततस्तु प्रणमेद् बुध ॥ २७
अष्टाङ्ग प्रणिपातेन दश द्वादश एव च ।
उपविश्याञ्जलि बद्ध्वा ततो मन्त्रमनुस्मरेत् ॥ २८
"ॐ नमस्ते परमार्थाय भूतभव्य भवाय च ।
परिणामविहीनाय वेधसे कृत्तिवाससे" ॥ २९

देवस्य पुरतो भूत्वा शुद्धकायो विकल्मष ।
दशद्वादशक जप्य महापातकनाशनम् ॥ ३०
गोसहस्र-प्रभावोऽय श्रूयता पापनाशनम् ।
महापातक-कोटिघ्न सर्वकामफलप्रद ॥ ३१

इमा दृष्ट्वा क्रिया देवी प्रीतात्मा भगवत्तदा[2] ।
गा द्रष्टु सा मनो दध्रे गोषु प्रीतो महेश्वर ॥ ३२
गोपाल्यह भविष्यामि अस्मिन् क्षेत्रे शिवालये ।
चरिष्यामि शिवै सार्ध रमयामि यथासुखम् ॥ ३३
वने द्रुमलताकीर्णे पुष्पशैवलमालिनि ।
नानाधात्वङ्किते देशे स्वर्णकूटे हराश्रमे ॥ ३४

आराध्य हरमीशान लिङ्गमूर्त्तिस्वरूपिणम् ।
निश्चला भक्तिमाधाय स्थितिमत्र करोम्यहम् ॥ ३५

इद विचिन्त्याद्रिसुता महावने
दिव्य वपु सा सहसा विधाय च ।
गोपीस्वरूप प्रतिलभ्य मायया
समाययौ तत्र हरान्तिक प्रति ॥ ३६

---

1 $A_2$, C—विप्रमुख्येन ।

2 $B_3$—चाभवत्तदा ।

हंसलीलागति सौम्या पदौ पद्मारुणावुभौ ।
रुचिरोरुधृतवती[1] पीनश्रोणि-पयोधरा ॥ ३७

हेममेखलसंयुक्ता नीलकौशेय-वाससा ।
उत्तरीयेण शुक्लेन स्निग्धसूक्ष्मतनूरुहा[2] ॥ ३८

कुण्डलाभ्यां विचित्राभ्यां भ्राजमानैणलोचना ।
स्फुरत् त्वधरबिम्बोष्ठी दाडिमीकुसुमच्छदा ॥ ३९

स्मितयुक्तद्विजा स्निग्ध-कपोलचलितालका ।
उत्फुल्लनयना श्रीमद् भ्रूलता श्रवणायता ॥ ४०

ललाटे तिलकोपेता कुटिलालकमूर्धजा ।
श्यामा इन्दीवर इव पूर्णचन्द्रनिभानना ॥ ४१

स्वेच्छया निर्मितं रूपं स्वयमेवात्मनात्मनि ।
त्रैलोक्यमोहिनी सा तु वृषकेतोर्विशेषतः ॥ ४२

उद्भवन्ती स्वयं साक्षाद् विरचित्वा महावने ।
एकोनकोटिलिङ्गानि समभ्यर्च्य मुदान्विता[3] ॥ ४३

एकैकमुपचारेण हृद्य मेध्येन वस्तुना ।
क्रमतो निखिलान्येव[4] स्नानार्च्चनविधानवित् ॥ ४४

## ब्रह्मोवाच

एतस्मिन्नन्तरे काले कीर्त्तिर्नाम महासुरः ।
द्रुमिलस्य सुतो घोर आसीदृषिविनाशकः ॥ ४५

दुराचारो दुराधर्षो विश्वस्य निधनोद्यतः ।
ज्ञातीनां भयदो नित्यं पितृमातृद्रुह[5] सदा ॥ ४६

उद्वेजनीयः सर्वेषां सर्वधर्मवहिष्कृतः ।
प्राणीप्राणहरः क्रूरस्त्वविश्वस्तो विमूढधीः ॥ ४७

---

1 $B_2$—रुचिरोरू बिभ्रती च ।

2 $B_2$—मुग्धसूक्ष्मतनूरुहा ।

3 $B_2$—समभ्यर्च्येन्मुदान्विता ।

4. $B_2$—निखिलान् देवान् ।

5 $A_2$, C—पितृमातृवृत ।

भ्राता तस्याभवद् ज्येष्ठ पृथुलोमा ह्यधार्मिक[1]।
शतमेकोत्तर ते वै द्रुमिलस्य सुताः किल ॥ ४८

सह सानुनिवासास्ते सर्वे भीमपराक्रमा ।
अनुशासन्ति ते वीरा पितु प्रियवती महीम् ॥ ४९

अथ भ्रातृभिरावृत्य कीर्त्ति नामा अकीर्तिमान् ।
मृगया छद्मना सोऽथ निर्जगाम महावनम् ॥ ५०

ततोऽम्ब गहनेऽरण्ये निस्तोये जनवर्जिते ।
सर्वसत्वविहीने च महाभीमेऽतिकण्टके[2] ॥ ५१

ग्रीष्मे शुष्काटवीरुक्षे प्रधावन्त इतस्तत ।
सूर्यांशुतप्तदेहास्ते क्षुत्पिपासातुरा भृशम् ॥ ५२

तृतीयेयामे सम्प्राप्ते[3] भ्रातरस्ते तृषातुरा ।
त कीर्त्ति भ्रातर ज्येष्ठमुपगम्य स्थितास्तदा ॥ ५३

स तु तान् दुर्बलान् दृष्ट्वा क्षुत्क्षामपरिपीडितान् ।
आर्य ! त्राहीति वदतो मनो दध्रे सुदारुणम् ॥ ५४

जघान वृक्षमुत्पाट्य दशैतान् निज सोदरान् ।
नृशसो विजनेऽरण्ये विक्षेपाचलरोधसि[4] ॥ ५५

हन्म्यन्यानपि भूपोऽह[5] भविष्यामीति चिन्तयन् ।
आजगाम स पापात्मा एकाकी भ्रातृघातक ॥ ५६

अपरस्मिन् दिने सोऽथ पुनर्दश सहोदरान् ।
जघान पुनरेवैतान् यथापूर्वांस्तथापरान् ॥ ५७

विवेश भवन चैको मातुरन्त पुर द्रुतम् ।
एकाकिन च त दृष्ट्वा माता वै[6] पर्यपृच्छत ॥ ५८

कुत्र ते भ्रातरस्तात ! समेत्य भवता गता ।
एकाकी इह सम्प्राप्तो द्वैध जात च मे मन ॥ ५९

---

1 $A_2$, C—सुधार्मिक ।

2 $B_2$—महाभीमेऽतिविष्टपे ।

3. $B_2$—सम्प्राप्ते तृतीययामे ।

4 $B_2$—चिक्षेपाचलरोधसि ।

5 $A_2$, C—भूयोऽह ।

6. $B_2$—त ।

जघन्याश्च वने त्यक्त्वा कथमागन्तुमुत्सहे ।
दारुणोऽसि महान् त्व च सत्य कथय मे सुत ॥ ६०

सिंहैर्व्याघ्रैर्गजैर्वापि व्यालैश्चान्यैस्तथा हता ।
किं न वक्ष्यसि तात ! त्व दहतीव च मे मन ॥ ६१

तयोरेवतु वदतोर्यानमुख्या विनायका ।
आजग्मु सहसा वीरा विनाशस्य क्षय गता ॥ ६२

कीर्त्तिः प्राहान्तिके मातुर्मृगलोभाद् गता वयम् ।
हन्यन्ते वा हता वा ते[1] विधिरत्र प्रमाणत ॥ ६३

रुरोद दुःखिनी माता श्रुत्वा च महदप्रियम् ।
रुरुदुश्च ततो दीना राजवेश्मगता स्त्रिय ॥ ६४

तथा पौरजना सर्वे किमित्येव परस्परम् ।
क्षुब्धा सा नगरी कृत्स्ना राजद्वारमुपागता ॥ ६५

गजाश्वरथसघोषैरिषुभि पन्नगोपमै ।
द्रुमिलोऽपि महीपाल सन्नद्धस्तद्बलै सह ॥ ६६

विदि-वा तस्य कर्मेद कुलोत्सादन दारुणम् ।
आदिदेश बहून् शूरान् वधस्वेति ममात्मजम्[2] ॥ ६७

कीर्त्तिरस्य च सेनान्यो भ्रातृघ्नस्य दुरात्मन ।
वधमेव प्रशसन्ति कुलाङ्गरस्य पण्डिता ॥ ६८

नियोगाद्दैत्यराजस्य द्रुतमभ्यपतन् बला ।
चतुरङ्गा प्रधावन्तो बलाध्यक्ष-प्रचोदिता. ॥ ६९

शतशोऽथ सहस्राणि कवचोज्वलधारिण ।
कीर्त्ति चाशु[3] जिघासन्तो महाकाया महाबला ॥ ७०

ततस्तान् प्रति कीर्त्तिस्तु विससर्ज शिलीमुखान् ।
एकाकी बहुभि सार्द्ध युध्यमानो महारणे ॥ ७१

तस्याथावरजो वीरो वासो वासवविक्रम ।
दृष्ट्वैव भ्रातर सख्ये साहाय्यमकरोद् बली ॥ ७२

---

1. $B_2$—हन्युस्ते वा हता वा ते ।
2. $B_2$—स्वमात्मजम् ।
3. $B_2$—पशु

कीर्त्तिर्वास सहायेन व्यवधीत् स पितुर्बलम्।
उवाच[1] समरे तास्तु राजामात्यान् ससैनिकान् ॥ ७३

अद्य मत्कार्मुकोत्सृष्टैर्विशिखैरग्निसन्निभै ।
हता द्रक्ष्यथ वै यूय पूर्वप्रेतपितामहान् ॥ ७४

अह वाससहायेन उपेन्द्रेणैव वासव ।
इत्युक्त्वा सर्पतुस्तौ तु द्वौ वीरौ रणकर्कशौ ॥ ७५

पर्जन्याविवगर्जन्तौ वाणवृष्टिप्रवर्त्तकौ ।
ममारतुर्बहून् सख्ये क्षये इव यमान्तकौ ॥ ७६

अथ सेनापतिर्वीरो उग्रशर्मेति विश्रुत ।
धनुर्विस्फारयामास उवाच समराग्रणी ॥ ७७

कि हत्वा च बहून् क्षुद्रान् दैत्यान् पौरुषवर्जितान्।
मामुपैहि दुराचार यद्यस्ति बलविक्रम ॥ ७८

इत्युक्त्वा दशभिस्तीक्ष्णै ककपत्रैरजिह्मगै ।
शरोद्घातैरसख्यातै[2]र्जघान च ननाद च ॥ ७९

तमायान्त स चिच्छेद भूयस्त्रिशद् व्यमोचत।
कीर्त्तिस्तु बलवान् शूरश्चिच्छेद कृतहस्तवत् ॥ ८०

प्राहिणोच्चतुरो वाहानुग्रशर्माणमाहवे ।
हताश्वो रथमुत्सृज्य विव्याध नवभि शरै ॥ ८१

अन्योन्य शरवर्षेण नीहार इव सवृतः।
मुहूर्त्तमभवद् युद्ध तुमुल लोमहर्षणम् ॥ ८२

कुवलाख्यो[3]रणे वास जघान दशभि शरै ।
शतेन शतमादाय सहस्र व्यकिरच्छरै ॥ ८३

छिन्नभिन्न विकर्णौ तौ समन्तादवनीतले ।
कुवलाख्यो[4] महाहर्षाच्छूलमादाय वीर्यवान् ॥ ८४

---

1 $A_2$, C—उवास ।

2 $B_2$—शिलाधौतेरसख्यातै ।

3 $B_2$—वकुलाख्यो ।

4. $B_2$—वकुलाख्यो ।

चिक्षेपारातिनाशाय[1] ज्वालामाली भयङ्करम् ।
अर्धचन्द्रेण वासस्तु द्विधाभूत न्यपातयत्[2] ।। ८५

गदा गुर्वीं समादाय स चिक्षेप पुनस्तत ।
गदा चिच्छेद भल्लेन दक्षिण च भुज तथा ।। ८६

तीक्ष्णेन क्षुरधारेण शिरोऽप्यस्य जघान च ।
कुवल[3] पतित दृष्ट्वा तमुचुश्चेतरे जना ।। ८७

अलमध्यवसाय भो त्वब्ध्यौ पुभिरेव तौ[4] ।
इतरान् व्यबधीत् सख्ये कीर्त्ति सग्रामपेशल. ।। ८८

अन्यानपि महायोधान् वासो वासवविक्रम ।
विहता ध्वजिनी दृष्ट्वा द्रुमिलोऽप्यनुधावत ।। ८९

पृथुलादि सुतै स र्द्धं सपन्नबलवाहन ।
पुत्रयोर्बधमन्विच्छन् क्रोधपर्याकुलेक्षण ।
सुदूरमुपसगम्य विनिवृत्तो महीपति ।। ९०

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया तृतीयेऽ शे कीर्त्तिवासोपाख्यान[5] नाम चतुस्त्रिशोऽध्याय[6] ।।

---

1 $B_2$—चिक्षेपाभीतिनाशाय ।

2 $B_2$—व्यपातयत् ।

3 $B_2$—वकुल ।

4 $A_2$, C—पुभिरेतशै ।

5 $A_2$, $B_1$, C—वासोपाख्यान ।

6 $B_2$, V तृतीयेऽ शे कीर्त्तिवासोपाख्यान नाम द्वितीयोऽध्याय ।।

# पञ्चत्रिंशोऽध्यायः

ब्रह्मोवाच

विचरन्तौ मही कृत्स्ना तावुभौ दुष्टचारिणौ ।
लवणाब्धितटे दुर्गे स्वर्णकूटाद्रिरोधसि ॥ १

तस्थतु सुचिर काल नि शङ्कौ विगतज्वरौ ।
निभृतौ च निकुञ्जेषु पर्वतेषु गुहासु च ॥ २

कामरूपौ दुराधर्षौ निपुणौ रणकर्मणि ।
सर्वास्त्रविद्याकुशलौ देवमार्गविरोधकौ ॥ ३

पुरोधस पुरा भक्त्या तोषित च पिता तयो ।
ययाचे त्रिषु लोकेषु दुर्जयो मम पुत्रकौ ॥ ४

भूयस्तमेवमस्त्वीति स प्राह ब्राह्मणोत्तम ।
तत प्रभृति तौ वीरौ कीर्त्तिवासौ सुदुर्जयौ ॥ ५

एकीभूतौ द्रुतौ वीरावेतौ नगनिवासिनौ[1] ।
ददर्शतु[2] कदाचित् तौ देवीं लिङ्गमुपासतीम् ॥ ६

रूपयौवनसम्पन्नामेणाक्षीं लोकसुन्दरीम् ।
सुचिर पश्यमानौ तौ झषकेतुवशगतौ ॥ ७

ततो दिव्यवपुर्धृत्वा सालङ्कारविभूषितौ ।
सुस्रजौ गन्धलिप्तौ च शृङ्गारवशमत्सरौ ॥ ८

पुष्पमालावसक्तेन भाजमानौ च लीलया ।
उपसगम्य तौ देवी खद्योतानीव चञ्चलाम्[3] ॥ ९

उचतु क्वासि कस्यासि किं त्व भद्र चिकीर्षसि[4] ।
देवी वाप्यथ गन्धर्वी यक्षविद्याधराप्सरा ॥ १०

---

1. $B_2$—एकीभूतौ तु तौ वीरौ अस्मिन्नगनिवासिनौ ।
2 $B_2$—ददृशतु
3 $B_2$—खद्योताविवचञ्चलाम् ।
4, $B_2$—उचतु, काशि कल्याणि! किंतु भद्र चिकीर्षसि ।

ब्रह्माणी भवपत्नी वा शची वा वैष्णवी प्रभा।
असादृश्या ह्यह मन्ये अपि त्रैलोक्यभाविनी॥ ११
स धन्यो जीवलोकेऽस्मिन् पतिस्ते यस्तु शोभने !।
धन्येय पृथिवीदेवी या त्व वहति मूर्धनि॥ १२
सुकुमारासि बालासि दयाभूतासि वल्लभे !।
हरस्यपाङ्गैर्जीव नौ माधुर्यहृदय गमे॥ १३
पुष्पेषुणा मोहितौ तु कालस्य वशवर्त्तिनौ।
दारेच्छया च दुर्बुद्धी तावूचतुरिद वच॥ १४
आदातुमुद्यतावेतावुमा मृत्युमिवात्मन।
जम्बुकावथवा वीक्ष्यौ[1] मृगेन्द्रजननीमिव॥ १५
रूप न पश्यतीय वै न शृणोति वचासि सा।
मनसापि न सधत्ते[2] असुरेन्द्र-सुतोदितम्।' १६
तन्निष्ठा तद्गता चेय तन्मनास्तदुपाश्रया।
तस्मिन्न्यस्तमना भत्वा तस्येव परिचर्यया॥ १७
प्रस्थिता पुनरेवान्य-ल्लिङ्गमाराधनेच्छया।
तौ ददर्श समायातौ प्रियमायुर्य-भाषिणौ।
असुरौ स्थित विभ्राणौ[3] वल्गुवाचामुदीरितौ॥ १८

## कीर्त्तिरुवाच

अह कीर्त्तिरय वासो नास्ति लोकेषु मत्सम।
ऐश्वर्यगुणरूपाढ्य सौभाग्यबलपूजित॥ १९
दानशक्तिरदैन्यत्व भोगी सत्य-प्रियवद।
सीदामि तव दृष्ट्यैव त्राहि मा वरवर्णिनि !॥ २०
कस्यासि कासि किंचित्त्वा ज्ञातुमिच्छामि शोभने !।
पृच्छामि यदभिप्रायमचिराद् वक्तुमर्हसि॥ २१
धनरत्न मही कृत्स्ना पतिं वा वाञ्छसि प्रिये !।
एवमुक्ता च दुष्टेन चुकोपावनता सदा॥ २२

1 B₂—वर्ज्यौ।
2 B₂—मनसापसधत्ते।
3, B₂—स्मृति-विभ्रशौ।

मुहूर्त्तमिव त ध्यात्वा स्मृत्वा देवस्य भाषितम् ।
कोपसयमन चक्रे उवाच व्रीडिताक्षरम् ।। २३

श्रीपार्वत्युवाच

नाहमेवविधा नारी गोपाली-व्रतमास्थिता ।
पूजित शिवलिङ्ग च गुरोराज्ञाकरी[1] सदा ।। २४
मद्विधा जनसम्पन्ना न भवान् वक्तुमर्हति ।
पतिव्रता हि मा विद्धि कुले जाता तपस्विनीम् ।। २५
अलमध्यवसायते मा त्व मृत्युमुखे विश ।
इत्युक्त्वान्तर्दधे देवी तत्र तावपि सस्थितौ ।। २६
विस्मयौ साधुसम्पन्नावविक्षेता परस्परम् ।
व्रीडितावनतौ भूत्वा जग्मतुर्निलय स्वकम् ।। २७

ब्रह्मोवाच

अथ देवो विरूपाक्षो हित्वा रूप पुरातनम् ।
गोपाल रूपमातस्थौ[2] देव्या प्रियचिकीर्षया ।। २८
काषाय विधृतो वास परिधान सकौपीनम् ।
कुटिलालक-शिरोजुष्ट वन्य च विधिमीप्सितम्[3] ।। २९
अशोककिशलोद्भास किशुक कर्णपूरकम् ।
कृष्णाङ्गो यष्टिपाणिश्च गोपवेणु-प्रवादक ।। ३०
सुशिक्य करकस्तुम्बी विहरन् शुशुभे तदा ।
वनमध्यगतो देव स्वेच्छया गोपविग्रह ।। ३१
आजगाम ततो देवी शरच्चन्द्रनिभानना ।
आख्यापनाय देवेशमुमाप्रणयभाषिणी ।। ३२
गोपाल पश्यती कोऽयमित्युक्त्वा सा जहास ह ।
प्रणयोवाच[4] वृत्तान्त निवेद्य लिङ्गपूजनम् ।। ३३

---

1 $A_2$ C—गुरोराज्ञाकरा ।

2 $B_2$—रूपमास्थाय ।

3 $B_2$—वन्या हि विधिवेष्टित ।

4, $B_2$—प्रिया चोवाच ।

पूजा तस्य यथाक्षेत्र दर्शन च तयोर्यथा ।
क्रमत सर्ववृत्तान्त कथयामास कालिका ।। ३४
एव प्रियावच श्रुत्वा भगवान् वृषभध्वज ।
पाणिमादाय शनकै शान्तिपूर्वमिद वच ।। ३५

श्रीशङ्कर उवाच

शृणुष्व चाविधास्यामि[1] पुरावृत्तमिद प्रिये ! ।
मातङ्गतनयो राजा द्रुमिलो नाम नामत. ।। ३६
सोऽयजत्सर्वकामेन तस्मै तुष्टा द्विजातय ।
वर वृणुष्व इत्युक्तो वव्रेऽसौ वरमुत्तमम् ।। ३७
शतमेकात्तर पुत्रानाहूय इदमब्रवीत्[2] ।
कीर्त्तिर्मे दयित पुत्र पुराराधितवान् स माम् ।। ३८
वासश्च तु तथा चेतौ वरमेकं प्रयच्छथ[3] ।
न पुम्भिश्च वश प्राप्तौ बध्यावेतौ कदाचन ।। ३९
एवमस्त्विति ते सर्वे ब्रह्मणा सशितव्रता[4] ।
जग्मुस्ते सदन स्व स्व राजा प्रीतिमुपागमत् ।। ४०
एतौ च वरदानेन बलैश्चैव स्वभावजै. ।
भावयन्तोऽखिलान् कामान् देवान् स ऋषिचारणान् ।। ४१
आत्मनो विंशति भ्रातृन् जघ्ने क्रूरो महासुर ।
अतिनिन्द्यतरश्चासौ त्वया नाश गमिष्यति ।। ४२
हतशेषास्तु विज्ञाय पितरौ भृश-दु.खितौ[5] ।
व्यादिदेश हतावेतौ सेनान्य कुलपाशुलौ ।। ४३
तदर्थे च महायुद्धमन्योन्यमसुरक्षयम् ।
भूयो भ्रातृन् सुहृद् बन्धून् चकार कदन महत् ।। ४४
उपस्थित च युद्धाय दृष्ट्वा पितरमाहवे ।
ततस्तौ प्रस्थितौ यात्रा पितृगौरवकारिणौ ।। ४५

---

1. $A_2$, शृणुष्वच्छाविधास्यामि, C—शृणुस्वच्छोविधास्यामि ।
2 $B_2$ -शतमेकोत्तर पुत्र न् दीयतामिति चाब्रवीत् ।
3 $B_2$—प्रयच्छत ।
4 $B_2$—सशिवरता ।
5. $B_2$—मातापित्रौ सुदु खितौ, B —मातृतातौ सुदु खितौ ।

अटमानावशेष तु वसतौ तु नगोत्तमे।
पितुर्निधनमाकाङ्क्षादेकाम्रक-समाश्रितौ ॥ ४६

कीर्त्तिरेकोऽपरो वासो द्वावेतौ बलिनाम्बरौ।
अजेयौ लोकविख्यातौ देवब्राह्मण-कण्टकौ ॥ ४७

जहि पापौ दुराचारौ पुण्यविघ्नोपपादकौ।
दारुणौदारुणाचारौ ब्रह्मद्वेष्टावधार्मिकौ[1] ॥ ४८

अवध्यौ दैवतै शस्त्रैरितरेषु च का कथा।
शक्रत्व वैष्णवत्व च लोकपालान् जिघासत ॥ ४६

अस्माकमपि पापात्मा धर्मघ्नो मृत्युचोदित ।
ताभ्या न वाञ्छित यत्तु नास्ति त्रैलोक्यवस्तुषु ॥ ५०

हत्वा यत्नेन तौ वीरौ यथाकार्य निसीदति[2]।
स्वस्थापय तथा देवि! त्रील्लोकास्त्व यशस्विनी! ॥ ५१

स्वल्पौतेऽनावमन्तव्यौ न क्षन्तव्यौ मम प्रिये!।
अनेनैव च रूपेण गोपालयुवतीच्छलात् ॥ ५२

स्थास्येऽत्राहमनेनैव रूपेण प्रीतये तव।
जहि पापौ व्रजार्ये! त्व सुराणा कार्यसिद्धये ॥ ५३

कामवृत्तिदुराचारौ बध एव प्रशस्यते।
क्षेत्रस्यास्य प्रशान्त्यर्थ कुरु देवि! सुरार्च्चिते ॥ ५४

एतावनास्त्रबध्यौ तु नापि पुभि कदाचन।
त्व च वीर्यबले भद्रे पादाभ्या मर्दयस्व तौ ॥ ५५

भवन्तु त्रिदशा स्वस्थास्त्वत् प्रसादादनिन्दिते।
सुख चरन्तु ते गावस्तपस्यन्तु तपोधना ५६

यजन्तु द्विजमुख्यास्ते त्रयीधर्मप्रवर्त्तका ।
लोकपालाऽप्सरो यक्षा सन्तु[3] आम्नाय सस्थिता ॥ ५७

युष्मत् पादाब्जमाश्रित्य सुख स्वपितु वासव.।
ग्रहनक्षत्रताराद्या भूतग्रामाश्चतुर्विधा॰॥ ५८

---

1 $B_2$—ब्रह्मद्विष्टावधार्मिकौ।

2 $B_2$—न सीदति।

3 $A_2$, C—सभ्या।

त्वत्तो जगच्च सभूत त्वत्तो नान्या गति प्रिये ।
उत्पत्तिस्थितिसहारा वर्त्तते त्वयि सर्वदा ॥ ५६

ऋते भवत्या जगत परित्राता न विद्यते ।
कृत्यमेव तदेव भो ! दैत्यासुर-निसूदनि[1] ॥ ६०

विष्णुस्त्वमसि हे शान्ते ! त्व विभुर्ब्रह्मण शिव ।
त्वमोकार-वषट्कारौ गायत्री-प्रणवान्विता ॥ ६१

सावित्री प्रसवित्री च सन्ध्या देवी सरस्वती ।
लक्ष्मीस्तुष्टि क्षमा शान्तिर्मेधा मङ्गलदायिनी[2] ॥ ६२

वरण्ये वरदे देवि ! सुरसिद्धार्त्तनाशिनि ! ।
विद्याधरवराध्यक्षे ! ब्रह्मविष्णुशिवार्च्चिते ॥ ६३

प्रसीद त्व जगन्मातर्निष्कले ब्रह्मवादिनि ! ।
योगिनी योगसिद्धा त्व संग्रामे विजयप्रदा ॥ ६४

दुर्गे ! सकलपापघ्ने व्यवहार-जयप्रदा ।
जले स्थले च पाताले त्रैलोक्ये सचराचरे ॥ ६५

स्थूले सूक्ष्मे विरूपे वा रूप अद्भुत गोचरे ।
त्रात्रारमन्य पश्यामि त्वदृते नाऽतिपापिनाम् ॥ ६६

तेजस्वि प्रस्थिते देवि[3] ! सिद्धान्त प्रभवाव्यये ।
बलिमासप्रिये नित्य सूर्य आपूर्यदर्शने ॥ ६७

क्षेत्रे क्षेत्रक्षितीशाना ऋग्-यजु -साम-भूषिते ।
आर्या कात्यायनी गौरी त्वा वदन्ति मनीषिण ॥ ६८

आदिसर्गेऽपवर्गे त्व त्वत्त कारण कारणा ।
सभवन्ति प्रलीयन्ते त्वयि ब्रह्म जगत्रयम् ॥ ६९

लीलया व्यवहारेण परिणामविवर्जिते ।
त्रायस्व विवुधान् भूय' कालत्रय नमस्कृते ॥ ७०

सहस्रयुगपर्यन्त नान्त तव विदु सुरा ।
त्रिनेत्राभिहित स्तोत्र प्रोवाच प्रहसन् शिव ॥ ७१

---

1 $A_2$—कृत्यमेव तदैवेद भो ! दैत्यासुर-निसूदनि, V—त्वयमेव तवेद भो दैत्यासुरनिसूदनि ।

2 $B_2$—मङ्गलधारिणी, V—मङ्गलध्यायि च ।

3 $B_2$—तेजस्विनि स्थिते देवि ।

प्रीतिमुद् वहती देवी तथेत्याह हिमाद्रिजा ।
गोपालिनीस्तवमिम शिववक्त्राद् विनिर्गतम् ॥ ७२

पुण्य पवित्रमतुल सर्वकामफलप्रदम् ।
गोपालिनीसहायेन स्तवेन सिध्यतीप्सितम् ॥ ७३

स्तव च गोपदम्पत्योर्य पठेत् शिवसन्धिनौ ।
स याति शिवसालोक्य भुनक्त्यक्षयक फलम् ॥ ७४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया तृतीयेऽशे देव्या सम्बोधन नाम पञ्चत्रिंशोऽध्याय[3] ॥

---

3. $B_2$, V ·· ··तृतीयेऽशे देव्या. सम्बोधन नाम तृतीयोऽध्याय$_2$ ।

# षट्त्रिंशोऽध्यायः

## ब्रह्मोवाच

गिरिराजसुता हृष्टा शिवेन[1] प्रतिबोधिता ।
जगाम पुष्पमाहर्त्तु स्वर्णकूट लताकुलम् ॥ १

चित्र काननपुष्पाढ्य[2] विचिन्बन्ती इतस्तत ।
सुचिर रमणीय[3] त कैलासशिखरोपमम् ॥ २

अथासुरकुमारौ तौ दृष्ट्वा हैमवती तदा ।
उत्फुल्लनयनौ भूत्वा रोमाञ्चिततनूरुहौ ॥ ३

अन्योन्यमभिलाषेते ईक्षमाणौ समुत्सुकै ।
इग बालमृगाक्षी स्यात्त्रैलोक्यमदमोहिनी ॥ ४

शिवार्च्चनैकचित्तेय स्वर्गलोकादिहागता ।
पश्य वास ! महापाङ्गी[4] नष्टकामप्रदायिनीम् ॥ ५

नीलरक्ताशुका वामा पीनश्रोणिपयोधराम् ।
मनोन्मादकरी सौम्यामस्मत् प्राणाधिका प्रियाम् ॥ ६

अन्योन्यमुक्त्वा[5] ययतु कामोपहतचेतसौ ।
उपसगम्य तौ दृष्टौ कृतान्तवशमोहितौ ॥ ७

आसाद्य मृत्युमासन्नौ सव्यदक्षिणसस्थितौ ।
उचतुर्वचन देवी माधुर्य कामपीडितौ ॥ ८

स्वागत ते वरारोहे ! दृष्ट्वा प्रीति प्रवर्धते ।
अतीव शोभा मे[6] सुभ्रु त्वयि दीर्घो मनोरथ ॥ ९

---

1 $A_2$, V – देवेन ।

2 $A_2$, $B_2$, V—चित्रकाननपुष्पाढ्य ।

3 V—रसगायन्त ।

4 $B_2$, V—मदापाङ्गी ।

5. $A_2$—अन्येवमुक्त्वा, $B_2$—तामेवमुक्त्वा, V—तावेवमुक्त्वा ।

6. $B_2$—ते ।

किं न भाषसि कान्ते त्व किं न पश्यसि सीदतौ ।
अयि स्वस्ति गवा गोष्ठे धन्योऽसौ तव भर्तृक ॥ १०

व्याजहारतुरेतौ तावेवमादिवचो बहु ।
नोवाच शशिभृत् कान्ता किंचिदौदार्यमाश्रिता ॥ ११

विहस्य चलितापाङ्गी ईक्षमाणा सुकर्कशौ[1] ।
पर्यक्रामत सा सुभ्रु पुरत कतिचित् पदान् ॥ १२

अनुवव्रजतुस्तौ तु व्रजन्ती लोकसुन्दरीम् ।
कन्दर्पवशमापन्नौ न जानीतोऽन्तक स्वकम् ॥ १३

ऊचतु पुरतस्तस्मात्प्रागल्भ्यमिव सस्मितौ ।
पिवन्ताविव नेत्राभ्यामतृप्यन्तावरिन्दमौ ॥ १४

कामवारानिधौ मग्नौ मोहसिहमुखालयौ ।
सोत्कण्ठितौ[2] गिरा प्रीत्या[3] अभ्यर्थेता पदे पदे ॥ १५

कामाग्निदीपितौ देहौ दु सहौ प्राणहारिणौ ।
आत्मदानप्रकर्षेण शमयस्व वरानने ! ॥ १६

सानुरक्तौ सुस्निग्धौ च भजमानौ भजस्व नौ ।
ददावो वर कल्याणि ! हेमरत्नादिक वसु ॥ १७

विचित्रसदन हार दासी-दासाङ्गवाहनम् ।
दास्यावावा[4] भविष्याव सर्वभावेन सुन्दरि ! ॥ १८

मीनध्वजशरैर्गाढैर्भिन्नकायान्तरौ मृतौ[5] ।
परिष्वङ्ग-प्रदानेन विशल्यौ कुरु नौ शुभे ! ॥ १९

दयाभूतासि[6] भीरु त्व प्राणिनो यस्य कस्यचित् ।
रक्षावामरविन्दाक्षि ! रतिमात्र प्रयच्छ भो ! ॥ २०

---

1 $B_2$, V—सकर्कशा ।

2 $A_2$, C—सोत्कर्णता

3 V—प्रिया ।

4 $B_2$—दास्यावत्स्वा ।

5 $B_2$, V—मीनध्वजशरैर्गाढैर्भीत्वा कायान्तर मृतौ ।

6 $B_2$, V—दयाभूश्चासि ।

अनङ्गवशमापन्नावमृताक्षरभाषिणौ ।
दिशमालोक्य सा तन्वी प्राहमन् मधुर शनै ॥ २१
स्मृत्वा देवस्य निर्द्देश निजगादाय तावुभौ ।
गोपालवनिता चाह वने जाता वनेचरा ॥ २२
अविज्ञ-रतिशास्त्राह स्वाचारनिरता सदा ।
शृणुत समय चेम श्रद्धास्ति भवतोर्यदि ॥ २३
शीर्षण च इमौ पादौ यो मे धृत्वा विभत्त्युत ।
उद्वहेद् वा धृतौ स्कन्धे वक्ष पृष्ठेन वापि य ॥ २४
तस्याह तु प्रिया नित्य भवेय नात्र सशय ।
एव न कुलधर्मोक्त स्वाभाविक्रमनुत्तमम् ॥ २५
श्रुत्वार्योक्त[1] वचस्तौ तु सहृष्टौ दृमिलात्मजौ ।
शक्तिभूतौ सदा वीरौ पश्यन्ति दिवि देवता ॥ २६
गन्धर्वा मुनयो यक्षा सिद्धविद्याधरोरगा ।
महादेवो गणैर्वृ त्त स्कन्दनन्दिवृतो वभौ ॥ २७
निवृत्तौ प्रथमानौतावसुरेन्द्रसुतावुभौ ।
विनीतादिव मातङ्गो कामदेवेषु पीडितौ ॥ २८
सव्येन वास पादेन कीर्ति वै दक्षिणेन च ।
स्पर्शयामास तौ पद्भ्यामारुरोह तथा तथा[2] ॥ २९
पुरा मन्दरपृष्ठे च यत्सुख तदवाप सा ।
अतिमूर्त्तिधरा[3] दुर्गा कृष्णाम्बुद-तडित्पभा ॥ ३०
कृतकृत्यो तदा दैत्यौ पादस्पर्शनजै सुखै ।
उद्वहन्त मनोदध्रे हर्त्तुकामावरिन्दमौ ॥ ३१
न शशाक गुरु वोढु पतत स्म महीतले ।
गतासू इव तौ दैत्यावञ्जनाचलसनिभौ ॥ ३२
विक्रोशन्त प्रणादन्त विस्फुरन्त स्वशक्तित ।
दुर्द्धर सहसा तौ तु पादेनाक्रम्य पार्वती ॥ ३३
विदार्य सहसा कीर्त्ति विवेश चरणासन[4] ।
वासदेह पिपेशाशु मज्जास्थिशोणितै सह ॥ ३४

1 $B_2$—तस्य ।

2 $B_2$, V—यथा यथा ।

3 $B_2$—उग्रमूर्त्तिधरा ।

4 $A_2$, C—चरणाशनि ।

वास विनिहन दृष्ट्वा कीर्त्तिरेव ननाद च ।
अपि यातु[1] तमिच्छन्त वबन्ध चरणेन सा ॥ ३५

अघ्रिणाशनिवद्धेन विस्फूर्जन्त मुहुर्मुहु[3] ।
क्रीडित्वा सुचिर तेन बालक्रीडनकैरिव ॥ ३६

हेलयान्दोलित कृत्वा पादेनैकेन पोथयेत् ।
पपात सहसा चासावसूरो[2] द्रुमिलात्मज ॥ ३७

पदानिहतनिर्भग्न प्रकीर्ण इव पर्वत ।
प्रस्रवो धातुनिर्यासो गतासुरसुरोत्तम ॥ ३८

चरणाक्षेप-निर्भिन्ना प्रचकम्पे च मेदिनी ।
प्रविष्टावसुरावेतौ प्राणास्त्यक्त्वा रसातलम् ॥ ३९

रुधिरारुण-पादाग्रा देवी कात्यायनी स्थिता ।
मर्दयित्वा तु तौ भीमौ रूपमास्थाय चाद्भुतम् ॥ ४०

प्रलयार्काऽमला[4] घोरा घोरघोरतरानना[5] ।
दुष्प्रेक्षा दु सहा रौद्रा अतिकाया भयानका ॥ ४१

आलोक्य च दिशि सर्वा देवताश्चापि शङ्करम् ।
जगर्ज च महानाद प्रलयाम्भोद घर्घरम् ॥ ४२

अथ देवा महाभीता रूप देव्या भयङ्करम् ।
दृष्ट्वा प्राञ्जलयः सर्वे तामेता स्तुतिमब्रुवन् ॥ ४३

देवा ऊचु

नमो नमस्तेऽस्तु सहस्रनेत्रे
नमो नमस्तेऽस्तु सहस्रपादे ।
नमो नमस्तेऽस्तु सहस्रशीर्षे
नमो नमस्ते जगदात्मरूपे ॥ ४४

---

1 B—अपयात , V—अपयातु ।

2 $B_2$—भूमौ ।

3 $A_2$, C—ध्वान्त ।

4 $B_2$, V—समा ।

5. $B_2$, V—घोराद्घोरतरानना ।

त्वमेव कर्त्री च पिता त्वमेव
त्वमेव मित्र जननी त्वमेव।
त्वमेव साक्षाज्जगता त्रयाणा
त्वमेव नित्या गगनादिरूपे ॥ ४५

त्व वैष्णवी त्व च महेश्वरप्रिया
त्वमेव लोकेषु च कान्तिरूपा[1]।
कीर्त्तिस्त्वमेवाम्ब! क्षमा त्वमेव
दयासि लक्ष्मीरसि सृष्टिगोप्त्री ॥ ४६
शान्तिस्त्वमेवासि च सिद्धिरूपा[2]
ऋद्धिस्त्वमेवाऽम्ब! विनोदयुक्ता।
इद तु यत्तेऽयि विनोदमेव
ब्रह्मासि विष्णुरिपुनाशिनी त्वम् ॥ ४७
त्वत्पादपद्म परिचिन्त्य लोका
स्वस्था भवन्त्याशु युगे युगे च।
ब्रह्मापि सचिन्त्य तव स्वरूप
न वेन किंचिदणुमात्रक च ॥ ४८
नमोनमस्तेऽम्ब! गुणत्रयात्मिके
जगत् प्रसूति स्थितिनाशहेतवे।
अशेष-लोकार्च्चित-पादपङ्कजे
त्वत्तो भवन्त्यब्जविष्णुशङ्करा ॥ ४९
मनोमये प्राणमये मृगेक्षणे
जिह्वामये लोचनगोचरे सदा।
कर्णाऽम्बिके! घ्राणमये शिरोमये
गायत्री रूपासि क्रमात् सरस्वती ॥ ५०
त्रिकालसन्ध्यासि विभो द्विजन्मना
मरुत् स्वरूपासि समुद्ररूपिणी।
स्तोतु समर्थाश्च भवन्ति केऽमरा
माहेश्वरी त्व च दया कुरुष्व न ॥ ५१

---

1 $B_2$—त्रिस्वरुरा, C—कीर्त्तिरूपा।

2. $A_2$, $B_2$, C, V—वृद्धिरूपा।

स्तवेनानेन[1] देवाना तुष्टा देवी तदा वभौ ।
उवाच वचन देवान् प्रीतिसजनन महत् ॥ ५२

### श्रीपार्वत्युवाच

कथयामि महापुण्य मद्वाक्य शृणुतामरा ।
यस्तौत्यनेन स्तोत्रेण तस्य तुष्टा भवाम्यहम् ॥ ५३
शृणु मद्वचन शम्भो ! सदात्र भविता भवान् ।
गोपालोऽनेन रूपेण तथा गोपी भवाम्यहम् ॥ ५४
गोपालिनीति विख्यात गमिष्याम्यत्र सर्वदा ।
आज्ञापय महेशान ! यद्यनुग्रहताऽस्ति मे ॥ ५५
एवमुक्तस्ततो देव्या तथेत्याह त्रिलोचन ।
गोपो यष्टिधरो भूत्वा तत्रास्ते परमेश्वर ॥ ५६
ततश्चासौ तु लोलाक्षी सर्वकामप्रदायिनी ।
गोपालिन्यभवत् काली क्षेत्रेऽस्मिन् अमरार्च्चिता ॥ ५७
अथ देव्यभवत् तुष्टा दृष्ट्वा गोपालमीश्वरम् ।
नित्य त्वा च नमस्यामि रमामि निवसाम्यहम् ॥ ५८
निदेशात् तव देवेश निहितौ दुष्टचारिणौ ।
पद्भ्यामेतावसतुष्टौ[2] मुह्यन्तावसुरात्तमौ ॥ ५९
ह्रदावेतौ च किं नाम एतच्चाप्रावृतौ विभो ।
अत्र स्नातव्य यत् पुण्य यदस्ति वद शङ्कर ! ॥ ६०
श्रुत्वा गोपालिनी वाक्यमिदमूचे पिनाकधृक् ।
देवान् ऋषीन् समायातान् ध्रुव वै धर्मवादिन ॥ ६१
प्रश्नस्य सदृश वाक्य भूतानुग्रहक परम् ।
उदाहृत च त्र्यक्षेण पूर्वमेव यथार्थवत् ॥ ६२
सुराणा समयो ह्येष अनादिकर्मसस्थित[3] ।
विनिपात्य रणे शत्रून् कृपा कार्या तदा ईषत् ॥ ६३

---

1 B2, V—स्तवमानेन ।
2 A2, C, V—पद्भ्यामेतावसूस्तिष्टौ ।
3. B2, V—सस्थिति. ।

देवक्रोधो वरस्तुल्य श्रुतिरेषा पुरातनी ।
आवाभ्या बलसम्पन्नौ पादेन मर्दिताविमौ ॥ ६४

देवीप्रियचिकिर्षार्थं कीर्त्त्यर्थंनिधनस्य च ।
कृत्तिवासेति यन्नाम क्षेत्रे चास्मिन् तदस्तु मे ॥ ६५

एवमस्त्विति ते देवा स्वयम्भू प्रियमानसा ।
मुद लेभे ततो देवी ववन्द चरणौ पते ॥ ६६

पुष्पवृष्टि पपाताथ सुरदुन्दुभिनादिता ।
जगुश्च सिद्धगन्धर्वा ननृतुश्चाप्सरोगणा ॥ ६७

तुष्टवुर्वाग्भिरिष्टाभि सविद्याधरचारणा ।
दिवौकस स्वय दृष्टा विशङ्का विगतज्वरा ॥ ६८

प्रशान्त क्षेत्रराजोऽसौ निष्कण्टक तपोधना. ।
विरेजिरे दिश सर्वा गन्धासरिद्वुवाह च ॥ ६९

शिवोक्तमुत्तमाख्यान दुर्लभ्य त्रिदशैरपि ।
य एतच्छृणुयाद् भक्त्या सोऽतिरात्रफल लभेत् ॥ ७०

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया तृतीयेऽशे कीर्त्तिवासासुरवधो नाम षट्त्रिशोऽध्याय [1] ॥

1. B₂, V— तृतीयेऽशे कीर्त्तिवासासुरवधो नाम चतुर्थोऽध्यायः ।

# सप्तत्रिंशोऽध्यायः

## ब्रह्मोवाच

अथ देवा मुदाचारा[1] मुनय सशितव्रता ।
अपश्यन्त अदूरे च ह्रदौ पुण्यजलाशयौ ॥ १

चरणाक्षेपनिर्भग्नादुद्भुतौ[2] च महासुरौ ।
द्वावेतौ निहतौ ध्वस्तौ विकृष्य चरणाविमौ ॥ २

सद्यस्तौ सप्रपन्नौ च निर्मलाङ्गवघापहौ ।
देवीपदसमुद्भूतौ हिमकुन्देन्दुनिर्मलौ ॥ ३

स्फटिकामलपृष्ठे च स्वर्णकूटे मनोरमे ।
अम्ब ! ये ते[3] यदा तौ च स्नान चक्रुर्दिवौकस ॥ ४

उपलब्ध्वा[4] शिव चारुपुष्पतोय सुगन्धवत् ।
सुतृप्ता अभवन् सर्वे देवाद्या ऋषिचारणा ॥ ५

स्नात्वा सम्यगुवाचेद पूताः स्मो विरजाखिलम् ।
रेजिरे द्विगुण ते च इष्ट्वा क्रतुशतैर्यथा ॥ ६

अहो तीर्थस्य माहात्म्य ससारार्णवतारकम् ।
नानेन सदृश कश्चित्त्रिषु लोकेषु विद्यते ॥ ७

पुण्यतीर्थवर श्रीमान् देव्या एव महात्मन ।
पदद्वयमिद ख्यात नाम्ना देवीपदेति च ॥ ८

फाल्गुने मासि सप्राप्ते शुक्लपक्षे यदाष्टमी ।
स्नात्वा देवीपदे सम्यक् पदपीठ तथार्च्चनम् ॥ ९

---

1. $B_2$—मुदायुक्ता ।
2. $B_2$—चरणन्यासनिर्भग्नावभूतौ, V—चरणन्यासनिर्भग्नादुद्भूतौ ।
3. $A_2$, $B_2$—अम्लायेते ।
4. $B_2$—उपलभ्य ।

कृत्तिवास नान्यमना गोपाली नियत शुचि ।
गन्धै पुष्पैस्तथा दीपैर्धूपैर्नैवेद्यकैरपि ।। १०
कृत्वा विभवत पूजा सम्यक् श्रद्धासमन्वित ।
अष्टाङ्गप्रणिपातेन स्तोत्रेण विविधेन च ।। ११
अर्च्चयित्वा तु गोपाली ता देवी भूतकामवान् ।
नक्तभोजी भवेत् प्राज्ञस्तैलक्षार[1]विवर्जित ।। १२
श्व प्रभाते[2] पुन स्नान कृत्वा देवीपदद्वये ।
तथैव पूजा देवाय देवी चापि यथोदिताम् ।। १३
स्वशक्त्या देवमुद्दिश्य दद्याद् दान द्विजन्मने ।
कुमारी भोजयेद् भक्त्या विधानेन समासत ।। १४
नरो वा यदि वा नारी प्राप्नुयात् परमा गतिम् ।
अधनो धनमाप्नोति अपुत्र पुत्रमाप्नुयात् ।। १५
पुत्रपौत्रसमृद्धात्मा इहलोके परत्र च ।
अप्सरोभि समाजुष्टो भोग भुक्ते न सशय ।। १६
शिवतन्त्रे[4] व्रतश्रेष्ठमस्मिन् क्षेत्र[5] उदाहृतम् ।
सर्वाघनाशन पुण्य महत् स्वस्त्ययन परम् ।। १७
गोपालको हरश्चैव गोपी च परमेश्वरी ।
तेनैव रूपमुख्येन मूर्त्तिभेदेन सस्थितौ ।। १८
पूजित प्रीतिमभ्येति ददाति विपुल फलम् ।
तमीश्वर प्रपूज्याशु इम मन्त्रमुदीरयेत् ।। १९
"ॐ गोप्ता विश्वधातार गोपतिर्गोहिते रत ।
त्रिषु गोश्रवणाभोग भूतभव्य भवत् प्रभो ।। २०
गौरी गोपी श्रियाकान्त कान्तार निलय यश[6] ।
नमस्ये त्वा विरूपाक्ष गोपवेशधर शिवम्" ।। २१

---

1. $B_2$—क्षौर ।
2 $A_2$, $B_2$—सुप्रभाते ।
3 $B_2$ अरोगि च सुखी भवेत् ।
4. $B_2$—शिवक्षेत्रे ।
5 $B_2$ क्षेत्रे ।
6. $B_2$—गौरी गोपीप्रिया कान्ता कान्तारनिलया जया ।

अनेन मन्त्रयोगेन भावेनैकेन योऽर्च्चयेत् ।
स लभेत् शाश्वतान् भोगान् इह प्रेत्य सुखी भवेत् ॥ २२

नमस्कारश्च यो देव्या व्रताचारे[1] च मे शृणु ।
सन्तोष जनयेत् तस्या सर्वार्थप्रतिपादकम् ॥ २३

जयत्वार्या जया जेया निशुम्भासुरघातिनी ।
दैत्येन्द्रमर्दिनी देवी कीर्तिप्राणापहारिणी ॥ २४

वासस्यासृग् विलिप्ताङ्गी स्वर्णकूटनिवासिनी ।
स्वेच्छाविहारिणी देवि ! गोपालिनि! नमोऽस्तु ते ॥ २५

गङ्गाधरार्धवासिन्यै गौर्यै! गीतप्रिये ! शिवे ! ।
लोकधात्र्ये सुरारिघ्ने गोपालिन्यै नमो नम ॥ २६

एव य सतत मन्त्र देव्यास्तु पुरतो जपेत् ।
स दीर्घमायुराप्नोति दुरित तस्य नश्यति ॥ २७

गोपालिन्या प्रसादेन सगामे विजयिष्यति ।
वैश्यस्तु धनमाप्नोति ब्राह्मणो वेदपारग ॥ २८

एतत् पुण्य पापहर मुनीना प्रीतिवर्द्धनम् ।
ब्रह्मवाक्य सुसश्लिष्ट सद्भिराचरित शुभम् ॥ २९

विद्वद्भिश्चरित श्राव्य भवानीशिवयोरिदम् ।
धन्य यशस्यमायुष्य मेधाजननमुत्तमम् ॥ ३०

पुराणमनघ शस्त स्मृतिमात्राघहारि च ।
अत. पर जगन्मात किमन्यत् श्रोतुमिच्छसि ॥ ३१

इत्येकाम्रपुराणे षट् साहास्त्र्यामैश्वर्यां सहिताया तृतीयेऽशे देवीपादद्वयोर्माहात्म्य नाम सप्तत्रिशोऽध्याय.[2] ।

---

1 $B_2$—व्रताचार ।

2 $B_2$, V—तृतीयेंऽशे देवीपादद्वयमाहात्म्य नाम पञ्चमोऽध्याय' ।

# अष्टत्रिंशोऽध्यायः

## सनत्कुमार उवाच

तमुवाच स्मित वाक्यं[1] हर्षोत्फुल्लविलोचना ।
सनातनमिद ज्ञात चरित शङ्करस्य च ॥ १

अस्मदीय पुरावृत्त क्षेत्रे क्षेत्रवता वर ।
प्रीतिरभ्यधिका मेऽस्मिन्[2] स्मारितोऽसि[3] पितामह ॥ २

शृण्वन्ती न हि तृप्यामि आजन्मचरित हि मे ।
अतीव ज्ञानसम्पन्न भो ! ब्रह्मस्त्वयि वर्त्तते ॥ ३

अनागतविधात्रे च ज्ञानमूर्त्तिस्वरूपिणे[4] ।
सर्वशास्त्रप्रवक्त्रे च प्रजाना पतये नम ॥ ४

पुण्यक्षेत्रे शिवे देशे स्वर्णकूटे हराश्रमे ।
यत् किंचिदस्ति-सान्निध्य श्रोतुमिच्छामि पद्मज ! ॥ ५

एव देव्या वच श्रुत्वा व्याजहार पितामह ।
ऋषयस्त च वीक्ष्यन्ते श्रवणीकृतमानसा ॥ ६

ज्ञात्वा भक्तिमृषीणा स परमा परमेश्वरे ।
मुहूर्त्त ध्यानमास्थाय पुनराह यथार्थवित् ॥ ७

अष्टौ जलधरा (?) प्राज्ञा सिद्धकामाः शतक्रतुम् ।
ऊचु प्राञ्जलय· सर्वे पर्जन्योद्भुतविक्रमा ॥ ८

एकाम्रक गमिष्याम पूजयामो महेश्वरम् ।
तीर्थे बिन्दुह्रदेऽस्माभि स्नातव्य त्वदनुज्ञया ॥ ९

---

1 B₂—कृत्वा ।

2 B₂—चास्मान् ।

3 B₂—स्मारितोऽस्मि ।

4. B₂—प्रजानां पतये नम ।

यत्तत्र क्रियते कर्म यत् किंचित् सुकृत कृतम् ।
तदक्षयफल लोके प्रवदन्ति मनीषिण ॥ १०

वयमिच्छामहे कर्त्तु प्रासाद च शिवालयम् ।
नियोगात्तव देवेन्द्र दीयता वरमिप्सितम् ॥ ११

वृत्रहा तानुवाचेद व्रजताशु वलाहका ।
कुरुताऽभिता धर्मम चिराद धर्मबुद्धय ॥ १२

वृत्रघ्न शासन प्राप्य सार्द्ध वै विश्वकर्मणा ।
आनन्दमनसो भूत्वा वव्रजु सवनोत्तमम् ॥ १३

आसाद्य ह्यतुल क्षेत्रं महालय-परिणतम् ।
समन्ताद् विधिदृष्टेन यत्नवन्तो वलाहका ॥ १४

कल्पवृक्षाददूरेण धेन्वन्तरसहस्रके ।
साधिके सप्तशतके ऐशानी दिशमाश्रिते ॥ १५

सुवेश्म रचयामासुर्धौतामलशिलातलम् ।
ऊचुस्ते विश्वकर्माणि अस्माक कुरुतेप्सितम् ॥ १६

शैलान् पाषाणमानीय विश्वकर्मा स्वय तदा ।
चक्रे सुरुचिर तुङ्गं प्रासाद सुमनोहरम् ॥ १७

प्रमाण विपुल दिव्यं सर्वावयवसयुतम् ।
परिखातोरणायुक्तं सकुण्ड च सगोपुरम् ॥ १८

प्रतिष्ठा तत्र विधिना शिवतन्त्रविदस्तु ते ।
चक्रुस्ते सुधियो मघा सर्वकर्मसुपण्डिता ॥ १९

पर्जन्याप्लावनौ चैव अञ्जनो वामनस्तथा ।
सम्बर्तश्च तथा द्रोणो जीमूतश्चाभिर्षण [1] ॥ २०

अष्टैते तोयदा ख्याता आधिपत्याभिवृष्टय ।
समन्तात् सदृशाक्रान्ता [2] शक्रस्य वशवर्त्तिन ॥ २१

समयैनाभिवर्त्तन्ते सत्यवन्तो घनास्तु ते ।
दानार्च्चनतपोयज्ञैस्तोषयामासुरीश्वरम् ॥ २२

---

1 B₂, V—अतिमर्षेण ।
2. समुद्रसदृशा क्रान्ता ।

तुतोष भगवान् भग सान्निध्यमभवत्[1] स्वयम् ।
वरदोऽहमिति प्राह वर वरयतार्थंत ।। २३
ततो वलाहका हृष्टा ऊचु प्राञ्जलयस्तु तम् ।
यदि प्रसन्नो भगवन् ! यद्यनुग्रहतास्ति न ।। २४
प्रासाद सुप्रतिष्ठोऽयमस्मभि परमेश्वर ! ।
अत्र शम्भो महेशान भवान् सान्निध्यमर्हति ।। २५
अथोवाच प्रसन्नात्मा मेघान् सर्वान् स ईश्वर ।
मेघेश्वरो ह्यह चात्र नाम्ना त्रिषु निगद्यते ।। २६
अधिष्ठानो मदीयोऽय क्षेत्रे प्रवरभोगद ।
अस्मत् प्रीतिप्रदो नित्य ह्लदोऽय विमलोदक ।। २७
अष्टायतनमुख्योऽयमृषीणा प्रीतिवर्द्धन ।
सर्वपापविनाशस्तु कामद परिचक्षते ।। २८
सन्ध्या स्नात्वा तथा पिण्डै सतर्प्य पितृदेवता[2] ।
फल चाक्षयमाप्नोति इह प्रेत्य सुखावहम् ।। २९
देवान् ऋषीन् पुनात्येव ये केचिद् भुवि सस्थिता. ।
तारक परमो ह्येष ससारार्णवपद्धते ।। ३०
सर्वारम्भा प्रसिध्यन्ति भाजन सर्ववस्तुषु ।
मेघेश्वर शिव साक्षाल्लिङ्गमूर्त्तौ व्यवस्थित ।। ३१
इति श्रुत्वा[3] नमस्कृत्वा ययुर्मेघास्त्रिपिष्टपम् ।
प्रसन्ने च विरूपाक्षे कामरूपा वलाहका ।। ३२
विचरन्ति यथाकाले ऋतुभावानुसारिण ।
प्रजाना हितमत्यर्थं प्रयच्छन्ति च जीवनम् ।। ३३
श्रृण्वन् अपीद माहात्म्य पठन्नेव स्मरस्तथा ।
दीर्घमायुरवाप्नोति मेघेशस्य[4] प्रसादत ।। ३४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया तृतीयेऽशे मेघेश्वर-माहात्म्य नामाष्टत्रिंशोऽध्याय[5] ।।

---

1. $B_2$—सान्निध्यमगमत् ।
2 $B_2$—स्नान दान च पिण्ड च यत्नेन पितृदेवता ;
V. सन्ध्या स्नान तथा पिण्ड यत्नेन पितृदेवता ।
3 $B_2$—स्तुत्वा ।
4 $B_2$, V—मेघेश्वर ।
5. $B_2$, V— तृतीयऽशे मेघेश्वरमाहात्म्य नाम षष्ठोऽध्याय ।।

# ऊनचत्वारिंशोऽध्यायः

ब्रह्मोवाच

अथापर निबोधेद पापनाशनसञ्ज्ञितम् ।
पुरा कृतयुगे वृत्त पुराण च तप फलम् ।। १

पूर्वं ब्रह्मसुत श्रीमान् विद्योतस्नापस[1] स्मृत ।
मानस पूर्वतो विप्र सप्तर्षि प्रवर प्रभु ।। २

दायादस्तस्य मेधावी वेदवेदाङ्गपारग ।
सुज्योतिस्तापसो नाम ज्योतिषा सत्यविक्रम् ।। ३

शान्तो दान्तस्तपस्वी च जितक्रोधो जितात्मवान् ।
अहिंस्र्य सर्वसपन्नो[2] दयादानक्रियापर[3] ।। ४

ससारभयभीतस्तु शुचि परमधार्मिक ।
तपस्वी नियताहारो वन्यमूलफलाशन ।। ५

चचार पृथिवी कृत्स्ना सशैलवनकाननाम् ।
पुण्यान् देशान् शिवास्तीर्थान् सिद्धाश्रमपदान् बहून् ।। ६

पर्यटन् बहुधा दृष्ट क्षेत्र परमपावनम् ।
स्वर्णकूट गिरिश्रेष्ठ नानाद्रुमलतायुतम् । ७

एकोनकोटिशम्भुश्च देवैर्जुष्टान् प्रतिष्ठितान् ।
महाप्रासादरुचिरास्तुङ्गतोरणमालिन ।। ८

शिवधाम्नि महाक्षेत्रे पर सन्तोषमाप स ।
वास्तव्य चात्र सकल्प्य तपोनिष्ठापरायण ।। ९

व्रतोपवासनियमैर्जपैर्होमैरतन्द्रित ।
स्नपन चार्च्चन चैव नमस्कारमहर्निशम् ।। १०

---

1 $B_2$—विद्योतितापस , V—विद्योतिस्तापस ।

2 $B_2$, V—सत्वसपन्नो ।

3, $B_1$, C—दयावान् स क्रियापर ।

अभ्रावकाशे[1] सुचिर वायुपर्णाम्बुभोजनम् ।
शीतोष्णसुखदु खेषु सहिष्णुर्दृढचेतस ।। ११

सहस्राब्दसहस्रैकमुपविश्यासने मुनि ।
मौनी सयमसपन्न स्थाणुभूतोऽप्यचेतन ।। १२

विदित्वा च तपस्तस्य मुनेस्तीर्थगतस्य च ।
दर्शयामास आत्मान प्रीतो गङ्गाधर स्वयम् ।। १३

उवाच मेघगम्भीर स्निग्धमाधुर्यपुष्कलम् ।
वर वृणीष्व भद्र ते वरदोऽहमिहागत ।। १४

न शृणोति न बुध्येत्स वामदेववचस्तदा ।
गतासुश्चिरनिश्चेष्टो[2] निष्प्रकम्प इवाचल ।। १५

ददर्श पुरतो देव शशाङ्ककृतशेखरम् ।
नमश्चक्रे स शिरसा तमष्टाङ्गेन भूगत ।। १६

हर्षगद्गदया[3] वाचा प्राहेद परमेश्वरम् ।
कृपास्ते यदि मे देव प्रसन्नो भगवान् यदि ।। १७

सर्वभूतहितार्थाय किंचिदिच्छामि कीर्त्तितुम् ।
अस्मिन् क्षेत्रे जगन्नाथ ह्रद[4] च मम पावनम् ।। १८

इह प्रेत्य भयोत्साद तारण परम शिवम् ।
पापापनोदनं शस्त महापातकिनामपि ।। १९

स्वर्गद सुखद मेध्य महामखसमोदकम् ।
शङ्करस्तमुवाचेद द्विज सत्वहिते रतम् ।। २०

उत्तिष्ठोत्तिष्ठ विप्रेन्द्र ! प्राप्स्यसे त्वभिवाञ्छितम् ।
तपसस्ते प्रभावेन मत्प्रसादात् महामुने ।। २१

आज्ञासिद्धिमिमा पश्य गिरौ पुष्करिणी शिवाम् ।
गम्भीरा विपुला शुभ्रा स्वच्छतोयामकर्द्दमाम् ।। २२

---

1. V—अन्तावकाशे ।
2. $B_2$—गतासुरिवनिश्चेष्टो ।
3. $A_1$, $B_1$, C—तत्र ।
4. $B_2$—दढ ।

मनोज्ञा चारुमत्यर्थं सौरभ्यामतिपाविनीम् ।
भिन्नेन्द्रनीलसदशी सोपानपदपत्रिकाम् ॥ २३

सुसचारमुपासङ्गा वेणुकाननमध्यगाम् ।
गुल्म कीचकवेणुना समन्तात् परिवारिताम् ॥ २४

दुष्प्रवेश्या दुरासाद्या तपोगम्या निरामयाम् ।
गुप्ता अत्यन्तसश्लिष्टा देवीमायासमन्विताम् ॥ २५

देवनाभिहिता साक्षाद् भद्रा पापविनाशिनीम् ।
तामपश्यदसौ विप्रस्नरक्षणात् पापनाशिनीम् ॥ २६

हर्षेण महताविष्टो रोमाञ्चित दुरासद ।
आनन्दाश्रुजले प्लुत्य सुज्योतिस्तापसस्तदा ॥ २७

पाणि कुड्मलमावध्बा जानुमारोप्य मेदिनीम् ।
तद्गतस्तन्मोबुद्धिर्बन्धुरीकृत कन्दर ।
जय पूर्वेण साङ्गेन देव स्तोत्रमथाब्रवीत् ॥ २८

जय त्व विदिताशेष ! जय कामाङ्गनाशन ! ।
जय देव ! जगत्पूज्य ! जयलोकवरप्रद ! ॥ २९

जयाचिन्त्य ! जगद्धाम ! जयादिपुरुषेश्वर ! ।
जयानेक महादेव जन्ममृत्युजरापह ॥ ३०

शब्दस्पर्शरसातीत जय ध्वस्ततमोरज ।
जय निर्गुण भूतात्मन् जय देव जगद्गुरो ॥ ३१

जयेश गगनव्यापिन् जय त्रिदशनायक ।
जय ब्रह्मेन्द्रवन्द्येश जय योगेश्वरेश्वर ॥ ३२

पञ्चानन चारुविभूतिभूषित
नागेन्द्रहार मणिकुण्डलान्वितम् ।
वामेन शैलेन्द्रसुतासमाश्रित
शिव भजे पार्वती वल्लभ हरम् ॥ ३३

त्रिलोचन स्निग्धशरद्घनोपम
द्विपेन्द्रचर्मांशुकधारिण प्रभुम् ।
नागोपवीत वृषभेन्द्रकेतन
शिव भजे पार्वतीवल्लभ हरम् ॥ ३४

क्षितिस्वरूप मदनाङ्गनाशन
पिनाकिन दक्षमखप्रभेदनम् ।
अघौघशुष्केन्धन जातवेदस
शिव भजे पार्वतीवल्लभ हरम् ॥ ३५

सुरापगाधौत-जटामनोहर
नितान्त चन्द्रार्धं-कपोलशोभितम् ।
सिद्धेन्द्रवृन्दै परिवारित मृड
शिव भजे पार्वतीवल्लभ हरम् ॥ ३६

तापत्रयासक्तजनाभिरक्षक
वाणप्रिय नृत्यविशारद भवम् ।
युगावसाने किल भीमदर्शन
शिव भजे पार्वतीवल्लभ हरम् ॥ ३७

सर्वात्मक सर्वगत पुरद्विष
सर्वेश्वर जन्मजराभिमर्दनम् ।
तेजोमय सर्वगुणाश्रय विभु
शिव भजे पार्वतीवल्लभ हरम् ॥ ३८

भूताधिवास भववन्धमोचक[1]
परात्पर योगबिद पुरातनम् ।
पुरन्दराद्यै सतत कृताच्चंन
शिव भजे पार्वतीवल्लभ हरम् ॥ ३९

अनित्य नित्यात्मकमेव चाध्रुव
पर च सूक्ष्म च विविक्तसेविनम् ।
अज महाभूतनिदानमीश्वर
शिव भजे पार्वतीवल्लभ हरम् ॥ ४०

स्तोत्रावसाने मदनाङ्गनाशन
प्रादुर्बभूवाथ मुने पुरः स्वयम् ।
उवाच वाणी सकलार्थदायिनी
शृणुष्व विद्योतित सुष्टु मद् वच[2] ॥ ४१

---

1 B₂, V—भववन्धमोचन।

2 B₂, V—शृणुष्व विद्योत सुताशु मद् वच, ।

तवाष्टक ये मम सन्निधौ सदा
पठन्ति भक्त्या मयि चित्त सस्थिता ।
विदग्धपापा सहसा च ते नरा
ममैव सायुज्यपद प्रयान्ति वै ॥ ४२

गुह्यातिगुह्य बहुपापनाशन
स्तव हि लोकार्त्तिहर धरामरम् ।
हिरण्यगोभूगजवाजिवर्धन
देहावसाने मम लोकदायकम् ॥ ४३

शिवाष्टकमिद पुण्य पावन चिर सञ्चितम् ।
प्रज्ञाशान्तकर स्फीतमशोकविजयप्रदम् ॥ ४४

भूमिलाभ धनापत्य पूजासत्कारभाजनम् ।
विजय सर्वकार्येष पापक्षयकर परम् ॥ ४५

इद दिव्य जल विप्र ! सर्वपापापनोदनम् ।
अत्र स्नात्वा च दत्त्वा[1] च ह्यक्षय फलमश्नुयात् ॥ ४६

देवान् पितृन् मनुष्याश्च ये चान्ये सलिलार्थिन ।
तर्पयित्वा सुखेनैव दिव्य व्रजति वै सुखम् ॥ ४७

ब्रह्मोवाच

मदनारिवच श्रुत्वा द्विज प्रोवाच सस्मित ।
कृतार्थोऽह जगन्नाथ ! पुण्योऽह तव दर्शनात् ॥ ४८

यथा तु भगवन्मेऽभूर्ज्जन्मान्तरशतैरपि ।
तथैवाशेषभूतानामस्त्वय पापनाशन ॥ ४९

अष्टायतनमध्येऽसौ भविष्ये पापनाशन ।
नथेत्याह विरूपाक्षस्तत्रैवान्तरधीयत ॥ ५०

स मुनिस्तप आस्थाय बहून् वारान् जितेन्द्रिय ।
तत्रैव कायमुत्सृज्य जगाम त्रिदिवालयम् ॥ ५१

कुलैकविंशमुधृत्य श्रीमच्छिवपुर तत ।
सुज्योतिस्ताम्रसश्चैव माहात्म्य कथित तव ॥ ५२

अपर शृणु कल्याणि ! कुण्डस्यास्य माहात्म्यकम् ।
वानरी चलिता चैका प्रमादात्सार्थमुज्झिता ॥ ५३

---

1. $B_2$—जप्त्वा ।

विचचार[1] महारण्ये फलतृष्णोपबृंहिता ।
शाखाच्छाखां विलघन्ती ययौ तरुरुहान् क्रमात् ।। ५४

चूतनिम्बकदम्बांश्च कर्णिकास्तिलकामलान् ।
द्राक्षातिन्तिडिकाश्चान्यान् शाल्मलीसर्जभूर्जकान् ।। ५५

प्लवन्ती चाप्लवन्ती च प्राप सा दृढबन्धनम् ।
लतापाशनिबद्धा सा नो शक्ता चलितुं वनात् ।। ५६

विस्फूर्जन्ती यथाशक्त्या विक्रोशन्ती यथातुरा ।
गतासुश्चाभवत् तस्मिन् शुष्कवंशाग्रबन्धने ।। ५७

शाखामृगी मृता तत्र न केनापि च लक्षिता ।
अदृश्ये विजनेऽरण्ये तस्थौ शिरकपालिका[2] ।। ५८

सुचिरात् समीरोद्धूताच्छुष्कपर्णमिवाभवत् ।
पपातास्थि कवन्धश्च तोये पापापनोदने ।। ५९

निकुञ्जेति शिरस्तस्य नापतद् वेणुकास्थितम् ।
वैणवीशूलनिर्भिन्नं स्थितं बहुदिनं पुरा ।। ६०

कायास्थिमात्रं पतितं पवित्रेषु च वारिषु ।
अचिरेणैव कालेन मानुषीत्वमुपागता ।। ६१

दशार्णनृपतेर्गेहे दुहिता वरवर्णिनी ।
चित्रवत्या सुता जाता नाम्ना मित्रवतीति सा ।। ६२

सर्वलक्षणसम्पन्ना सर्वावयवसुन्दरी ।
शाखामृगमुखी सुभ्रूर्ज्ञातीनां चातिवल्लभा ।। ६३

जातिस्मरा कान्तिमती सौभाग्या गुणसम्पदा ।
सा कन्या युवती जाता तदा पितृकुलोषिता ।। ६४

रूपयौवनसम्पन्ना पद्महीनेन्दिरेव सा ।
रक्तोत्पलविहीना वा जातासौ हिमवत्सुता ।। ६५

दृष्ट्वा च माता पितरौ ज्ञातयः सचिवास्तथा ।
तां सर्वे सह समन्त्र्य[3] ददौ काशीश सूनवे ।। ६६

---

1 $B_2$, V—विरराम ।

2 $B_2$, V—सितकपालिका ।

3. $B_2$—ना दातु सहमामन्त्र्य ।

नाम्ना वरुण विख्यातो बलवान् सत्यविक्रम ।
दर्शनीयो विनीतश्च शूर सर्वास्त्रकोविदः ॥ ६७

विद्वान् सर्वकलाभिज्ञ प्रियवादी विचक्षण ।
त लब्ध्वा सा वरारोहा मुमुदे देवपुत्रवत् ॥ ६८

अन्योऽन्यसदृशवेतौ रूपेणाप्रतिमौ भुवि ।
तौ च धर्मपरौ नित्य विधेयौ गुणमाश्रितौ ॥ ६९

मृते पितरि राजाऽसौ वरुणोऽभून्महीतले ।
ब्रह्मज्ञ सुकृतज्ञश्च सर्वभूतहितेरत ॥ ७०

अन्त पुरगतायाश्च रूपयौवन-गर्विता ।
सुशीलाभिरमा सर्वा आचारगुणलक्षणा ॥ ७१

तासा मध्ये च सा श्रेष्ठा शीलेन विनयेन च ।
रञ्जयामास भर्त्तार सौभाग्यातीव हर्षदा ॥ ७२

सचिवान् पौरजान् श्रेणीन् ससखी प्रणिपत्य च ।
उवाच सुचिराद् देवी भर्त्तार भक्तवत्सलम् ॥ ७३

त्वत्त कृता मे भोगा ये सुरैरपि च दुर्लभाः ।
धर्ममिच्छाम्यह कर्त्तु मन्नदान द्विजातये ॥ ७४

इमा मे मनस प्रीतिं नाथ त्व कर्त्तुमर्हसि ।
स तथा त्वकरोद्राजा हयनिवारित-भोजनम् ॥ ७५

भुक्त्वा[1] चैव महासत्रे कथयित्वा व्रजन्ति ते ।
यस्माद्देशादिहायाता आशीर्वाद ददाति ते ॥ ७६

एव दशसम सत्रमविच्छिन्न अहर्निशम् ।
एकोऽप्याह द्विज. कश्चिद् देशमुत्कल-सज्ञकम्[2] ॥ ७७

रक्षिणश्च इद श्रुत्वा मित्रवत्यैऽन्ववेदयन् ।
शृणु देवि ! वचोऽस्माकमेकोऽप्यागतको द्विज ॥ ७८

एष देवि ! द्विज प्राह स्वर्णकूटाद्रिशेखरात् ।
आयातोऽस्मि यश श्रुत्वा भवत्या प्रतिपादितम् ॥ ७९

---

1 B—भुक्ता ।

2 $B_2$—उत्कल देशस ज्ञितम् ।

त ददर्श[1] विशालाक्षी ब्राह्मण प्रत्यपूजयत् ।
पप्रच्छ कुशल तात कस्मादागतवानसि ॥ ८०

स मुनिस्तानुवाचाथ देशादुत्कलसञ्ज्ञकात् ।
यत्रास्ते भगवान् रुद्र स्वर्णकूटाद्रिशेखरे ॥ ८१

एकोनकोटिलिङ्गात्मा वनैकाम्रश्वर प्रभु ।
अष्टमूर्त्तिधर. साक्षादष्टायतनभूषित ॥ ८२

भौमस्वर्ग विजानीहि कृत्तिवासनिकेतनम् ।
धन्याद् धन्यतर क्षेत्र महालयपरिणतम् । ८३

एव द्विज वरस्योक्ति श्रुत्वा मुदितमानसा ।
पूजयामास त विप्र विनयेन धनेन च ॥ ८४

विज्ञप्त पृथिवीपालो देवी त पुनरब्रवीत् ।
गच्छ विप्र मदीय तु कार्य तस्मिन् वने कुरु ॥ ८५

कृत्वा कार्यं मदीय तु यदि त्व पुनरेष्यसि ।
दास्यामि निष्कक स्वर्णं सहस्रवररोहिणीम् ॥ ८६

धान्य व्रीहि यवानन्यानपि ग्रामाश्च पञ्च ते ।
यद्येष्यसि पुनर्विप्र गत्वैकाम्रवन शुभम् ॥ ८७

राजा चाथ द्विज दृष्ट्वा प्रोवाच मधुर स्वरम् ।
प्रत्याहि द्विजशार्द्दूल देव्या तु यदुदाहृतम् ॥ ८८

आगच्छ कृतकार्यस्त्व ददामि मनसेप्सितम् ।
वाढमित्येव विप्रस्तु गन्तु चक्रे मनस्तदा ॥ ८९

ततो देवी तमादाय एकान्तरहसि स्थिता ।
उवाच विप्र! जानासि कृत्तिवासाददूरत ॥ ९०

अष्टायतनमध्ये च प्राधान पापनाशनम् ।
वायव्या दिशि देवस्य षष्टि[2] धेन्वन्तरे स्थितम् ॥ ९१

वेणु कीचक मध्ये च विद्यास्त्व विमल ह्रदम् ।
तत्र पश्यसि कापाल वानरस्य नरस्य वा ॥ ९२

---

1 $B_2$—त दृष्ट्वा च ।

2. $A_2$, V षष्ठि ।

वशाग्र घटनोदग्रं तृणभूमौ जलाद्बहि ।
मृगयित्वा प्रयत्नेन क्षिपस्यम्भसि सत्तम ॥ ९३

एष मे परम काम पूरयस्व मनोरथम् ।
वाढमित्येव स प्राह अग्रजन्मा हसन्निव ॥ ९४

प्रस्थित प्रयत शीघ्र पन्थानमकुतोभयम् ।
दिनक्रमेण सम्प्राप्त कृत्तिवास पुन शिवम् ॥ ९५

विशेषतस्तमुद्वेग क्रमात् पापविनाशनम् ।
पादपाग्रान्निरीक्षेत लतागुल्मान् सकीचकान् ॥ ९६

निम्नोच्च स्थल दुर्गांश्च एकैकाश्च पुन पुन ।
विचरन् विहितो देश यत्नेन परमेण च ॥ ९७

ददर्श स तु कापाल वेणुभिन्न च मध्यगम् ।
आदाय परशु विप्र चिच्छेद स तु पादपम् ॥ ९८

तदादायास्थिशकल पुराण वानरी शिर ।
विक्षिप्त सलिले तस्मिन् पुण्ये पापविनाशने ॥ ९९

क्षिप्तमात्र जले तस्मिन् शिरसि ब्राह्मणेन च ।
मित्रवत्यथ हर्म्यस्था[1] शयनात् प्रातरुत्थिता ॥ १००

अवश्यकरणीयान् सा चकार विधिनोदितान् ।
आदर्शे स्व च पश्यन्ती दिव्यास्य स्फुरिताधरम् ॥ १०१

सन्तोषमगमत् सद्यो लेभे रूपमनुत्तमम् ।
धात्री सखीभिश्चान्यैश्च चक्रे कोलाहलोत्सवः ॥ १०२

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया तृतीयेऽशे पापनाशनमाहात्म्य नामोनचत्वारिंशोऽध्याय[2] ॥

---

1 B₂, V—धर्मात्मा ।

2 B₂, V—तृतीयेऽशे पापनाशनमाहात्म्य नाम सप्तमोऽध्याय. ।

# चत्वारिंशोऽध्यायः

## ब्रह्मोवाच

अथासौ वरुणो राजा सुहृद्भिर्बान्धवैर्वृत ।
वानर्यास्य परित्यक्ता ददर्श महिषी तदा ।। १

पूर्णेन्दु सदृश वक्त्र कान्ताया समुदीक्ष्य च ।
बहुमानेन चाभ्यर्च्चेद् हर्षेणोत्फुल्ललोचन ।। २

हृर्षा वभुवु पौराश्च मन्त्रिण सपुरोधस[1] ।
आश्चर्यमनस सर्वे दृष्ट्वा रूप महोदयम् ।। ३

ततः कतिपयाद् हेतोरेकान्ते रहसि स्थित ।
इदमाह महीपालो मित्रा सुरसुतोपमाम् ।। ४

परिवर्तं[2] कथ कान्ते ! उत्तमाङ्गस्य शस मे ।
नाभ्यभाषाद् असौ तन्वी व्यापृच्छन्तमनेकधा ।। ५

भुक्ते सुप्ते प्रवृद्धे च क्रीडाससिद्धिगोचरे ।
राज्ञी पृच्छति ता तन्वी तत आगतवान् द्विजः ।। ६

तमपश्यत सा मित्रा स पतिश्च[3] द्विजोत्तमम् ।
अनाख्याते च विज्ञातो ब्राह्मणस्य विचेष्टितम् ।। ७

पञ्चग्रामान् ददौ तस्मै शासन त्वग्रमुत्तमम् ।
गजैक पञ्च चाश्वाश्च वस्त्राणि कनकानि च ।। ८

राजा च स्वयमेवैक मित्रा प्रियचिकीर्षया ।
प्रतिपाद्य अशेषास्तान् विप्राय स महीपति ।। ९

पूजयित्वा धनौघेन सर्वोपस्करणै[4] सह ।
पप्रच्छेद अथो राजा केन वा दोषकारणम् ।। १०

---

1 B₂—सपुरोहिता ।
2 B₂—परिवर्त्ति ।
3 B₂—सत्कुलश्च ।
4. C—सर्वोपकरणैः ।

## राजोवाच

क्व गतोऽसौ द्विजश्रेष्ठ कस्मादागतवान् पुन ।
किमिद शोभनास्य त्व प्राप्तासि वरवर्णिनि ॥ ११
अतीव शोभसे देवि वदनेन सुवर्च्चसा[1] ।
अहो व्रतमहो यज्ञ अहो विद्या त्वहो गुरु ॥ १२
सेव्यो हि सतत चैव इहलोके फलप्रद[2] ।
समालक्ष्य[3] विशालाक्षीं सद्भाव परम वच ॥ १३
तदुदाहृतमाकर्ण्य मित्रा प्राह न युज्यते ।
तथापि भवता ज्ञान कर्त्तव्य नात्र सशय ॥ १४
व्यापृच्छत्ता[4] बहून् कालान् भूय प्राह जनेश्वर ।
यथा तथा स्तुता देवि कथा कथय मेऽनघे ॥ १५
भर्त्तु प्रिय चिकीर्षन्ती नोत्तर व्यदधात् क्वचित् ।
दाक्षिण्यात् पुनरुचे सा त्विद शृणु महीपते ॥ १६

## मित्रोवाच

यद्यवश्यमिहाख्येय तव कौतूहल यदि ।
तत्रैव व्रज नाथ त्व निवेद्ये[5] त्वा यथा पुरा ॥ १७
वृत्तान्त निखिल देव यत्रैवमहमीदृशी ।
प्रसीद गमन कार्यं शिवक्षेत्र निरामयम् ॥ १८
तथेत्याह स भूपाल सभृत्यो गमन प्रति ।
पुण्येऽह्नि शिवे योगे ययौ पत्नीसखो नृप ॥ १९
आसाद्य परम क्षेत्र लवणार्णवसन्निधौ ।
स्वर्णाद्रिशिखरे दृष्टोऽसौ गणसेवित ॥ २०

---

1. $B_2$, V—निन्द्यसे सर्वशस्तरा ।
2. $A_2$, C—परत्र च ।
3 $B_2$, V—समाचक्ष्य ।
4 $A_2$, C—व्यापृच्छती, $A_3$—व्यापृच्छन्ता, V—व्यापृच्छन्ति ।
5. $B_2$—न विद्ये ।

गन्धवत्या परिसरे कल्पपादपभूषिते ।
विपुले सुख सञ्चारे सर्वर्तु[1] फलपादपे ।। २१

मत्तभ्रमर-सघृष्टे पुस्कोकिलकुलाकुले ।
नानाविहङ्ग सघृष्टे वासिते सुमनोहरे ।। २२

कृत्तिवासपुरे रम्ये मुनिभि सशितव्रतै ।
नानाधात्वाङ्किते प्रविशन्ति[2] समन्तत ।। २३

कृत्तिवास नमस्कृत्य अष्टमूर्त्तिप्रकाशकम् ।
सर्वपापहर देवमनादि, परमेश्वरम् ।। २४

ब्रह्मे,न्द्रवन्दित ध्येय भुक्ति मुक्ति-प्रदायकम् ।
पापनाशनमासाद्य स्नान चक्रे सपत्निक ।। २५

कारयामास देवाच्चर्ा[3] कुण्डस्यास्य समीपत ।
सम्यक् प्रतिष्ठा चक्रेऽसौ विधिदृष्टेन कर्मणा ।। २६

स्वनाम्नोश्चैव सज्ञार्थ तौ विशापति दम्पती ।
मित्रावरुणसञ्ज्ञेति कीर्त्तिरव्याहताऽभवत् ।। २७

तावुभौ सुसमाधानौ कथा चक्रु पुरातनीम् ।
भर्त्तार कथयामास मित्रा साऽनुभव वच ।। २८

शाखामृगकुले राजन् ! वृक्षावयवजीविनी ।
महेन्द्राचलशृङ्गस्य वने जातास्मि सुव्रत ! ।। २९

यूथचारी मनोन्मादी तत्राह क्षुद्रवानरी ।
स्वजातिचपलभावा फलतृष्णोपवृ हिता ।। ३०

यूथभ्रष्टास्मि दु खार्त्ता विचरन्ती इहागता ।
स्वादुतोय फल चात्र भक्षित सुचिर मया ।। ३१

महावेणुवने व्याप्त चूतद्राक्षासूदुम्बरे ।
सुतूर्ण[4] विचरन्तेका पर्यटन्ती इतस्ततः ।। ३२

---

1 $A_2$, C—सम्वर्त्तं ।

2. $A_2$, C, V—प्रश्रवन्ति ।

3. $A_2$, C—देवेश ।

4. $B_2$—सतृष्ण ।

व्यामोहाद् रभसो चित्ता[1] उत्क्रमन्ती लतान्तरे।
कालपाशसमै पाशैर्बद्धाऽह दृढबन्धनै ।। ३३

विस्फुर्जन्ती यथाशक्त्या नि प्रयत्नस्थिता ह्यहम्।
एव मुक्तेयमेतस्मिन् सहसख्या विशत् स्वयम ।। ३४

राजासौ वरुणश्चैव विवेश विमले जले।
क्रीडन्त्याविव दम्पत्यौ नाभिमात्रजले स्थितौ ।। ३५

तत प्राह हसन् राजा अत ऊर्ध्व प्रचक्ष्य मे[2]।
सा ह्युवाच[3] ततो राज्ञी कुण्डस्यास्य माहात्म्यकम् ।। ३६

लताबन्धे मृताह वै तरो शाखान्तर गता।
चिराद् वेणुतरोस्तस्मात् पपात सलिलाशये ।। ३७

शिरस्त्वत्रैव वृक्षाग्रे[4] भिद्यमान च सस्थितम्।
प्रभावादस्य तोयस्य जाताह राजकन्यका ।। ३८

दशार्णनृपतेर्वेश्मन्यदृश्या च स्वरूपत ।
युष्मद् गुणवती भार्या सहधर्मानुचारिणी ।। ३९

जातिस्मरा कान्तिमती गुणैरन्यैरधिष्ठिता।
नाथ त्रायस्व श्रुत्वेद यन्मा त्व परिपृच्छसि ।। ४०

एव ब्रुवाणा ता मित्रामूर्ध्वदृष्टि-प्रवेशिताम्[5]।
समाश्लिष्य महीपालो निरोधयति बाहूनीम्[6] ।। ४१

विसर्पति चिराद् राजा प्रविशस्तु सशङ्कया।
अङ्कमादाय[7] शीर्यन्ती समाश्वास्येदमब्रवीत् ।। ४२

वरुण उवाच

यस्त्वया प्रहित कान्ते कृत्तिवासा असौ द्विज।
साक्षान्मात्रैव सन्देह सुकार्य कृतवान् मम ।। ४३

---

1 A₂, C—व्यामोहभरसो चित्ता।

2 V—विचक्षणे।

3 B₂, V—साह्योवाच।

4 B₂—शाखाग्रे।

5. B₂, V—प्रवेपती।

6. A₂, C—निषेधयति वाहिनीं।

7. C—राज्ञीमादाय।

दृष्ट्वा देवि ! द्विजमिममानन्द मम मानसम् ।
जायते जलधिश्चन्द्र यथा सपूर्णमण्डलम् ॥ ४४

धन्यमस्य वपुर्देवि ! येनात्र चरते सदा ।
अस्य प्रसादादस्माक कार्यसिद्धिरजायत ॥ ४५

## ब्रह्मोवाच

ततस्तु स्वपतेरेवममृताक्षरभाषिण ।
मित्रा मैत्र वच श्रुत्वा वरुण प्राह सुन्दरी ॥ ४६

द्विजस्यागमन राजन् ! सद्य प्रत्युपकारकम् ।
वशलग्नस्थित शीर्षं यत्नात् विप्र स मामकम् ॥ ४७

कृपया परया चैव आदाय सलिले क्षिपत् ।
क्षिप्तमात्रे शिरे चाह वानरी दिव्यरूपिणी ॥ ४८

प्रत्यक्ष भक्ता ज्ञात परिवृत्तानन यथा ।
तीर्थस्यास्य माहात्म्येन तीर्यग् योनि गति मम ॥ ४९

अस्थि मे पतित येन त्वस्मिन् पुण्यजले नृप ! ।
तेनेय भुज्यते व्युष्टि स्फीताभोगा अनुत्तमा ॥ ५०

जाति स्मरामि राजेन्द्र ! तेनाह चात्र आगता ।
इदानी स्वस्ति सकल्पमह न्यस्य वपुजले[1] ॥ ५१

इति राजा वच श्रुत्वा विसृजन् बलवाहनम् ।
अन्तर्जले कृतो न्यास सन्यास वै सपत्निक ॥ ५२

विहाय सोऽचिरात्कायमगमच्छिवमन्दिरम् ।
दिव्याप्सरोभि. सजुष्टो विमानेन विराजित ॥ ५३

यज्वान शुभकर्माणो या गति योगिनो गता ।
ता गति द्रुतमासाद्य रेमे स सुचिर सुखी ॥ ५४

यश्चेद कथयेत् पुण्य मित्रावरुणयो कृतम् ।
ये शृण्वन्ति महात्मानस्ते ध्रुव दिवमाप्नुयु ॥ ५५

पापनाशनमासाद्य महापातकिनो नरा ।
प्राप्नुवन्ति पुर स्वर्ग्या न च्यवन्ति कदाचन ॥ ५६

---

1. B₂.—इदानी स्वस्तिक कल्प्यमह न्यस्येद् वपुर्जले ।

विद्याधरत्व गान्धर्वं देवत्वमथ यक्षता ।
प्राप्नुवन्ति असदिग्ध पापनाशनमाश्रिता ॥ ५७

तत्र स्नात्वा दिव यान्ति मृतान्ते न पुनर्भवा ।
एतत् सत्य मयाख्यात स्वर्गद पापनाशनम् ॥ ५८

पापनाशनजले[1] स्नात्वा वन्दये कृत्तिवाससम् ।
जन्मान्तरकृतात् पापात् तत्क्षणादेव मुच्यते ॥ ५९

आद्य पुराणमक्लिष्ट पवित्रमतुल शिवम् ।
पठता श्रृण्वता भक्त्या अतिरात्रफलप्रदम् ॥ ६०

शस्त सर्वेषु कार्येषु विशेषात् प्रथमाष्टमी ।
अत्र च स्नानमात्रेण सर्वपापात् प्रमुच्यते ॥ ६१

अनेन विधिना स्नान य कुर्यात् पापनाशने ।
कृत्तिवास समभ्यर्च्च्य सोऽश्वमेधफल लभेत् ॥ ६२

सान्निध्य भवता पूर्वमादिष्ट शूलपाणिना ।
प्रतिपादय चास्माक निमज्जेऽह ह्रदे तव ॥ ६३

एषा च प्राथना कार्या आत्मन. शुभमिच्छता ।
जगद् बीज अनाद्यन्त अशरीर शरीरधृक् ।
प्रसीद देव ! ईशान ! स्थिराभक्तिरिहास्तु मे ॥ ६४

इम मन्त्र समुच्चार्य स्नानीयात् तेन वारिणा ।
माङ्गल्यमिदमाख्यान सर्वपापप्रणाशनम् ।
सर्वैश्वर्यप्रद देवि ! शिवतुष्टिकर परम् ॥ ६५

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया तृतीयेऽशे पापनाशन-माहात्म्य नाम चत्वारिंशोऽध्याय[2] ॥

---

1 C—पापनाशिजले ।

2. B₂, V·· तृतीयेऽशे पापनाशनमाहात्म्य मामाष्टमोऽध्याय ।

# एकचत्वारिंशोऽध्यायः

## ब्रह्मोवाच

अथ गङ्गा सरिच्छ्रेष्ठा सार्द्धं यमनुया ययौ ।
दिव्यरूपमलकृत्य उभे[1] ते वरनिम्नगे ॥ १
सुस्रजे गन्धलिप्ताङ्गे[2] परिधायान्तवाससी ।
हेमभृङ्गारमादायोपतस्थाते सरिद्वरे ॥ २
पारिजातस्रजोत्कृष्टे बालव्यजन बाहुके ।
भक्त्या युक्त्यौ भेजाते द्वारे देवस्य शूलिन ॥ ३
पुरत प्राञ्जलीभूत्वा देव स्तोत्रमुदीरयेत् ।
दिव्येन वचसा गीत वणमाधुर्यमिश्रितम् ॥ ४
व्यक्तिव्यञ्जनविस्पष्ट मूर्ध्नां धातु विल वनम् (?) ।
मन्द्रमध्यगत[3] मेध्य[4] ताललयविधित्रयम् ॥ ५
भावोपविद्य[5] विस्पष्ट सस्वच्छलब्धयान्वितम् ।
तलस्पर्शविचुम्बानमार्द्रवन्धसमुत्सुकम् ॥ ६
खण्डपद्यद्रुत पक्ति यति-निर्दूषण ध्वनिम् ।
अर्धमान विवाद च साष्टाङ्गविदमेव च[6] ॥ ७
उपगीत बृहद्वक्त्रममलाभोगमण्डलम् ।
स्वरूप विभवव्याप्ति अणिमादिगुण बहु ॥ ८
योगिनी वीजमत्यन्त शारीर सुप्रदर्शनम् ।
बाह्यमभ्यन्तरावेत निष्कल सकल कलम् ॥ ९

---

1 $B_2$—दिव्ये ।

2 $B_2$—चारुलिप्ताङ्गे ।

3 $B_2$—धातुविलम्बनम् ।

4. $B_2$—मन्त्रमध्यगत मध्य ।

5 $A_2$, V— भावोपविद्ध, $B_2$—भावोपलब्धं ।

6. $B_2$—सटावदरमेव च, V—सापूर्वं वरमेव च ।

प्रयोगबहुला ज्ञेया जगतुर्वीरयोषितौ।
कृत्तिवासमत कृत्स्न कीर्त्तित प्रीतये विभो ॥ १०

उवाचेशो हसन् वाक्य यमुना जाह्नवी प्रियाम्।
स्वागतैरभिनन्द्याशु पुरत समवस्थिते[1] ॥ ११

यत्नेन चक्रतु स्नान ते तु प्रीतियुते उभे।
प्रणाम तैश्च तोयैश्च हृद्यै श्लिष्टैश्च पावनै ॥ १२

गन्धैरगुरुधूपैश्च पुष्पै परमशोभनै।
मन्त्रैरुच्चावचै स्तोत्रैर्यै सतुष्यति शङ्कर ॥ १३

प्रसीदेति शिव भक्त्या जानुमारोप्य मेदिनीम्।
पाणौ कुड्मलवद्धे तु विज्ञाप्य सरिता वरे ॥ १४

इच्छावो देव चात्रैव स्थातु क्षेत्रे सदैव ते।
भवत पादमूलेऽस्मिन् सलग्ना सतत वयम् ॥ १५

तथेत्याह विरूपाक्ष सुप्रीतेनान्तरात्मना।
ददौ ताभ्या निवासार्थ सश्रद्धाभ्या च सस्थितिम् ॥ १६

पूर्वस्या दिशि देवस्य किंचिदैशान्यमाश्रिते।
शतधेन्वन्तरे चैते गङ्गायमुनविश्रुते ॥ १७
सर्वपापहरे धन्ये कल्याणप्रियदे सदा।

अष्टायतनमुख्ये च कामदे वरदे सदा ॥ १८

यमुना प्राप्य यो नित्य स्नाति देवि ! नरोत्तम।
वैकुण्ठे वासमाप्नोति यदि कृष्ण प्रमाणभाक् ॥ १९

अग्नि प्राप्य यथा सद्यस्तृणराशिर्विनश्यति।
एव तु ब्रह्महत्यादि गङ्गायमुनयोस्तथा[2] ॥ २०

स्नाताना शुचिभिस्तोयै गङ्गायमुनयो शिवे !।
गतिर्भवति या पुसा न सा क्रतुशतैरपि ॥ २१

अपहृत्य तमस्तीव्र यथा भात्युदये रवि।
अपहृत्याम्ब ! पापानि[3] गङ्गा च यमुना तथा ॥ २२

---

1 $B_2$—समुपस्थिते।

2 $B_2$—तदा।

3 $B_2$—अपहृत्यात्मपापानि।

भूतानामिह सर्वेषा दु खोपहतचेतसाम् ।
गतिमन्विष्यमाणाना नास्ति गङ्गा समा गति ॥ २३
ते क्रीडन्ति मुदायुक्ता सहदेवै सवासवै ।
ये स्नान्ति नियतात्मानो गङ्गायमुनयोर्जले ॥ २४
यथोपजीविना धेनुर्देवादीना परा स्मृता ।
तथैव देहिना गङ्गा यमुना च फलप्रदा ॥ २५
य इच्छेत् सफल जन्म पौरुष श्रुतमेव वा ।
स गङ्गा सेवयेन्नित्य यमुना च विशेषतः ॥ २६
यमुना सरिता नाथा सकृद् भक्त्यावगाहिता ।
गङ्गा तारयते वशावुभौ पुसा भवार्णवात् ॥ २७
मनो वाक्कायभिर्ग्रस्त पापैर्बहुविधैरपि ।
वीक्ष्य गङ्गा भवेत् पूतः पुरुषो नात्र सशय ॥ २८
उत्क्रामद्भिश्च य प्राणै. प्रणत श्रद्धयान्वित. ।
चिन्तयेन्मनसा गङ्गा सोऽपि याति परा गतिम् ॥ २९
आकाशात् सुमहापुण्यात् पतन्ती या महेश्वर ।
वभार शिरसा गङ्गा ता देवी को न सश्रयेत् ॥ ३०
हरस्य गात्रसपर्कात् पवित्रत्वमुपागताम् ।
को नाम नाश्रयेद् गङ्गा अशेषदुरितापहाम् ॥ ३१
यथार्णवस्य रत्नानि मेरोश्च कनक यथा ।
सख्यातु नेह शक्यन्ते गङ्गायमुनयोर्गणा ॥ ३२
गङ्गायमुनयो स्नात्वा दृष्ट्वा त कृत्तिवाससम् ।
को वा मनोरथो देवि ! इहामुत्र न लभ्यते ॥ ३३
गङ्गायमुनयो स्नान नाल्पस्य तपस फलम् ।
विशेष मरण चात्र कोटिजन्माघनाशनम् ॥ ३४
प्रयागस्तीर्थराजोऽसौ विख्यातो हि सरस्वती[1] ।
एवमुक्त· पुरा देवि ! शम्भुनाव्यक्तजन्मना ॥ ३५
ये स्नान्ति तोये यमुनादिकन्ययो—
रेकाम्रके क्षेत्रवरे नरोत्तमा ।
ते धाम शैव पुरुषा प्रयान्ति
कुलैश्च मित्रै[2] सह सप्त सप्तभि ॥ ३६

---

1 $B_2$—ख्यातो भुवि सरस्वती ।

2. $B_2$—गोत्रैः ।

हरेण स्वयमेवैव नियुक्ता ब्रह्मयोनिना ।
आस्तेऽस्मिन् यमुना देवी गङ्गा परमपाविनी ॥ ३७

माहात्म्य क्षेत्रराजस्य गङ्गायमुनयोर्यथा ।
कथित निखिल ह्येतत् किमन्यच्छ्रोतुमिच्छसि ॥ ३८

## सनत्कुमार उवाच

देवी प्राह स्मित कृत्वा चतुर्वक्त्रं पितामहम् ।
अत पर पर तीर्थं किमन्यत् कामद विभो ! ॥ ३९

प्रब्रवीहि सुरश्रेष्ठ पर कौतूहल हि मे ।
एवमुक्तस्ततो ब्रह्मा प्रहस्य पुनरब्रवीत् ॥ ४०

## ब्रह्मोवाच

शृणु देवि ! पर पुण्य कोटितीर्थमभिप्लुतम् ।
कोटिभिर्देवैर्जुष्ट पूर्वं कोटिमखार्जितम् ॥ ४१

ऋषय पितर सर्वे देवता कोटयस्तथा ।
चक्रुश्च पुष्कल[1] यज्ञ समाप्तवरदक्षिणम् ।
एते चावभृथे स्नात्वा हुताहुतिकृतक्रिया ॥ ४२

स्नानावशिष्टसलिलमादाय विधिनोदितम् ।
कृत्तिवासोन्तिक जग्मुरभिषेक च दीक्षिता ॥ ४३

शृणु देवि ! पर पुण्य कोटितीर्थमभिप्लुतम् ।
तानुवाच विरूपाक्ष कृतयज्ञानुपागतान् ॥ ४४

आगच्छन्तु सुरश्रेष्ठा कुण्डस्यास्य समीपत ।
मामत्र चाभिषिञ्चध्व साग्रेण स्वकृत सुरा ॥ ४५

शिष्ट शान्त्युदक कुण्डे क्षिपध्व निखिलामरा. ।
एवमस्त्विति तैर्देवै क्षिप्तमम्भ शिवाज्ञया ॥ ४६

रिक्तकुण्डस्तत पूर्णः साधुवादो नभस्थले ।
स्वच्छसौरभ्यपूताम्भस्तत्क्षणात् समजायत ॥ ४७

तत स्नातो विरूपाक्ष ब्रह्मा देवगणै सह ।
मुनयश्चारणा सिद्धाः कृतस्नानाः कृतोदका ॥ ४८

---

1 B, —पुष्कर ।

तत स सर्वान् सवीक्ष्य शङ्करो देवताऋषीन् ।
उवाच वाक्य सुश्लिष्ट मद्वाक्य[1] शृणुतामरा ॥ ४९

अभिषिक्तो ह्यह कुण्डे कोटिभिर्दीक्षितै सुरै ।
कोटितीर्थमिद लोके कीर्त्ति स्थास्यति सर्वदा ॥ ५०

अष्टायतनमध्येऽसौ कोटितीर्थो वर स्मृत ।
पावन सर्वभतानामत्रदान महत्फलम् ॥ ५१

इत्युक्त्वा देवदेवोऽसौ सर्वान् देवर्षिचारणान् ।
पश्यता सर्वदेवाना तत्रैवान्तरधीयत ॥ ५२

कोटितीर्थे परे देवि ! स्नातव्य सर्वदा स्वयम् ।
दातव्य पितृदेवेभ्य· पिण्डदान यथोदितम् ॥ ५३

सर्वमक्षयमाप्नोति तीर्थेऽस्मिन फलमम्बिके ! ।
कोटितीर्थात् पर तीर्थमन्यक्षेत्रे न विद्यते ॥ ५४

कोटितीर्थे नर स्नात्वा सर्वपापात् प्रमुच्यते ।
अग्निष्टोमसहस्राणि वाजपेयशतानि च ॥ ५५

कर्त्तुश्च यत्फल प्रोक्त कोटितीर्थ-जलाप्लुत ।
तत् फल समवाप्नोति सत्यमेतन्मयोदितम् ॥ ५६

सुवर्णदान गोदान धान्यदानेषु यत फलम् ।
तत् फल समवाप्नोति कोटितीर्थजलाप्लुत ॥ ५७

### ब्रह्मोवाच

अत परमह वक्ष्ये ह्यलावुतीर्थमुत्तमम् ।
अष्टायतनमध्ये य उत्तम परिकीर्त्तित ॥ ५८

आसीत् कृतयुगे देवि ! पुलहो नाम ब्राह्मण ।
स सप्तर्षीणा प्रवरोऽसृजत् पुत्राश्च मानसान् ॥ ५९

एको विष्णुसखो[2] नाम्ना परोपीन्द्रसख स्मृत ।
द्वावेतौ च तप कर्त्तु प्रस्थितौ मुनिदारकौ ॥ ६०

दिशि याम्या विष्णुसख[3]सौम्यामिन्द्रसखो गत ।
आसाद्य मुनिमुख्याना पुण्यतीर्थान्यनेकश ॥ ६१

---

1 $B_2$—सदवाक्य ।

2 $B_2$, V—विश्वसखो ।

3. $B_2$, V—विश्वसखः ।

पर्यायेणाखिलमूर्वीं चचार नियतात्मक ।
सहस्राद्विशतद्बे च ब्रह्मचारी यतव्रत ॥ ६२

षष्ठे काले च सप्राप्ते शाकमूलफलाशन ।
चन्द्राद्रौ निवसन् तस्य तुष्टो देवो महेश्वर ॥ ६३

अन्तरीक्षस्थित प्राह कल्पवाचाशरीरिणाम् ।
भो भो इन्द्रसख ! प्राज्ञ ! ब्रह्मोद्भव-समुद्भव ॥ ६४

यदिच्छसि परश्रेयो वनमेकाम्रक व्रज ।
अनादि परम देव कृत्तिवास भजस्व माम् ॥ ६५

धर्मार्थकाममोक्षादीन् क्रमाद् देवाश्रयिष्यसि ।
अन्यतीर्थवरे क्षेत्रे तपस्यन्त सुदुष्करम्[1] ॥ ६६

सहस्राब्देन यत् प्राप्तिस्तत् प्राप्तिरेकवत्सरे ।
षण्मासेन यदन्यस्मिन् क्षेत्रे फलमुदाहृतम ॥ ६७

एकाम्रके दिनैकेन स्थित्वा तत् पश्य सयमे ।
स्मरणात् कोटिलिङ्गस्य दर्शस्पर्शगुणात्मक ॥ ६८

हरत्याशु अघौघास्तु वृक्षपादेन[2] वै द्विज ।
निशम्यान्तर्हिता वाणी तथेत्युक्त्वा तपोधनः ॥ ६९

नियोगात् परमेशस्य प्रस्थित क्षेत्रमुत्तमम् ।
दक्षिणार्णवमुद्दिश्य उत्कल उड्सज्ञकम्[3] ॥ ७०

स पृच्छन्नैत्रमीशान[4] चिरात् प्राप्तो महामुनि ।
आसाद्य सुमहत्क्षेत्र सरो बिन्दूद्भव तत ॥ ७१

मार्जन विधिनोक्तेन मुनिश्चक्रे यतात्मवान् ।
दर्शन क्षेत्रराजस्य वन्दन कृत्तिवासस ॥ ७२

मूर्त्तिभेदाननेकाश्च सर्वानायतनान् शुभान् ।
दृश्यादृश्य नमस्कृत्य स मुमोदातुल द्विज ॥ ७३

उवास सुचिर तत्र एकान्ते विजने वने ।
निर्ममो निरहकारो निराहारो निराश्रय ॥ ७४

---

1 $A_2$, $B_1$, C, V—अन्यतीर्थान् वरान् क्षेत्र सप्तस्यन्त सुदुष्करम् ।

2. V—वृषपादेन ।

3 $B_2$, V—औत्कल ओड्सज्ञकम् ।

4. $A_2$, $B_1$, C, V—पृच्छयन्तौ तमीशान ।

रुद्रैकमानसो धीमास्तन्मयेनान्तरात्मना ।
ध्यायस्तमीशमनिश स्थाणूभूतो गतव्यथ ॥ ७५

अथास्य परमज्योति परानन्द परावर ।
निष्प्रपञ्चो निराभासो धामत्रयविवर्जित ॥ ७६

ध्यानागम्यो मनोहस शिव सदसदात्मक ।
अभवत् तस्य सान्निध्य कृत्तिवासा जगद्गुरु ॥ ७७

दिव्येन चक्षुषा पश्यन् शिवसकल्पमानसम् ।
मुनेर्भाव पर ज्ञात्वा ततस्तमितिचाब्रवीत् ॥ ७८

उत्तिष्ठोत्तिष्ठ विप्रेन्द्र वरदोऽहमिहागतः ।
वर वृणीष्व भद्र ते यत् सुरैरपि दुर्लभम् ॥ ७९

देववाक्यामृतासिक्त प्रबुद्ध इव स द्विज ।
सोऽपश्यत्त विरुपाक्ष शशाङ्ककृतशेखरम् ॥ ८०

गोक्षीरकुन्दसकाश ज्वलन्त तेजसानुलम् ।
वितत दशदोर्दण्ड नीलकण्ठ वृषध्वजम् ॥ ८१

नमस्य शिरसा भूमौ प्रत्युत्थाय ततो ददौ ।
पाद्यमाचनीय च अर्घ्यमस्मै निवेदयन् ॥ ८२

ततो नन्दीश्वर साक्षाद्रथमादाय चाययौ ।
पताकाध्वजसकीर्ण किङ्किणीजालमालिनम् ॥ ८३

येन दैत्यासुरान् यक्षान्[1] निर्जित्य प्रतिगच्छति ।
उवाचारोह भो विप्र विमान शतचन्द्रिकम् ॥ ८४

सोमसूर्यसमो तेजो मणिरत्नोपशोभितम् ।
दृढाक्ष चारुचित्र च धूर्यासक्त सनेमिकम् ॥ ८५

नन्दीश्वर वच श्रुत्वा स मुनि शान्तविग्रह ।
वेयमानोऽब्रीवीद् विप्रो नमस्कृत्वा स्वय भुवम् ॥ ८६

वन्द्योऽय रथराजस्तु भवान् वन्द्यतमो मत ।
वरमिच्छाम्यह चान्य यद्यनुग्रहतास्ति मे ॥ ८७

अस्मिन् क्षेत्रवरे रम्ये भैक्षपात्र च मामकम् ।
कुण्ड च उदकाधार तीर्थभूत भविष्यति ॥ ८८

---

1. V—रक्षान्, $B_2$—रक्षो, C—येन दैत्यान सुरान् यक्षान् ।

अलावुतीर्थं विख्यात त्वत्प्रसादादिहास्तु मे ।
भूताना हितमत्यर्थं प्रासाद कर्त्तमर्हसि ॥ ८९

एवमस्त्विति देवेशस्तमलावु द्विजेरितम् ।
स्पर्शयामास हस्तेनाभवद् दिव्यो महाह्रद ॥ ९०

भूय प्राह हरस्तुष्ट एष मे निर्मित स्वयम् ।
यत्नो भव मुनिश्रेष्ठ ! परिपूर्णं च पावनम् ॥ ९१

लावुतीर्थमिद लोके विख्यात जनपावनम् ।
अष्टायतनमध्ये तु गतिमिष्ट प्रदायकम् ॥ ९२

देवपितृमनुष्याणा तोषणार्थाय निर्मितम् ।
तुष्टयर्थं सर्वभूताना स्नानात्तारयते कुलम् ॥ ९३

कामद प्रवर तीर्थं महासिद्धिप्रदायकम् ।
सर्वपापनिहन्त्रतदष्टम्या च विशेषत ॥ ९४

अष्टम्युपोषितश्चात्र सयतात्मा जितेन्द्रिय. ।
अर्च्चयित्वा शिव भक्त्या त्रिकाल नान्यमानस. ॥ ९५

जप्त्वा पञ्चाशतोऽघोर प्रत्यह नियतात्मवान् ।
अछिद्रेण च एकाकी य क्षिपेत् सुसमाहित ॥ ९६

तदन्ते तत्र आलावु लतापुष्पफलान्वितम् ।
दृष्ट्वाऽदायाशु भक्षेद यस्तस्य सिद्धिरदूरत ॥ ९७

खेचरत्व तथायुष्यमाज्ञा सिद्धिर्भविष्यति ।
विलद्वार च वा तत्र स पश्यति यथेच्छया ॥ ९८

तत्र यात्राणि सिध्यन्ति प्रवदन्ति मनोषिण ।
अलावूतीर्थमाहात्म्य श्रोतव्य सुकृतात्मभि ॥ ९९

इत्युदाहृत्य त विप्र स निनाय त्रिपिष्टपम् ।
विप्र इन्द्रसखो नाम्ना स्वर्गलोके यथामर ॥ १००

मोदतेऽद्यापि विमले प्रासादात् कृत्तिवासस ।
लावुकेश्वरमासाद्य सिद्धा सिध्यन्ति चापरे ।
आलावुके तीर्थवरे स्नात्वा तारयते कुलम् ॥ १०१

सनत्कुमार उवाच

पुरावृत्तमिद ब्रह्मन्! ब्रह्मणा परिभाषितम्।
पुण्य पापहर शस्त स्मृतिमात्राघहारि च ॥ १०२

इत्यैकाम्रपुराणे षटसाहस्र्यामैश्वर्या सहिनाया तृतीयेऽशे गङ्गायमुना कोटितीर्थाख्याने आलावुतीर्थमाहात्म्य नाम एकचत्वारिंशोऽध्याय.[1]।

1. $B_2$ तृनीयेऽशे गङ्गाकोटितीर्थाख्याने अलावुतीर्थमाहात्म्य नाम नवमोऽध्याय, V—तृतीयेऽशे गङ्गायमुनाकोटितीर्थाख्याने इन्द्रसखोपाख्याने

# द्विचत्वारिंशोऽध्यायः

## असित उवाच

अहो क्षेत्रस्य माहात्म्य त्वया ब्रह्मन् प्रकीर्त्तितम् ।
देवदेवस्य माहात्म्यमद्भुत लोमहर्षणम् ॥ १

अप्रमेय गुणातीत योगिना प्रीतिवर्धनम् ।
भूयो ब्रूहि मुनिश्रेष्ठ ! यद्यस्ति इह किंचन ॥ २

तत्र वै लिङ्गभूयिष्ठस्वाम्रच्छाया समुद्यते ।
अत पर महाभाग ! पूजन केन वा कृतम् ॥ ३

## व्यास उवाच

निशम्य असितस्येव प्रश्न भूतहितार्थकम् ।
तमुवाचाऽग्रजः शान्तो महायोगेश्वरो मुनि ॥ ४

## सनत्कुमार उवाच

अतीतमिदमाख्यातमनागतमिह[1] श्रृणु ।
भविष्य सप्रवक्ष्यामि यथा देवेन कीर्त्तितम् ॥ ५

स्मृत्वा तस्य प्रसादेन यदाख्यात हि वेधसा ।
येनापि शिवमाराध्य प्राप्त ज्ञानमनुत्तमम् ।' ६

तदह सप्रवक्ष्यामि पुराण परमार्च्चितम् ।
श्रृणुष्वावहितो ब्रह्मन् ! भवतारकर परम् ॥ ७

तस्मिन[2] क्षेत्रवरे रम्ये छायाया तु वनस्पते ।
एकोनकोटिभिर्लिङ्गै सार्धमास्ते सदाशिव ॥ ८

मूर्त्तामूर्त्ति स्वरूपोऽसौ स्थूलसूक्ष्मव्यवस्थित ।
धन्याद् धन्यतरो देवो भावाभाव परिग्रहः ॥ ९

---

1 $B_2$—मिद ।

2. $B_1$, C—अस्मिन् ।

नासौ भूमि पराचान्या नचाद्रिर्न च काननम्[1]।
नाकपृष्टसम देश प्रवदन्ति मनीषिणः॥ १०

योजनैक शिवक्षेत्र मण्डल त्रिदशाच्चिंतम्।
आम्रच्छाया क्रोशमात्र पूर्व पुण्यतम स्मृतम्। ११

स्वर्णकूटो रसाद्रिश्च मेध्याश्च शिवसद्म च।
कल्पजित् सिद्धशैलश्च भौमस्वर्गस्तप स्थली॥ १२

नामान्येतानि शस्तानि पुण्यान्यघहराणि च।
य स्मरेत् प्रातरुत्थाय सुख नयति तद्दिनम्॥ १३

पुरावृत्त निवोधेद कपिलस्य महात्मन।
क्षेत्रमेन समासाद्य प्रहृष्टेनान्तरात्मना॥ १४

चकाराराधन सम्यक् कपिलस्तु कपर्द्दिन।
याम्या सरितमास्थाय[2] धेन्वन्तरसहस्रके॥ १५

षोडशोत्तरमाने तु देवसदर्शनादृषि[3]।
आस्थाय रुचिरे देशे स्थितवान् मुनिपुङ्गव॥ १६

समारेभे व्रत तत्र तोषणार्थ पिनाकिन।
अभ्रावकाशेष्वनघ[4] शिवसकल्पमानस॥ १७

ग्रीष्मे रौद्रमयो भूत्वा वर्षासु वर्षणे वसन्।
हेमन्ते शिशिरे शेते विधृतश्चानुपूर्ववत्[5]॥ १८

सर्वदु खसहो धीमान् समलोष्टाश्मकाञ्चन.।
दु.खेष्वनुद्विग्नमना सुखेषु विगतस्पृह॥ १९

सम. सर्वेषु भूतेषु दत्त्वा चाभयदक्षिणाम्।
मौनी बीरासने बद्धो निष्कम्पो मानस स्थिर॥ २०

उपविश्यासने युञ्जन् योगमूर्त्तिरमूर्त्तिमान्।
निरोध परम धैर्यं वाञ्छाविषयवर्जितम्॥ २१

1 $B_2$—काञ्चनम्।

2 $B_2$—त्वरितमास्थाय, C—हरितमास्थाय,
V— च कृतमास्थाय।

3 $B_2$, V—षोडशोत्तर परिमाणे च देवस्य दर्शनाद् ऋषि

4 अद्रावकाशेष्वनघ।

5. $B_2$, V—विधृतश्चानुरूपवत्।

निर्वातस्थो यथा दीपो निष्प्रकम्पोऽयमास्थित[1]।
समा पञ्चदशे तस्मिन् जितात्मा स महामुनि ॥ २२

उवास मुनिरुद्धात्मा निर्विघ्नो निरवग्रह ।
तस्य नैरुध्यजैहृद्यै[2] स तृप्तिरभवद्विभु ॥ २३

सार्द्धं सुरगणैर्ब्रह्मा रुद्रस्यैकाम्रमाययौ ।
कृत्तिवास समीपे च मुनि तमुपसर्पिरे ॥ २४

परिवव्रुरनेकैश्च सिद्धविद्याधरोरगा ।
समाधिस्थमुवाचेद ब्रह्मा लोकपितामह ॥ २५

अलमध्यवसाय ते दुष्कृत कृतवानसि ।
यदि शक्य सुरै कर्त्तुमुर्जित कर्मणार्जितम् ॥ २६

ब्रूहि काम मुनिश्रेष्ठ ! यत्ते मनसि वर्त्तते ।
स्रष्टुस्तद्वचन श्रुत्वा सुप्तोत्थित इवाभवत् ॥ २७

तानपश्यत् सुरगणान् नमश्चक्रे विनीतवत् ।
प्रणम्याह वर काम भक्तिमद्वहता गिरम् ॥ २८

यदि प्रसन्नो भगवन् ! यद्यनुग्रहतास्ति मे ।
प्रथम वरमिच्छेऽह शिवलिङ्गसमुद्भवम् ॥ २९

पूजयिष्याम्यह भक्त्या भवभीतिहर हरम्[3] ।
द्वितीय मे वर काम्य शिवसन्निहित जलम् ॥ ३०

तृतीय भवत स्वेच्छा-प्रासाद इह चास्तु वै ।
द्वावेतौ विहितार्थौ मे प्रसाद कर्त्तुमर्हसि ॥ ३१

मुनेरेव वच श्रुत्वा अभिप्रीतास्तदा सुरा ।
विशेषेण हरस्तुष्ट प्रोद्भूत पुरत क्षितौ ॥ ३२

लिङ्गमूर्त्तिस्वरूपेण अपश्यन् सर्वदेवता ।
साधुवादो भवल्लोके सुरदुन्दुभिनादिताम् ॥ ३३

पुष्पवृष्टि प्रमुञ्चन्ति कपिल प्राह ईश्वर ।
पश्य[4] मे विहित चात्र कुण्ड पुण्यजलत्विदम् ॥ ३४

---

1. $B_2$, V—आश्रित ।
2. $B_2$ नैवेद्यजैहृद्यै. ।
3. $B_2$—भवभीतिरह परम् ।
4. $B_1$, C—अथ ।

श्रुत्वा वाक्यमृषिस्तुष्टो बभाषे विनयान्वित ।
कि नाम परमेशस्य अस्मिन् स्थाने ह्लदस्य च ॥ ३५

स्नात्वा दत्वा च किं पुण्यं तन्ममाख्यातुमर्हसि ।
मुनेरेव वच' श्रुत्वा स प्रोवाच महेश्वर ॥ ३६

कपिलेशो ह्लदो नाम्ना[1] लोके ख्याति गमिष्यति ।
कुण्ड च कपिल तीर्थं सर्वतीर्थफलप्रदम् ॥ ३७

महापातककोटिघ्न स्वर्गद सुखद परम् ।
सर्वकालेष्वद: शस्त विशेषात् फाल्गुने मुवे ॥ ३८

मासि नित्यमविच्छिन्न स्नानाद् देवार्च्चनात् तथा ।
कपिलेश नमस्कृत्वा कृत्तिवास प्रदक्षिणम् ॥ ३९

एव य कुरुते मास ब्रह्मचर्य सदा शुचि ।
विनीयमिन्द्रियग्राममद्रोह शिवतत्पर ॥ ४०

अधनो धनमाप्नोति कन्या प्राप्नोति सत्पतिम् ।
विद्यार्थी लभते विद्या रूपसौभाग्यमुत्तमम् ॥ ४१

शत्रुनिग्रहकृद्राजा विजयी तु भविष्यति ।
वैश्यो धनसमृद्ध स्याद् ब्राह्मणो वेदपारग ॥ ४२

इह प्रेत्य सुखाल्हादी तीर्थोऽय मानस स्मृत ।
लोक सप्ततीर्थौ स्नात्वा पूर्वं फलमाप्नुयात् ॥ ४३

शौरेर्वार समासाद्य तैल दद्याद् द्विजातये ।
तैल दत्वा शिरे गात्रे मज्जयेत् कपिलाम्भसि ॥ ४४

कपिलेश समासाद्य पक्त्या ये भुञ्जते नरा: ।
तावत्काल दिव यान्ति यावत् तिष्ठेत् कपालिका ।
स्नानमन्त्रविधि सम्यक्कृत्वा सन्ध्यामनुक्रमात् ॥ ४५

**स्नानमन्त्रस्तु कपिलसहिताया ऋषि प्रति भरद्वाजवाक्य**

तैल दत्वा शिरो गात्रे मज्जन कपिले ह्लदे ।
मन्त्रेणानेन विधिवत्तत्र स्नान समाचरेत् ॥ ४६

---

1. $A_2$, V—कपिलेशेत्यदो नाम्ना ,
B —कपिलेशो यदा नाम्ना ।

ॐ नम    कपिलतीर्थाङ्ग    गङ्गाम्बुधिफलप्रद ।
पाप नाशय मे तीर्थं मज्जयेऽहं तवाम्भसि ॥ ४७

शनेर्वारे प्रयत्नेन नर    पापात् प्रमुच्यते ।
वन्दन देवमीशान भवनाम्ना तु कीर्त्तितम्[1] ॥ ४८

ब्रह्मविष्णुशिवोक्त    वै    महापातकनाशनम् ।
कपिलस्य माहात्म्येन विलय यान्ति किल्विष. ॥ ४९

सोमबीज[2] (?) पिवेत् तोय गण्डूषत्रयमेव च ।
कपिलेश    नमस्कार    सप्रदक्षिणपूर्वकम् ॥ ५०

मन्त्र

"ॐ नमस्तेऽव्यक्तजनये    परिणाम-विवर्जित.[3] ।
शाश्वतायाप्रमेयाय    शिवाय    शिववेधसे" ॥ ५१

मन्त्रेणानेन विधिना क्षालयेत् चिरसचितान् ।
ब्रह्महत्याद्    विमुच्येत    किमन्यैर्बहुविस्तरैः ॥ ५२

कपिलेशमाहात्म्येन    महापापात्    प्रमुच्यते ।
सतत स्रवते चात्र वाराणस्या सदा जलम् ॥ ५३

स्वामिनः स तथा धारा सागरस्य सरस्य च ।
चतुर्भि. स्रवते नित्य ह्लद कपिलसज्ञक ॥ ५४

बहवो मुनयश्चात्र तप्त्वा प्राप्ता सुरालयम् ।
सेव्योऽय सतत प्राज्ञै    परलोकजिगीषुभि ॥ ५५

कृत्तिवासप्रसादेन तारयेत् निखिलान् कुलान् ।
न चास्य सदृश लोके तीर्थमस्ति कदाचन ॥ ५६

अपर शृणु सक्षेप तीर्थस्यास्य    विभूतिका ।
विषुवे द्वे च सप्राप्ते यदा सक्रमते रवि ॥ ५७

---

1. $B_2$, V—भवनामानुकीर्त्तनम् ।

2 $B_2$—सोमबीजे ।

3. $B_2$, V—परिणामविवर्जिते ।

स कालश्चात्र विज्ञेय स्नानदानार्च्चनात् प्रति[1]।
जाप्य होम तथा श्राद्ध अक्षय परिकीर्त्तितम्।
आत्मान च पराश्चैव तारयेन्निखिलान् कुलान्॥ ५८

## सनत्कुमार उवाच

इत्युक्त्वान्तर्दधे शम्भु कपिल दैवतै सह।
कपिलोऽपि महात्मासौ कृतकृत्यो गतो मुनि॥ ५९

ये वसन्ति नरास्तस्मिन्[2] स्वर्णकूटे हराश्रमे।
पश्यन्ति दिवि देवास्तान् योजनाना शतान्तरे॥ ६०

त्रिनेत्रान् शूलपाणीश्च क्षेत्रे पश्यन्ति मानवान्।
दिविष्ठा यत्र भो ब्रह्मन्नधिक कि वदाम्यहम्॥ ६१

अहो क्षेत्रस्य माहात्म्य आश्चर्य लोमहर्षणम्।
पावन सर्वभूताना अपि कीटपतत्रिणाम्॥ ६२

मुनिर्देवाप्सरा सिद्धा आयान्ति विषुवद्वये[3]।
स्नात्वा बिन्दूद्भवे तोये यान्ति सर्वे यथेच्छया॥ ६३

बिन्दुह्रदजले स्नात्वा ह्यष्टमूर्त्तिप्रदक्षिणम्।
कृत्तिवास नमस्कृत्वा पूजा शक्तित आदराद्॥ ६४

एव देवा सदा भक्त्या कि पुनर्मनुजादय।
तेन न्यानेन[4] पूजन्ति कृत्तिवास जगद्गुरुम्॥ ६५

व्यर्थ[5] जन्म भवेत्तेषा वृथा तेषा परिश्रम।
यो न पूजति भावेन कृत्तिवाससमव्ययम्॥ ६६

एकाम्रकवन गत्वा नियतात्मा जितेन्द्रिय।
येनार्च्चितो विरूपाक्ष कि तस्य बहुभिर्मखै॥ ६७

दानमल्पतर क्षेत्रे तैलबिन्दुमिवाम्भसि।
अक्षय समवाप्नोति वित्त विप्रकरार्पितम्॥ ६८

---

1 $B_2$, V—स्नानदानार्च्चन प्रति।

2 $B_2$, V—नरा. क्षेत्रे।

3 $B_2$—वपुष. क्षये।

4. $B_1$, C—ये नरात्र न।

5. $B_2$, V—वन्ध्यं।

सत्य सत्य पुन सत्य भुक्तिमुधृत्य[1] कथ्यते।
कृत्तिवासात् परो देवो न भूतो न भविष्यति ॥ ६९

पर ब्रह्मस्वरूपोऽय न लिङ्गो भुवनेश्वर ।
नैवेद्यग्रहणे त्वस्य महामखसम फलम् ॥ ७०

कृत्तिवासेति यो नाम कीर्त्तयेत् भुवि मानव ।
तस्य यत् तत् फल वक्तु शेषदेवो न शक्यते ॥ ७१

विना तीर्थैर्विनायज्ञैर्विनादानैर्विना व्रतै· ।
मुक्ति प्रयान्ति मनुजा कृत्तिवासेति कीर्त्तनात् ॥ ७२

कि वक्तव्य तु माहात्म्य क्षेत्रराजस्य वै द्विज ।
कैलासात्तु गरीयेद क्षेत्रमेकाम्रक वनम् ॥ ७३

एकाम्रकवन धन्य यत्र वैकुण्ठनायक ।
यत्र शूलधृगास्ते वै नित्य ब्रह्मा चतुर्मुख· ॥ ७४

अत पर द्विजश्रेष्ठ किमन्यदधिक वरम् ।
स्वर्णकूटे शिवक्षेत्रे वस्तु स्वस्त्ययन महत् ॥ ७५

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया तृतीयेऽशे कपिलेश्वर-माहात्म्य नाम द्विचत्वारिंशोऽध्याय[2] ॥

---

1 $B_2$, V—भुजमुधृत्य।

2 $B_2$, V · तृतीयेऽशे कपिलेश्वरमाहात्म्यं नाम दशमोऽध्याय ॥

# त्रिचत्वारिंशोऽध्यायः

## व्यास उवाच

क्षेत्रराजस्य माहात्म्य श्रुत्वा प्रीतिसमन्वित ।
वभाषे मुनिशार्दूल शिवभक्त पर पुन. ॥ १

## असित उवाच

शिवस्य चोपभेदानि ह्यस्मिन् क्षेत्रे ह्यनेकधा ।
नाम सज्ञाविभिन्नार्थं नाभवत् परमार्थत ॥ २
तथापि मनस प्रीतिमिच्छेय नामकीर्त्तनम् ।
एकोनकोटि यत् प्रोक्त श्रोतुमिच्छामि मानव ॥ ३
दिग्भागे यानि लिङ्गानि प्रति तेषा विभागश ।
उच्चे निम्ने स्थले तोये तन्ममाख्यातुमर्हति ॥ ४

## व्यास उवाच

निशम्य त्वसितस्येव[1] व्याजहार महामुनि ।
सनत्कुमारो भगवान् दिव्यस्मृति-समन्वित· ॥ ५

## सनत्कुमार

कृत्तिवासा स्वय तत्र विश्वस्याधार ईश्वर ।
जगन् मूलस्त्वनाद्यन्त. क्षेत्रे क्षेत्रवता वर ॥ ६
जगद्बीजो जगद्योनिरनन्तो लोकसाक्षिक ।
हृदिस्थ सर्वभूताना क्षेत्रोऽय[2] यज्वना गति ॥ ७
एतत् क्षेत्राधोप. श्रीमान् कृत्तिवासा जगद्गुरु ।
*लोकसाक्षी त्रिलोकेश सर्वेश· प्रभव प्रभु ॥ ८
स्वयम्भूर्भगवान् रुद्रस्तस्य लिङ्गस्य सम्भवा ।
एकोनकोटय सर्वे धन्या धन्यतमाः स्मृता ॥ ९

---

1 $B_2$—त्राशितस्येव ।

2. $A_2$, $B_2$, V—यत्रेय ।

ऐन्द्र्यामाग्नेयके याम्या नैऋते वारुणे तथा ।
वायव्या चैव कौवेर्यामैशान्या समुपस्थिता ॥ १०

ते ह्यन्तर विकोणेषु कृत्स्नेनैव व्यवस्थिता ।
अनादि[1] क्रमसस्थाना स्थितिरेषा पुरातनी ॥ ११

शैव क्षेत्रवर श्रीमज्जुष्ट देववरैर्नृपै ।
प्राप्तमैश्वर्यमेतस्मिन् यावदाभूत सस्थितम् ॥ १२

कोटिलिङ्गार्च्चन पुण्य दर्शस्पर्शगुणात्मकम् ।
पुष्कल लभते येन निवोध मुनिपुङ्गव ॥ १३

कात्तिकस्यासिते पक्षे त्वष्टम्या नियत शुचि ।
तत्रार्च्चन विधातव्य कोटिलिङ्गयुत हरम् ॥ १४

बिन्दुसरजले स्नात्वा दत्वा देवान् पितृन् क्रमात् ।
अनन्त वासुदेव च वन्दयित्वा व्रजेद् वुध ॥ १५

देवीपादहरा चैव सर्वपापप्रणाशिनीम् ।
विलोक्य निर्गमेद्[2] धीमान् सन्निधि कृत्तिवासस ॥ १६

देवस्य द्वारमासाद्य त्रिरावृत्त स्वय तदा ।
नन्दिन च महाकाल प्रणमेच्छिरसा इमौ ॥ १७

ततस्तु तोरणास्थाने प्रणमेत् सुमाहित ।
अविघ्न सर्वकार्याणा विनायकमत परम ॥ १८

त्रिचक्षुषं पूजयित्वा आदौ[3] कृत्वा प्रदक्षिणम् ।
ततस्तु द्वारमागच्छेच्छुचिस्तद्गतमानस ॥ १९

प्राङ्मुख प्रयतो भूत्वा द्वारे देवस्य सत्तम ।
मूर्धाञ्जलिपुटो भूत्वा इम मन्त्रमुदीरयेत् ॥ २०

"ॐ नमो मूलप्रकृतये पूजिताय महात्मने ।
ऐन्द्ररुद्रात्मने ईश नमस्तुभ्य नमो नम ॥ २१

भूयश्चाष्टौ ह्रदे स्नात्वा मूर्त्ति देवस्य वन्दनम् ।
विप्रदक्षिसपूर्णो विशेद् गर्भगृह पुन ॥ २२

---

1 $B_2$—नानादि ।

2 $B_2$—निर्गतो ।

3, $A_2$, C—त्वष्टौ, $B_2$—त्वन्यौ ।

अर्च्चयित्वा यथार्हेण द्वारे देवस्य पूर्ववत् ।
सपश्यन् दिशमाग्नेयीमिम मन्त्रमदीरयेत् ॥ २३

"ॐ नम प्रलयात्माय कालस्यानलवर्च्चसे ।
विश्वस्यान्तकराग्नेय आग्नेयस्तु[1] नमोऽस्तु ते" ॥ २४

ततो बिन्दुह्रदे स्नात्वा भूयः पूर्ववदाचरेत् ।
अष्टमूर्त्ति नमस्कार त्रि प्रदक्षिणमेवच ॥ २५

देवस्यान्तर्गृहे भूयो ह्यर्च्चयेच्छक्तितो बुध ।
अर्च्चनाद्वारमासाद्य याम्या मन्त्रमुदीरयेत् ॥ २६

"ॐ नमोऽस्तु धर्मप्रभवे लोकाशेष विधायिने ।
रागद्वेषविनिर्मुक्त याम्य-रुद्र नमोऽस्तु ते" ॥ २७

बिन्दूद्भवजले तद्वदष्टमूर्त्ते प्रदक्षिणम् ।
चतुर्भि सोपहारेण कृत्तिवासोऽर्च्चन तथा ॥ २८

द्वारमासाद्य चाव्यग्रो विभुस्मरणतत्पर ।
नैऋती दिशमालोक्य इम मन्त्रमुदीरयेत् ॥ २९

"ॐ नमो बृहदुग्राय दष्ट्राश्मश्रुभृते नमः ।
भिन्नेन्द्रनीलवपुषे नमस्ते नैऋतात्मने" ॥ ३०

बिन्दुह्रदादिमूर्त्तीना तत कृत्वा च वन्दनम् ।
तथा पूजाविधि देव सप्रदक्षिण-पञ्चकम् ॥ ३१

ततस्तद्द्वारमागत्य सयतात्मा यतात्मन ।
उच्चारयेदिम मन्त्र दिशमालोक्य वारुणीम् ॥ ३२

"ॐ नमो रत्नाधिवासाय तोयात्मामृतयोनये ।
नम सर्वात्मने देव नमस्ते भृङ्गरीटये" ॥ ३३

ततो बिन्दुसर स्नान कृत्वाष्टौ मूर्त्तिवन्दनम् ।
प्रदक्षिण च पूजा च देवदेवाय पूर्ववत् ॥ ३४

पूजयित्वा महेशान द्वारमासाद्य यत्नतः ।
विलोक्य वायवीमाशा द्वारे मन्त्रमिद पठेत् ॥ ३५

---

1 $B_2$—आग्नेयस्त्व ।

"ॐ बलवीर्य-जगत्प्राण तथाग्नि रथसारथे।
उदारोन्माद प्रवह[1] वायु रुद्रात्मने नम" ॥ ३६

उग्रोदग्र[2] महत्तेज उदग्र परमेश्वर।
दशलक्षैकलक्षाय उग्ररुद्राय ते नम. ॥ ३७

भूय स्नानादिक कृत्स्न सप्तवारान् प्रदक्षिणम्।
द्वारे विलोक्य कौबेरी मन्त्रमेतन्मुदीरयेत् ॥ ३८

"ॐ नम शैलेन्द्रवासाय निधीना पतये नम।
सर्वप्राणिगते नाथ[3] रुद्र कौवेर ते नम" ॥ ३९

स्नानादिक तथा कृत्वा ह्यष्टौ देव प्रदक्षिणम्।
ऐशानी दिशमालोक्य नमस्कुर्यात्समन्त्रकम् ॥ ४०

"ॐ नमस्ते प्रभवेशाय मुमुक्षोमोक्षदायिने।
ज्ञानमूर्त्ते परातीत ऐशानी शिव शाश्वती" ॥ ४१

विशलक्ष्य त्रयीलक्ष्यमैशान्याशा समुद्यतम्[4]।
प्रयुज्यैक प्रयत्नेन पूजितास्ते भवन्ति वै ॥ ४२

स्नानमन्त्रपरा पूजामष्टभिर्मूर्त्तिभि सह।
कि वा न लभते कृत्वा नरस्तु मन इप्सितम् ॥ ४३

नानाधातुविकारैश्च जटामण्डलमुत्तमम्।
शिवमुद्दिश्य विप्राय दधाद् दान स्वशक्तित ॥ ४४

एकाहेन[5] इद कृत्स्न पुरा प्रोक्त स्वयम्भुवा।
स्नानानुलेपन कृत्स्न धूपवासस्रजादिभि[6] ॥ ४५

नानामन्त्रयुतैसार्थै[7] स्तात्रैर्हृद्यैश्च मानसै.।
गीतवादित्रहृद्यैश्च दीपजागरणैस्तथा ॥ ४६

---

1 $B_2$—रूपादि।

2 $B_2$—उग्रादुग्र।

3 $B_2$—सर्वप्राणिगतिर्नाथ।

4 V – विशान क्षत्रयो लक्षा ऐशान्याशा समुद्यने।

5 $B_2$—इह दाने।

6 $B_2$—धूपवासप्रजागरे।

7 $A_2$, $B_1$, C—तीर्थै।

नानासम्भारविस्तारैः कोटिं तस्य यथार्थवित् ।
लिङ्गं सुवर्च्चसं देवि ! पूजयेत् कृत्तिवाससः ॥ ४७

कोटिलिङ्गैरछिद्रेण यत् फलं समुदाहृतम् ।
असदिग्धस्तदाप्नोति श्रुतिरेषा पुरातनी ॥ ४८

ब्रह्मणा चरितं पूर्वं शक्रेण च यमेन च ।
लोकपालैः समस्तैश्च मुनिभिर्ब्रह्मवादिभिः ॥ ४९

कार्त्तिकस्य सिताष्टम्यां[1] पूजयित्वा त्रिचश्रषम् ।
तत्तु प्राप्तं परं स्थानं यत् सुरैरपि दुर्लभम् ॥ ५०

राजसूयाश्वमेधाभ्यां या गतिः समुदाहृता ।
तां गतिं समवाप्नोति विधिनानेन सुव्रत ! ॥ ५१

किं तस्य बहुभिर्यज्ञैस्तीर्थयात्राफलैरपि ।
मन्त्रैरुच्चावचैः स्तोत्रैः श्रुताध्ययनकादिभिः[2] ॥ ५२

कोटिलिङ्गविधानोक्तं सम्यग् येनोपपादितम् ।
सदा तस्य क्रियाः सन्ति ग्रहास्तस्यानुकूलगाः ॥ ५३

विजयं भोगमैश्वर्यमर्थलाभं दिने दिने ।
जीवमानो भवेत्पूज्यो मृतः स्वर्गे महीयते ॥ ५४

महादेवस्तु पौराणमाचष्टे स पितामहम्[3] ।
पितामहस्तु शक्रादीस्तत्रैव परिशुश्रुम.[4] ॥ ५५

भवतामिदमाख्यातं माहात्म्यं शङ्करस्य च ।
दुर्लभोऽयं मुनिश्रेष्ठ सर्वेषां प्रवरोत्तम ॥ ५६

कोटिलिङ्गार्च्चनविधिर्महापापभयापह[5] ।
सर्वपुण्य[6] समृद्ध्यर्थं सर्वेषां प्राणिनां गतिः ॥ ५७

---

1 $B_2$, V—कार्त्तिकस्यासिताष्टम्या

2 $B_2$ श्रुताध्ययनकारिभिः ।

3. $B_2$, V—महादेवेन पौराणमाचष्टे च पितामह ।

4 $B_2$, V—पितामहेन शक्रादिस्तत्रैव परिशुश्रुम ॥

5 $B_2$—कोटिलिङ्गार्च्चनविधिर्मरक्षा पापभयापह ।

6 $B_2$, V—सर्वकाम ।

अल्पायासो महापुण्य[1] सुखसाध्य सुखादित ।
अनुग्रहादय प्रोक्तो हैमवत्या स्वयमुवा ।। ५८

य इद कीर्त्तयेन्नित्य पठेद भक्त्य समुद्वहन्[2] ।
स्मरणात् कीर्त्तनाद् वापि सर्वपुण्यतमो मत ।। ५९

अविकल्पमिम धर्मं यस्तु मोहाद्विगर्हति ।
स पापिष्ठतरो ज्ञेयो भ्रूणहत्या लमेन् नर ।। ६०

स भूतगणनाशोऽयमधोगति विनिन्दक[3] ।
अनिन्द्या गतिमाप्नोति भक्त्या पूज्य पुराणकम् ।। ६१

देवान् पितॄन् गुरु ज्ञानमागमान्निखिलानपि ।
यो निन्दति स मूढात्मा पुराण श्रुति नैगमम् ।। ६२

हेतुवादेन ये मूढा निन्दा कुर्वन्ति नित्यश ।
अनिस्तरगतिस्तेषा महापातकिना यथा ।। ६३

तस्मात् विप्र प्रयत्नेन पुराण भजते बुध ।
आत्मश्रेयस्कर पुण्य पूजितव्य समागमे[4] ।। ६४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया तृतीयेऽशे कोटिलिङ्गार्च्चनविधिर्नाम त्रिचत्वारिशोऽध्याय[5] ।।

---

1 $B_2$, V—महत्पुण्य ।

2 $B_2$—पठेदभक्तियुतो नर ।

3 $B_2$—सभूतगणनाथोऽपि मध्ये ख्यातविनिन्दक ।

4 V—समागम ।

5 $B_2$, V—तृतीयेऽशे कोटिलिङ्गार्च्चनविधिर्नामैकादशोऽध्याय ।

# चतुश्चत्वारिंशोऽध्यायः

व्यास उवाच

एव भूतहित वाक्य श्रुत्वा ते मुनिपुङ्गवा ।
सुप्रीतिमनस सर्वे योगिनो गतकल्मषा ।। १

असित प्राह तन्मध्ये भक्तिनम्र कृताञ्जलि ।
सनत्कुमारमासीनमुपगम्य स धर्मवित् ।। २

तस्मिन् पुण्यवरे क्षेत्रे शिवसद्मनि चोत्तमे ।
यद् यदस्ति यथा भाव तन्ममाख्यातुमर्हसि ।। ३

असितस्य मत मत्वा प्राजापत्यो महामुनि ।
सुचिर ध्यानमास्थाय उवाच प्रहसन्निव ।। ४

सनतकुमार उवाच

क्षेत्रस्यास्य वरिष्ठत्व[1] प्रख्यात भुवनत्रये ।
सिद्धविद्याधरैर्जुष्ट देवेन्द्रैर्मुनिभि सदा ।। ५

असख्यश्चाप्रमेयोऽय नित्यश्चाक्षयमव्यय ।
कीर्त्तिरत्र च विप्रेन्द्र स्वल्पाप्यक्षयमेधते[2] ।। ६

इत्युत्कर्षफल श्रुत्वा वासुक्याद्याश्च पन्नगा ।
आजग्मुश्चाथ ते हृष्टा स्वर्णकूट हरश्रमम् ।। ७

वासकिस्तक्षकश्चैव कर्कोटक धनञ्जयौ ।
महोरगा महावीर्याश्चत्वारोऽमिततेजस ।। ८

धर्मार्थकुशला शान्ता सत्यव्रतपरायणा ।
कृत्तिवास समासाद्य ह्यष्टमूर्त्ति ववन्दिरे ।। ९

अभ्रावकाशे विविशत् स्फुरत्तेजोऽग्निमण्डलम् ।
वैडुर्य निकरोद्भास पद्मराग समप्रभम् ।। १०

---

1. B₂—प्रतिष्ठा त्व ।
2. B₂—स्वल्पस्याक्षयमेधते ; V—स्वल्पाल्पक्षयमेधते ।

सवरत्नमिवोद्भास           भूमिस्थमिवभास्करम् ।
सुप्रीतमनसः      सर्वे      ददृशुर्लिङ्गमुत्तमम् ॥ ११

विस्मयाविष्टदेहास्ते          रोमाञ्चिततनूरुहा ।
कर्त्तुमारेभिरे तत्र    प्रासाद    पन्नगेश्वरा ॥ १२

आहृत्योपलसभारमश्मसार          महोच्चयम् ।
उवाचान्तर्हिता देव    कुर्वतो  मेघनि स्वनम् ॥ १३

भुजगेन्द्र    महावाहो   उपसहर   चोद्यमम् ।
नाय काल  श्रमस्यास्य यद्भवान्  कर्त्तुमीहते ॥ १४
ब्रह्मणैव   पुरारब्ध   विष्णुना  च  मरुत्मता ।
अपरैरमरै   सर्वैः    कीर्त्यर्थं   मनुजेश्वरै ॥ १५

न हि कस्यचित् सिद्धोऽय  मनसैव  परिश्रम ।
न चैतत्  प्रीतिजननमस्माक   शृणुताण्डजजा[1] १६

कुरुतान्यत्र  नागेन्द्रा  क्षेत्रेऽस्मिन्  योजनायते ।
अह     तिष्ठामि सर्वत्र    प्रासादगुण भाजन ॥ १७

इत्युदाहृतमाकर्ण्य          तथेत्याहुरहीश्वराः ।
परमेश  नमस्कृत्वा  भोगिन   स्वपुर   ययुः ॥ १८

ग्रहा नागाः सुपर्णाश्च   यत्र  प्रासादमुत्तमम् ।
चक्रुर्दशसहस्र    च    तथा    पञ्चशतोत्तरम् ॥ १९

प्रासादाना  च तै     सर्वैस्तुङ्गतोरणमालिनाम् ।
प्रतिष्ठा शिवतन्त्रोक्ता  सम्यक् सिद्धोपपादिता ॥ २०

यस्मिन्  क्षेत्रवरे  पुण्ये    कामचारित्वमागतै. ।
मुनिभि षट्सहस्राणि चक्रिरे च शिवालयान्[2] ॥ २१

सहस्राण्यशीति   गन्धर्वै    सविद्याधरचारणै ।
शत      शतसहस्राणि   त्रिदशै    परिचक्रिरे ॥ २२

नवभिश्च सहस्राणि  नवभिश्च  शतानि  च ।
मनुजैश्चक्रिरे            पूतैर्ब्रह्मक्षत्रविशादिभि ॥ २३

---

1. $A_2$, $B_1$, C—शृणुताग्रजाः ।
2. $A_2$, $B_1$, V—शिवालया. ।

लोकपालै समस्तैश्च सूर्यचन्द्रमसादिभि ।
पर्जन्यैरष्टभि स्फीतैश्चक्रिरे च शत शतम् ॥ २४

अनेक युगपर्यन्ते कल्पानेकविपर्ययै ।
उत्पत्तिस्थितिसहारसदृशे चक्षुपाश्रये ॥ २५

प्रासादा बहवस्तत्र कृताश्च विबुधेश्वरै ।
क्रियन्ते बहवोऽद्यापि कारयिष्यन्ति चापरे ॥ २६

प्रलीनाश्च प्रलीयन्ते ससारेष्वपि देहिन ।
कर्त्तारो न प्रलीयन्ते कर्मणा सुकृतेन च ॥ २७

गिरयश्च क्षय यान्ति शोषमायान्ति सागरा ।
न कर्म क्षीयन्ते पु सा कल्पकोटिशतैरपि ॥ २८

एकाम्रकवने पुण्ये स्वर्णकूटे हराश्रमे ।
प्रासादेनाणुमात्रेण कृतकृत्यो भवेन्नर ॥ २९

प्रासादाश्च प्रलीयन्ते कालातीते युगक्षये ।
कर्त्तारो न प्रलीयन्ते कल्पकोटिशतैरपि ॥ ३०

एकाम्रकवने पुण्ये स्वर्णकूटाद्रिशेखरे ।
ये वसन्त्यप्यहोरात्र काश्या कोट्यधिक फलम् ॥ ३१

स श्लाघ्य स कुलीनश्च स धन्य स च पण्डित ।
यस्य चैकाम्रके क्षेत्रे प्रासादोऽस्ति शिवालये ॥ ३२

प्रासादगुणसपूर्णा यत्र यत्र मही त्वियम् ।
अन्यक्षेत्राच्छतगुण पुण्य चात्र विशिष्यते ॥ ३३

रुद्राराधनशस्तोऽग्र प्रासाद कामदो विभो ।
अनन्तमजरप्राप्ति कृत्तिवासप्रसादत ॥ ३४

प्रासादाश्चतुरस्तत्र चक्रिरेऽह्नीश्वरास्तत ।
पूजयामासुरव्यग्रा देवदेव महेश्वरम् ॥ ३५

देव प्रसन्नो ह्येषा तु नृत्यगीतैर्मनोहरै ।
धूपैर्दीपैश्च नैवेद्यै स्रजोभिर्बहुमूल्यकै ॥ ३६

तेभ्यो दत्वा वरान् देवस्तत्रैवान्तरधीयत ।
जिह्मगा कृतकृत्याश्च जग्मु स्व स्व पुर ततः ॥ ३७

न तेन सदृश कश्चिदन्यऽस्ति भुवनत्रये ।
सर्वकामसमृद्धयर्थं मूर्त्तिरेषा सनातनी ॥ ३८

पुनरावृत्ति दु.खार्त्ता द्वन्द्वमोहादिसस्थिता ।
जरामरण उद्विग्ना रोगग्रहनिपीडिता ॥ ३९

आत्मन श्रेयमिच्छन्ति पिवन्त[1] परमौषधम् ।
दु खभाजो भवेयुर्न तरन्त्यखिलमापद ॥ ४०

निरामय तदमृत पिव ससारभेषजम् ।
भजस्व च विरूपाक्ष भवदु खकुठारकम् ॥ ४१

त्रातार परमेशानमनन्तमजमव्ययम् ।
कोटिलिङ्गावृत मुख्यमष्टमूर्त्तिधर हरम् ॥ ४२

शिवेति नीलकण्ठेति शङ्करेति हरेति च ।
पार्वतीप्राणनाथेति वद जिह्वे निरन्तरम् ॥ ४३

शिव. शम्भु शिव शम्भु शम्भु शम्भु शिव शिवः ।
इति व्याहरतो नित्य दिनान्यायान्तु यान्तु मे ॥ ४४

पुनर्वक्ष्यामि माहात्म्य शङ्करस्याघनाशनम् ।
इन्द्राद्यर्च्चितपादस्य प्राणिना मुक्तिद शुभम् ॥ ४५

शृणुष्व द्विजशार्द्दूल ! पुराण परम शिवम् ।
अनादि परम पार य वैध्यायन्ति योगिन ॥ ४६

स्वयभुव जगद्बीज स्वर्णकूटाद्रि-सस्थितम् ।
वर वरेण्य वरद को न सेवेत शङ्करम् ॥ ४७

अधरोत्तरमध्येषु बाह्याभ्यन्तरकेष्वपि ।
आत्मदेहभृता यद्वद् भूयिष्ठ परिपठ्यते ॥ ४८

तद्वत् सर्वेषु भूतेषु गिरिष्वपि न विद्यते ।
प्रभुः प्रभव विश्वेश कृत्तिवासो जगद्गुरु ॥ ४९

निवोधेद मुनिश्रेष्ठ क्षेत्रे वृत्त पुरातनम् ।
सुपर्णेन यथाराध्य प्राप्तमैश्वर्यमुत्तमम् ॥ ५०

पद निधिं च वित्तेशादमोघ बलपौरुषम् ।
अव्याहतगति चोग्रा माहात्म्यमघवोर्जितम् ॥ ५१

पतगेन्द्रत्वमापासौ प्रसादात् कृत्तिवासस ।
तेजस्वी शक्रदर्पघ्नो विष्णु[2] साक्षान्मनोजव ॥ ५२

---

1 $B_2$, V—पिवन्तु ।

2 $B_2$—विष्वो ।

कश्यपस्यात्मज श्रीमान् विनतानन्दवर्धन ।
तेनाराध्यो विरूपाक्षोऽप्यर्थकामप्रद शिव. ॥ ५३

पूर्वदेहेन विप्रर्षे तिर्यग्योनि गते सति ।
पक्षिभ्या चैव रेमेऽसौ क्रीडनासक्तचेतस ॥ ५४

बाल्यत्वे सहजे जन्म अस्मिन् अस्मिन् समागतम् ।
चकारायतन किंचिल्लोष्टोपल-विमिश्रितम् ॥ ५५

अज्ञानादणुमात्र चेत् कृत तेन शिवालयम् ।
तस्य व्युष्टिमिमा पश्य दु साध्य त्रिदशैरपि ॥ ५६

तार्क्ष्यस्य च पुनर्जन्म निबोध गदतो मम ।
पुरा विन्ध्ये महात्मानाववसद् व्याघ्रपल्लिका ॥ ५७

अतीव जनसकीर्णा मृगपक्षिविवर्जिता ।
शाकमूलफलैर्हीना निस्तोया ह्यल्पपादपा[1] ॥ ५८

इत्थभूत विहायाशु पार्वत्यास्तेऽन्यतो ययु ।
इतरे तु धराया तु मृगवृत्त्योपजीविन ॥ ५९

एकस्य बुद्धि सजाता देवार्च्चा प्रति सत्तम ।
स्वय सस्कृत्य पाषाण लीलया परिसचयन् ॥ ६०

जानुमात्र समुच्छ्रेक चक्रे पाषाणसञ्चयम् ।
कल्पयित्वा शिवस्थान पाणिभ्या जलमाहृतम् ॥ ६१

स्थापित बहुभिर्वाग्भि पूजित तरुपल्लवै ।
तूर्यवाद्यैमुखोद्घृष्टैवाद्य चैव चकार स. ॥ ६२

कृत्वा दण्डप्रणाम च ययौ वेश्म-विकल्मष ।
गते कतिपये काले स काल कालधर्मिणाम् ॥ ६३

निजकर्मविपाकेन पीडितस्तु क्षय ययौ ।
ततोऽसौ सुचिरे काले सुमन्तोऽस्तु[2] सुतोऽभवत् ॥ ६४

मध्यदेशे महात्मासौ चतुर्वेदविदोऽसित[1] ।
महाभिजनसम्पन्न कृतिर्नाम्ना कुमारक ॥ ६५

सुपर्णमिति धर्मात्मा ,रूपवान् गुणभाजन ।
ज्ञातीना वल्लभ सौम्य कुमारो वेदवान् बली ॥ ६६

---

1 $B_2$—हृतपादपा ।

2, $B_2$, V— ब्राह्मणस्य ।

वेदतत्त्वार्थतत्त्वज्ञ प्राप्त षोडशवर्षक ।
दारसग्रहणे काले उपश्रुत्य पितु सुतः ॥ ६७
विनयात् शनकै प्राह धर्मो मनसि वर्त्तते ।
धर्मक्रियामकृत्वान्तर्य कुर्याद्[1] दारसग्रहम् ॥ ६८
नासौ सुखमवाप्नोति प्रवदन्ति मनीषिण ।
किं चाशय समास्थाय भवान् वेदितुमर्हति ॥ ६९
मातृतातौ न सहृष्टौ श्रुत्वा धर्म सुतोदितम् ।
परिष्वज्य च त स्नेहाच्चुम्वित्वा पुनरुचतु ॥ ७०
साधूदित तात ! इद धर्म कृत्स्न च सर्वदा ।
चित्ते धर्म. कथ त्वेष य त्व वक्ष्यसि पुत्रक ।
कुरुष्वाभिमत पुत्र यत्ते मनसि वर्त्तते ॥ ७१

इत्यैकाम्रपुराणे षट् साहस्यामैश्वर्या सहिताया तृतीयेऽशे पितृपुत्रको नाम चतुश्चत्वारिंशोऽध्याय [2] ।

1 B₂, V—धर्मक्रियामकृत्वा य कुर्यात्तु ।
2 B₂—तृतीयेऽशे पितृपुत्रकथा नाम द्वादशोध्याय ,
V—तृतीयेऽशे पितृपुत्रसकथा नाम द्वादशोऽध्यायः ॥

# पञ्चचत्वारिंशोऽध्यायः

## सनत्कुमार उवाच

पितुर्वाक्याच्चिरं प्राह कुमारं प्रहसन्निव ।
शृणु मद् वचनं तात ! परलोकजयप्रदम् ॥ १

गन्तुमेकाम्रकं क्षेत्रं कृत्तिवासोऽन्तिकं विभो ।
प्रासादं कर्तुमिच्छेय[1] शिवसन्निहितं हितम्[2] ॥ २

एकोनकोटिमध्ये तु प्रासादेन शिवार्च्चनम् ।
न तेन सदृशं पुण्यं राजसूयाश्वमेधयोः ॥ ३

श्रुतोऽहि[3] विदुषां वाक्यं पुराणं विधिनिर्णयम् ।
पृथिव्यां यानि तीर्थानि तेषां पुण्यं समं न तु ॥ ४

कृतप्रासादकृत्स्नस्य यत्फलं समुदाहृतम् ।
एकेनाप्यत्र तत् सर्वं सविशेषं फलं स्मृतम् ॥ ५

एकाम्रके यदेकेन प्रासादेन लभेत् पदम् ।
नान्यत्र शतसाहस्रैस्तद् वदन्ति मनीषिणः ॥ ६

देवायतनकोटीनामेकेनात्र हराश्रमे ।
प्रासादेन लभेत् व्युष्टिं[4] प्रासादात् कृत्तिवाससः ॥ ७

इति पुत्रवचः श्रुत्वा परं सारामृतोपमम् ।
आत्मजं शान्तिपूर्वेण तथेत्याह द्विजोत्तमः ॥ ८

स दारापत्यमादाय सर्वस्वमपि किंचन ।
प्रस्थितः सोऽग्निहोत्रेण क्रमेण शिवतत्परः ॥ ९

---

1 $B_2$—इच्छामि ।

2 $B_2$—शिवस्य सहितं शिवम् ।

3 $A_2$, $B_1$, C, U—अहं ।

4 $B_2$—लभेत् पुण्यं ।

देवस्याज्ञाप्रसादेन आससाद हराश्रमम् ।
ऊनकोट्यालय दिव्य महालयपरिणतम्[1] ।। १०

स्नानतर्पणपूजादि यथावत् विधिपूजितम्[2] ।
निर्वर्त्य निखिलामिज्यामभवत् शुद्धकल्मष ।। ११

सुपर्णं प्राह[3] पितर मातर विनयान्वित ।
इच्छामि तात ! पूर्वोक्तमस्मिन् क्षेत्रे शिवालये ।। १२

वसु प्रयच्छ भो मह्य प्रसाद सुमुखो भव ।
दायादवचनादेष ददौ वित्तमतन्द्रित[4] ।। १३

तदादाय चकाराशु प्रासाद गुणवत्तरम ।
वन्द्य प्राकारमत्यर्थं हैमवैडुर्यमिश्रितम् ।। १४

मणिकाञ्चनचित्राढ्य तोरणादिसमन्वितम् ।
गवाक्षशतमुद्भास पताकोज्वलमालिनम् ।। १५

अभ्यासे तस्य लिङ्गस्य चक्रे कुण्ड[5] जलाशयम् ।
सोपानपदसयुक्त स्नपनाय महेशितु ।। १६

विन्दूद्भवाददूरेण प्रागेव स महामति ।
कृत्तिवासस्य ऐशान्या धेन्वन्तरस्य सप्तति ।। १७

प्रतिष्ठा विधिना कृत्वा समाप्तवरदक्षिणाम् ।
जातिस्मरत्वमापासौ भक्तिमव्यभिचारिणीम् ।। १८

सम्पादयित्वाभिप्रायमाजन्मान्तरमीहितम् ।
कृतकृत्योऽभवत् प्रीत्या नाम चक्रे स्वयम्भुव ।। १९

सुपर्णस्य प्रतिष्ठानाज्जलादुपलसस्थितात् ।
सुपर्णजलेश्वरोऽय वै सुरसिद्धैर्निगद्यते ।। २०

प्रीत्योपास[6] चकारासौ देवदेव स्वयम्भुवम् ।
मातृतातौ तदा काले प्राहतुस्तनय वच ।। २१

---

1 $A_2$, $B_2$, V—महाप्रलयपरिणतम् ।

2. $A_2$, C—विधिपूववत् , V—विधिपूर्वत ।

3. $B_2$, V—सुपर्णोऽथाह ।

4. V, $A_2$—अतन्त्रित ।

5 $B_2$—मुण्ड ।

6 $A_2$—प्रीत्येसा, $B_2$—प्रीत्योपासा, V—प्रीत्योपास्य

श्रुतिस्मृत्यादिक धर्मं पौराणमृषिभाषितम् ।
सन्तते कारण पुण्य पितृणा प्रीतिवर्द्धनम् ॥ २२

धर्माश्रयी धर्मं धर्मः सन्ततिः साधुसम्मता ।
विच्छिन्न सन्ततिर्नाशमुच्छिन्नेव वनस्पति ॥ २३

निराशाः पितरस्तस्य लुप्तपिण्डोदकक्रिया ।
पतन्ति नरके घोरे सर्वकर्मवहिष्कृताः ॥ २४

ऐहिके च परत्रापि वृथाजन्म उदाहृतम् ।
एष तेऽभिहितो धर्मं कुरुष्व ह्यभिशङ्कित[1] ॥ २५

दार-सहरण शस्तं मद्वाक्येन समाचर ।
पौत्र धर्मं[2] समीहन्ते पूर्वं प्रेतपितामहाः ॥ २६

तस्मात् त्वमपि मेधावी गार्हस्थ्य-विधिमाचर ।
निशम्य पितुरेतत् स उच्चेऽथ विनयान्वित ॥ २७

ध्यात्वा स्वानुभव तथ्यमुपलब्ध यथा पुरा ।
दुःख सासारिक कष्ट गर्भवासादि सम्भवम् ॥ २८
वेदागम विरुद्ध च येनाहु भवसम्भव. ।
कुशैकमात्रा नि सार महा मोहसमन्वितम् ॥ २९
दुःखशोकमय[3] तीव्रमनालयमशाश्वतम् ।
अनाप्त च असम्बन्ध मृत्योश्च नानुवर्त्तनम् ॥ ३०

दुर्गाह्य[4] चञ्चल ध्वस्त विषयासक्तचेतसम् ।
दुस्थिर दुर्दश[5] मूढमकार्यमपरिग्रहम् ॥ ३१
सर्वावस्थमसवाह्यमनवस्थानमेव च ।
नोत्सहे तात ! दुःखान्त पुनरावृत्तिसभवम् ॥ ३२

अत्यद्भुत महद् घोर कर्मज दुरतिक्रमम् ।
उद्विग्नोऽह भृश तात ! ससार प्रति सकटम् ॥ ३३

1 $B_2$, V—ह्यविशङ्कित ।
2. $B_2$—पौत्रधर्मं ।
3. $B_2$—दुःखमोहमय ।
4. $B_2$, V—दुर्ग्राह्य ।
5. $B_2$—दुर्धर ।

क्व नु तेऽद्य पिता तात ! क्व नु ते प्रपितामहा ।
गताश्च न निवर्त्तन्ते द्वितीयो नोपपद्यते ॥ ३४

एकाम्रकवने क्षेत्रे कृत्तिवासोऽर्च्चनाद् बुध ।
अनुभूत मया तात ! प्राड्मदीय फल त्विह ॥ ३५

इति तुष्णी भवत्[1] प्राज्ञ काल जाति विवेचन[2] ।
विभाव्य सुचिर ध्यात्वा तपो विहितमानस ॥ ३६

एतच्छ्रुत्वा पिता तस्य विस्मयाविष्ट-चेतस ।
उवाच तनय भूयो हित सानुनय वच ॥ ३७

## पितोवाच

त्रयीधर्मस्त्रयी विद्या पारपर्य क्रमागता ।
अविच्छिन्न स्वय पन्था योग स्वायम्भुवो मत ॥ ३८

दुर्लंघ्य सेतुभूतोऽय वेदार्थप्रतिपादक ।
गृहाश्रम परो धर्मो वदन्तीति मनीषिण ॥ ३९

साय प्रातश्चाहूतिश्च पञ्च यज्ञ दिने दिने ।
अग्निहोत्र प्रवृत्तिश्च वलिकर्माण्यशेषत ॥ ४०

अर्च्चन पितृदेवाना दारावेक्षण-सत्क्रियाम् ।
कृत्वा शेष च भुञ्जानो ब्राह्मणो नावसीदति ॥ ४१

यजन याजन चैवाध्ययनाध्यापने तथा ।
दान प्रतिग्रहश्चैव षट् कर्माणि द्विजोत्तमे ॥ ४२

ग्रहा नागा सुरा सिद्धा मनुष्या पितरस्तथा ।
तुष्टा स्युर्ब्राह्मणे तुष्टे ब्राह्मण को न पूजयेत् ॥ ४३

अधरोत्तर च वर्त्तन्ते क्रिया यज्ञफलाश्रिता ।
भूमिदेवसमो देवो न भूतो न भविष्यति ॥ ४४

सुदुष्प्राप्यमिद प्राप्य जन्म चाग्र्यमनुत्तमम् ।
किमुपेक्ष्यसि चात्मानमधो नयितुमात्मज ! ॥ ४५

लौकिकीं वृत्तिमुत्सृज्य अग्रेणारोहसि द्रुमम् ।
क्रमेण शस्यते धर्मस्तरणे भानुवच्च खे ॥ ४६

---

1 V—इति तुष्टयभवत् ।

2. B₂—कालधर्मं विवेचवः ।

गार्हस्थ्य-धर्ममास्थाय भज देव त्रिलोचनम् ।
पुत्रस्योत्पादन कृत्वा पश्चात् कुरु यथेप्सितम् ॥ ४७

एव विध[1] समास्थाय शिवभक्तो दृढव्रत ।
प्राप्स्यसे परम स्थान प्रसन्ने वृषभध्वजे ॥ ४८

श्रुतिरेषा चौपयिकी साप्रत वद यत् श्रुतम् ।
दृष्ट वा त्वदनुभूत[2] वा यथार्थं वक्तुमर्हसि ॥ ४९

## सनत्कुमार उवाच

पितुर्वाक्यमिद श्रुत्वा जगादैव कुमारक ।
अनुमानेन वोद्धव्यमपरस्य परस्य च ॥ ५०

सभूतिश्च यथा चैकस्तथा जन्मशतैरपि ।
स्ववृत्तान्तमिद तात ! निबोध गदतो मम ॥ ५१

मृगादो[3] नाम नाम्नासीद् व्याध प्राणिवधात्मक ।
हिस्रक सर्वसत्वाना वने वसति नित्यश ॥ ५२

पत्नी चन्द्रमुखी नाम्नी तस्याह गृहदारक ।
सर्वास्त्रकुशलः शूरो मृगमासेषु लोलुपः ॥ ५३

अनेकैर्बान्धवै.[4] सार्द्धं वानस्पत्योपजीविभि ।
स्वर्णकूटगिरे सानौ निवसामो हराश्रमे ॥ ५४

अह बालसमं सख्यै क्रीडन् वै वनगोचर ।
चरतो मे मनो जात करिष्येऽह शिवालयम् ॥ ५५

दृष्ट्वा शिला सन्निहितामादाय दश पञ्च च ।
नरशीर्ष-प्रमाणेन स्वरूपेण वृतो ह्यहम् ॥ ५६

चकार सञ्चय तत्र प्रासादपरिकल्पनाम् ।
मध्ये तस्य शिव ध्यात्वा पूजितश्चापि शङ्कर ॥ ५७

ततश्चाप समीपस्था गृहीत्वा करसपुटे ।
स्नापितश्चार्च्चितो भूयो यथेष्ट तरुपल्लवै ॥ ५८

---

1. $B_2$, V—एव विधि ।
2. $A_2$, $B_1$, C —त्वनुभूत ।
3. V—मृषादो ।
4. $B_2$—अनेकबान्धवै ।

इदमन्तरमासाद्ध तत प्राप्ता कुमारका ।
जहसुस्ते तदन्योऽन्य पश्यमाना मया कृतम् ।। ५६

केचिच्च प्रशशसुर्मा केचिद्देव प्रपूजिरे ।
नन्दन्त्यन्ये हसन्त्यन्ये जगुश्चान्ये निवृत्य च ।। ६०

प्रतिष्ठित वदन्त्यन्ये क्रीडासक्ता कुमारका ।
मध्य दिने गते सूर्ये ततस्ते स्वगृह ययु ।। ६१

गच्छता पथि दृष्टो मे दारुणो रोमहर्षण ।
पाशदण्डधरश्चोग्रो भिन्नाञ्जनचयोपम ।। ६२

मामुपेत्याब्रवीत् निवर्त्तय विमूढधे ।
साप्रत चापि नार्होऽसि व्याधवेश कुमारक ।। ६३

इत्युक्त्वा भीमरूपेण पाशेनानलवर्च्चसा ।
ततो जग्राह मा शीघ्र धर्मराजो दयापर ।। ६४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्य्या सहिताया तृतीयेऽशे[1] पितृ सम्बोधन नाम पञ्चचत्वारिंशोऽध्याय ।।

---

1 B2, V—तृतीयेऽशे पितृसबोधन नाम त्रयोदशोऽध्याय ।

# षट्चत्वारिंशोऽध्यायः

## श्री सनत्कुमार उवाच

सुमन्त सह पत्न्याथ[1] पर विस्मयमानस ।
निषिध्य तनय विप्रानाजुहाव तपोवनात् ।। १

आरेभेऽसौ धन दातु ब्राह्मणादीश्चार्थिन[2] ।
सुपर्णाश्च[3] महादानान् हयान् वस्त्रान् विधानत ।। २

आयस रजतं ताम्र मणिमुक्ताफल बहु ।
वैडुर्य्याभरणान् शुद्धान् ददौ देव द्विजातये ।। ३

अन्नपानादिक सर्वं यच्चान्यद् वसु किञ्चन ।
निवेद्य द्विजदेवाश्च[4] स्नातो बिन्दूद्भवे सरे ।। ४

पुरतो वासुदेवस्य जलान्ते नियतात्मवान् ।
सन्ध्या पिण्डोदक सम्यगनन्ताय तथार्च्चनम् ।। ५

कृत्तिवाससमीशान सपूज्य विधिवत् शुचिः ।
सह पुत्रकलत्रस्तु चकार व्रतमुत्तमम् ।। ६

प्राप्य वर्षसहस्रैक यतचित्तो जितेन्द्रिय ।
वृद्धे च माता पितरि सुपर्ण[5] पर्य्युपासति ।। ७

अनुज्ञातस्तु गुरुणा देवकार्यं करोति स ।
जितात्मा नियताहार शिवसद्भावभावित ।। ८

पूर्णे वर्षसहस्रान्ते पिता पुत्रमभाषत ।।
जातिस्मरण मेधावी शत्रुजेता भवत्विति ।। ९

---

1. V—गत्वाऽथ ।

2. $B_2$—ब्राह्मणानपि चार्थिनः ।

3. $B_2$—सुवर्णाश्च ।

4. $B_2$—द्विजवर्य्येभ्य ।

5. $A_2$, $B_1$—सुवर्णः ।

इदमाख्यानमुक्त्वा स द्विजस्तु द्विजराजवत् ।
दृष्टः सर्वजनैर्विप्र दिवमारुरुहे सुखी ॥ १०
गते पितरि पञ्चत्व चकार विधिवत् क्रियाम् ।
लक्षजन्मान्तराभ्यासाद् भक्तिमान् वृषभध्वजे[1] ॥ ११
अष्टायतन-दिव्याम्बुस्नान-पूजा-प्रदक्षिणम् ।
कृत्तिवाससमीशानश्मष्टाङ्ग[2] शतवन्दनम् ॥ १२
स्वर्णजालेश्वरे तद्वत् चक्रे पूजा द्विजोत्तम ।
यथाहनि तथा रात्रौ शिवैकगतमानस ॥ १३
भक्षकाले च सप्राप्ते कन्दमूलफलाशन ।
युक्ताहारविहारोऽसौ युक्तचेष्ट स्वकर्मसु ॥ १४
युक्तस्वप्नावबोधश्च शिवयोगपर सदा ।
सम शत्रौ च मित्रे च समलोष्टाश्मकाञ्चन ॥ १५
आसन्नमृत्यु विज्ञाय सुपर्ण शिवसन्निधौ ।
विशेषमकरोत् पूजा लिङ्गमूर्त्तौ स्वयम्भुवे ॥ १६
तुष्टाव वाग्भिरिष्टाभिर्नानाछन्दपदाक्षरै ।
रुद्र रुद्रमयै स्तोत्रैस्तद्गतेनान्तरात्मना ॥ १७
पाणौ कुट्मलमाबध्य प्रगृह्य कुसुमाञ्जलिम् ।
शिव च स्तोतुमन्विच्छन् गतवान् तदुपाश्रमम् ॥ १८
ॐ नमस्ते परमार्थाय तत्वार्थप्रतिपादिने ।
शिवाय शम्भवे तुभ्य भूतभव्यभवाय च ॥ १९
आद्यादादिविधात्रे च देवाय परमेष्टिने ।
कैवल्यज्ञानसम्पन्न ! विधात ! सर्वतोमुख ! ॥ २०
एकानेकाधिकायापि शाश्वताय पराय च ।
पुराणाय पवित्राय[3] नीलकण्ठाय वेधसे ॥ २१
गुह्याय चातिगुह्याय निर्गुणाय गुणात्मने ।
अक्षरायाप्रमेयाय प्रज्ञाय विदितात्मने ॥ २२

---

1 V—स वृषध्वजे।

2 $A_2$, $B_1$—कृत्तिवाससमाख्यान ।

3 $A_2$, $B_1$, C—अपवीताय ।

अभिष्टुताय योगाय योगेश्वर नमोऽस्तुते ।
बाह्यमभ्यन्तरावास वामदेव वमोऽस्तु ते ॥ २३

स्थूल सूक्ष्ममयो देव प्राणायममय सदा ।
पञ्चभूत गुणास्त्रीणि इन्द्रियाणि मनोमयम्[1] ॥ २४

वायवश्च मनश्चैव क्षेत्र क्षेत्रज्ञ एव च ।
त्वामाहुर्मुनय सर्वे पञ्चब्रह्मन्[2] नमोऽस्तुते ॥ २५

त्वमोकारो जगद्वीज त्वत् प्रसूतिश्चराचरम् ।
होता होतृ सदोऽध्वर्युर्दीक्षित स्वयमाहुति. ॥ २६

हव्यवाहो हविर्द्धीमान् गिरीशो नीललोहित. ।
उग्र पशुर्मातरिश्वा ऋक् साम यजुषात्मक ॥ २७

पुराण परमानन्द कौशिकी गिरिजाप्रिय ।
पर धाम पर ज्योतिरजराक्षर अव्यय ॥ २८

प्रसीद परमेशान गत्यभीष्टप्रदायक ।
भवान्[3] विनयपात्रस्त्व भक्ताना भक्तवत्सल ॥ २९

प्रपन्नार्त्तिहरो देव दु खसयोग भेषज ।
भवकान्तारदावाग्नि स्मरारि परमेश्वर. । ३०

शक्तिवीज जगद्वीज व्यालयज्ञोपवीतिने ।
चिताभूतिभृते[4] देव सहस्रशिरसे नम ॥ ३१

ग्रहमण्डलमत्यर्थ सावित्र्यक्षर स प्रभु ।
जटामण्डलमासाद्य भाति गङ्गा तपस्विनी ॥ ३२

दिव्याब्दशलपर्यन्त त्वा नमामि त्रिलोचनम् ।
गङ्गाधरारविन्दाक्ष ! हिमकुन्देन्दुवर्च्चसे ! ३३

मयुखविकचोष्णीषे शूलपाणिपिनाकिने ! ।
द्विपिचर्मधर श्रीमान् कपाली वृषभध्वज ॥ ३४

---

1 A2, B1, C—मनोमया ।

2. B2, V—पञ्चब्रह्म ।

3 A2—भगवान् ।

4. B2, V—चितिभूतिभूते ।

ससारोत्तारहेतुस्त्व कृत्तिवास नमोऽस्तु ते ।
शम्भु स्त्वयभूर्भगवान् शितिकण्ठ कपर्द्दिने ॥ ३५

दिगिन्द्राजितदोर्द्दण्ड प्रकाण्ड पृथुलाय च ।
त्रिजगद्धितदोनस्त्वमण्डजो नाश विभ्रम ॥ ३६

भ्रमिचक्रमिवाबिद्ध त्रैलोक्य चलनक्रमात् ।
क्रान्त रुद्र जगद्ग्रस्त त्र्यम्बकस्त्व नमोऽस्तु ते ॥ ३७

विकराल विरूपाक्ष विभ्रद् भैरव विश्वजित् ।
नादबिन्दु विनोदोऽसि शब्दातीत अगोचर ॥ ३८

हेयाहेया-विनिर्भक्त जन्ममृत्युजरापह ।
महादेव ! स्मरारिघ्न! योगिध्येय ! नमोऽस्तु ते ॥ ३९

अविकल्प नमस्ते[1] सकलसुरशिरसाभ्यर्च्चित-पादपद्म ।
त्रिदशमुनिभिर्वेदविद्भिर्द्विजोत्तमै स्तुतिवचनोपरचतुर. ॥ ४०

कनककूटाद्रि-शिखरासीन परमेष्टि
पदार्च्चित लोकसाक्षिणमनन्तम् ।
प्रकटपटु कोटिलिङ्गार्च्चित भजस्व
सुरेश कृत्तिवाससमनिशम ॥ ४१

निर्मलयशसमीशातार परमपद पारभूत वन्दे ।
अभिमतफलद शाश्वत पाकशासनादि-
मरुत्सेवितपादकमलम् ॥ ४२

चतुराननेन्द्रवन्द्याय चन्द्रार्द्धशेखराय च ।
चिद्रूपाय परेशाय परमार्थप्रदाय च ॥ ४३

नम शिवाय शान्ताय गोब्राह्मणहिताय च ।
जगद् हिताय रुद्राय ईशानाय नमो नम ॥ ४४

नमो ह्रस्वातिह्रस्वाय ब्रह्न्मूर्त्तिमते नम॰।
नम कृशानुरेताय तेजस्तेजोवता वर ॥ ४५

स्तूयमानोऽथ तेनासौ प्रत्यक्षमभवत् शिव ।
दर्शयामास चात्मान स्वरूप नकुलीश्वर ॥ ४६

उवाच मधुर श्लक्ष्ण सुप्रीतेनान्तरात्मना ।
वर वृणीस्व भद्र ते वरदोऽहमिहागतः ॥ ४७

---

1. $B_2$, V—अविकलफलद नमो नमस्ते ।

व्रतचर्यासु निष्ठेन स्तोत्रेणानेन चानघ ! ।
तुष्टो वर ददाम्येतद् यत् सुरैरपि दुर्ल्लभम् ॥ ४८

इत्याकर्ण्य विभोर्वाक्य स मुनि प्रीतिमान् वभौ ।
तमपश्यदमोघ तु हैमवत्या वर शिवम् ॥ ४९

नमश्चक्रे च देवेशमष्टाङ्गेनावनी गत ।
उवाच विहसन् वाक्य सुपर्णो वाक्यवित्तम ॥ ५०

यदि प्रसन्नो भगवान् यद्यनुग्रहतास्ति मे ।
देव्या अभिमतेनाथ[1] प्रयच्छ प्रवर वरम् ॥ ५१

देवे द्विजे गुरौ धर्मे भक्तिरस्तु सदा मम ।
मम देहे व्यवच्छिन्ना शक्तिरव्याहता गति. ॥ ५२

त्रैलोक्य बलमुर्जित्य त्ववध्योऽह सुरप्रिय. ।
देवारणि समुद्ध तमिच्छेऽह त्वत् प्रसादत ॥ ५३

एवमस्त्विति भगवास्तत्रैवान्तरधीयत ।
सुपर्णः कृतकृत्योऽसौ तानुवाच तपोधनान् ॥ ५४

लिङ्गस्य पुरतो भूत्वा पुरावृत्त पुरातनम् ।
पक्षित्व शवरत्व च जातिस्मरणमेव च ॥ ५५

परलोके च यद् वृत्त कर्मजाश्च शुभाशुभान्
ब्राह्मणत्व च दुष्प्राप्य विद्याग्रहणमेव च ॥ ५६

क्षेत्रस्यागमन चैव प्रासादरचना तथा ।
माहात्म्य क्षेत्रराजस्य तथा देवगृहस्य च ॥ ५७

उपलब्ध पुरा चाद्ये चरित साम्प्रतस्य च ।
परितुष्टस्य देवस्य वरलब्धस्य चात्मन ॥ ५८

ॐ नम शिवायेति जल्पन् तस्मिश्च लयमाश्रित ।
जगाम त्रिदिवादुद्ध्वं शिवलोक निरामयम् ॥ ५९

बहुमन्वन्तरातीते[2] कल्पदायात् परे गते ।
अप्सुप्लवगते विश्वे भूय सृष्टि समुद्भवे ॥ ६०

---

1 $A_2$, $B_1$, C—देव्यास्त्वभिमतेनाथ ।

2. $B_3$, V—अनेकमन्वान्तरातीते ।

ब्रह्माविष्णुशिवतमे रज सत्त्वतमोमये[1] ।
ब्रह्मनिर्माणजे भूते मारीच्या काश्यपोद्भवे ॥ ६१

दैत्या सुरा दानवाश्च दाक्षायण्या च जज्ञिरे ।
गन्धर्वा मुनय· सिद्धा यक्षविद्याधरोरगा ॥ ६२

लोकपाला दिशो भूमि समुद्रास्तरवो मृगाः ।
कुलशैला यमाश्विनौ केचिद् द्यावा चराचरा ॥ ६३

लोकालोकविलोकेषु भूतग्रामाश्चतुर्विधा ।
उत्पन्नास्तत्रजातोऽसौ विनताकश्यपात्मज ॥ ६४

तपसा बालखिल्यादि इन्द्रस्य बलसूदन ।
अमृतस्य च हर्त्ता च महामखसमुद्भव ॥ ६५

विष्वोस्तु वाहनत्वाच्च वैष्णवत्वमुपागत ।
विननाद् वैनतेयस्तु कश्यपात्तार्क्षता गत ॥ ६६

सुपर्ण पत्रशोभाढ्यो भुजगाशी मनोजवः ।
अप्रधर्षो ह्यदीनात्मा विष्णुसख सुरेश्वर ॥ ६७

पतगेन्द्रो हिरण्याक्षो निषादादो विकल्मष ।
गजकच्छपभुञ्जान सुप्रतीक[2] विभावसु ॥ ६८

पारिजात जहारासौ विनिर्जित्यामरावतीम् ।
दैत्यान्तकरण साक्षात् पावकादित्यवर्च्चस· ॥ ६९

कामग कामचारी च विश्वजित् विश्वतो हित ।
प्रसादगुणमात्रे[3] तु प्रसन्ने कृत्तिवाससि ॥ ७०

तेनेद प्राप्तमैश्वर्यमद्वितीय बृहद्गुणम् ।
क्षेत्रस्यास्य गुण सम्यक् प्रासादरचनस्य च ॥ ७१

एतत्ते सर्वमाख्यात सुपर्णचरित महत् ।
आयुष्य च यशस्य च पुण्य स्वस्त्ययन महत् ॥ ७२

कीर्त्तनीय सदा विद्धि कृत्तिवासो महात्म्यकम् ।
दुर्लभ त्रिषु लोकेषु शिवज्ञानमनुत्तमम् ॥ ७३

---

1 $B_2$, V—तम सत्त्वरजोमये ।

2 $B_2$—सुप्रीतिक ।

3 y—प्रासादगुणमात्रे , $B_2$—प्रासाद चाणुमात्रे ।

य· श्रृणोति नरो भक्त्या पुराणप्रवर त्विदम् ।
पठेद्वापि समाधानात्[1] पुत्रायुर्द्धनभाग् भवेत् ॥ ७४

कृत्तिवास-पुराण यो लेखयेत् पाठयेत् सकृत् ।
अशोच्य सर्वसत्त्वेषु वशवृद्धिश्च जायते ॥ ७५

जीवन् इह कृतार्थं स्यात् सर्वतीर्थफलान्वित ।
देवा पुनस्तमिच्छन्ति मृत स्वर्गे महीयते ॥ ७६

पुराण य पठेन्नित्य मनसाप्यवमन्यते ।
नरक याति पापीयान् ब्रह्मस्वहरको यथा ॥ ७७

परिपालयति यो वृत्ति वाचा न विकरोत्यपि ।
स्ववशमुद्धृत तेन शङ्कर परितुष्यति ॥ ७८

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया तृतीयेऽशे सुपर्ण-जालेश्वर-माहात्म्ये षट्चत्वारिशोऽध्याय[2] ॥

समाप्ताऽय तृतीयोऽश ॥

---

1 $B_2$—सावधानात् ।

2 V—प्रासात्म महाफले सुपर्णजलेश्वर माहात्म्ये चतुर्द्दशाध्याये तृतीयोऽश समाप्ता , $A_2$—प्रासादात्ममहाफलेश्वर माहात्म्ये षट्चत्वारिंशाध्याये तृतीयोऽश समाप्त , समाप्तस्तृतीयोऽश ॥

चतुर्थोऽश

# सप्तचत्वारिंशोऽध्याय:

## व्यास उवाच

महापुराणमाख्यात सुपर्णस्य च सम्भवम् ।
प्रासादफलमत्यर्थ सुकृतस्यापि वृंहणम् ॥ १
शुश्रुवुर्मुनिसघास्ते परा धृतिमुपागता ।
असित प्राह वेगेन मानस ब्रह्मण. सुतम् ॥ २
सनतकुमार विनयात् प्राञ्जलिप्रग्रहेण स ।
एकाम्रकेषु यद् वृत्त पुराण धर्म्मदायकम् ॥ ३
तन्ममाचक्ष्व विप्रषे पर कौतूहल मुहु ।
तत स भगवास्तुष्टो जगाद ऋषिससदि ॥ ४

## सनत्कुमार उवाच

एतद् ब्रह्मोदित कृत्स्न निबोध मुनिपुङ्गव ! ।
पार्वत्या परिपृच्छन्त्या वदता ब्रह्मणोदितम् ॥ ५
वैशेषिक पर ज्ञानमनादिमजमव्ययम् ।
शिववक्त्राद् विनिष्क्रान्त दैवतैरपि पूजितम् ॥ ६
गो सम्भवो भव प्राह गोधूग् जायाङ्ग[1] सम्भवम् ।
(गोधग्जायाया पार्वत्या अङ्गसम्भव चरितम् ।
पादाभ्या कृत्तिवासयोर्मर्द्दनात् सम्भवन्ति ये)?
गोपालास्ते[2] च गोदेवा भूयोऽप्यर्थमिम शृणु ॥ ७
क्षीरोदपुलिने रम्ये हेमसिक्त सुसस्तरे ।
बालखिल्यास्तपोदग्राश्चिन्तयन्त्यखिलागमान् ॥ ८
पश्यता सर्वशास्त्राणि तेषा विमल चेतसाम्[3] ।
दिव्यज्ञानात् स्मृतिर्जाता रुद्रस्याराधन प्रति ॥ ९

---

1 B₂—मायाङ्ग ।

2 C—गा इन्द्रियाणि पालयन्तीति गोपाला जितेन्द्रिया मुनय. ।

3. B₂, V—विमलचेतसाम् ।

कौतूहलमनाः सर्वे द्रष्टुमेकाम्रक वनम् ।
प्रस्थिता प्रयता स्फीता याम्ये आशामुखे तदा ॥ १०

प्रातराह्निक निर्वर्त्यं द्रुतमेवावचक्रमु ।
कृष्णाजिनधरा सर्वे दण्डकाष्ठकमण्डला ॥ ११

सकुशासनवन्तस्ते सशिष्या सशिनव्रता ।
वेदध्वनि विकुर्वाणा षडङ्गपदविक्रमाः ॥ १२

आध्यानपरया ग्रस्ता मध्यदिन गते र वौ ।
सराक्षसैक सप्राप्य[1] अर्द्धक्रोशार्द्धसज्ञितम् ॥ १३

आसन् पाशु परिक्षिप्ता मुनय सर्वं एव ते ।
निराश्रये च तद्देशे निस्तोये जनवर्जिते ॥ १४

सवनार्थ यथाकाल स्नानातिक्रमभीरव[2] ।
आजुहुवुश्च ते गङ्गानदी त्रिपथागामिनीम् ॥ १५

आजगाम ततो गङ्गा मुनिशापभयान्नदी ।
गोक्षीरा क्षीरसकाशा उपजाता सरिद्वरा ॥ १६

गङ्गाम्बुधौतदेहास्ते कौपीनामुञ्जमेखला ।
चक्रु शौच तथा सन्ध्या तर्पण विधिनोदितम् ॥ १७

विसृज्य जाह्नवी तत्र बालखिल्या मरीचिगा ।
सूर्यरश्मिसमीपे हि प्रस्थिता सर्व एव हि ॥ १८

अङ्गुष्ठाग्रप्रमाणाच्च गतिस्तेषा प्रमाणत ।
परिक्रमन्ति अव्यग्रा साय सन्ध्या उपगमत् ॥ १९

ता समीक्ष्य सुरक्ताङ्गी तस्थुस्तस्मिस्तपोधना ।
कुशश्रवा[3]नदीतीरे सर्वे सन्ध्या ववन्दिरे ॥ २०

ऊषु[4] रात्रौ सुखेऽरण्ये कोटिरष्टादशैव तु ।
सुप्रभाते समुत्थाय चाह्निकादि कृतक्रियाः ।
व्रजमाना सुवेगेन सप्ताहे योजन पथम् ॥ २१

---

1. $B_2$—राक्षसैक सुसप्राप्य ।

2 $A_2$, C, V—स्वातीतक्रमभीरव , $B_2$—स्फातितक्रमभीरव ।

3 $B_2$—कुशप्रागा ।

4. V—तिष्ठ ।

इत्थभूत प्रमाणेन शिवसकल्पमानसा ।
अहान्यष्ट[1] शत साग्र व्रजत्यविरत पथि ॥ २२

अध्वना ते परिश्रान्ता[2] ब्रह्मतेज समुद्भवा ।
तेषामत्यन्तदूरोऽसौ शिवक्षेत्रो वरप्रद ॥ २३

उत्तरे हिमवन्तस्य चासाद्य मुनिपुङ्गवा ।
नदी हैमवतीं ता तु स्वपौरेष्विति विश्रुताम्[3] ॥ २४

विशाला सन्निधायैता तस्यास्तीरे समाहिता ।
चक्रु कर्माण्यशेषाणि सन्ध्यादीनि यथाक्रमम् ॥ २५

अथ तेषा स्थितिश्चात्र ज्ञात्वा यक्षेश्वर स्वयम् ।
आजगाम विमानेन पुष्पकेण तरस्विना ॥ २६

विद्युद्वर्णेन चाभ्रेण जाम्बुनद परिष्कृता ।
वीरघण्टानिनादेन पताकेन विराजिता ॥ २७

येन दैत्यान् सुरान् सख्ये निर्जित्य बहुद.नवान् ।
तेनासौ धनद श्रीमान् मुनिसघानुपस्थित ॥ २८

विहाय सूर्यसकाश पद्भ्यामेवोपसर्पयन् ।
नमश्चक्रे महासघान् बालखिल्यानलप्रभान् ॥ २९

विनयेनोपसगम्य इद वचनमब्रवीत् ।
यूय क प्रस्थिता सर्वे ममाख्येय वदन्तु वै ॥ ३०

धनदस्य वच श्रुत्वा स्वस्तीत्याहुर्द्विजोत्तमा ।
तत्रोपविष्टा विश्रान्ता इदमूचुस्तपोधना ॥ ३१

शृणु राजन् वैश्रवण ! काम्योपगमन यथा ।
स्वर्णकूटगिरि ख्यातस्त्वभ्यासे दक्षिणोदधे ॥ ३२

भौमस्वर्ग स विज्ञेयो यत्र बिन्दूद्भव सर ।
एकोनकोटिलिङ्गेश कृत्तिवासा स्वय विभु ॥ ३३

सदा सन्निहितो यत्र महादेवो जगद्गुरु ।
अष्टमूर्त्तिधर साक्षादष्टायतन-भूषित. ॥ ३४

---

1 $B_2$—अद्यानष्ट , V—अन्यानष्ट ।

2 $B_2$—अधनान्ते पथि श्रान्ता ।

3, $B_2$, V—स्वपौरेण्विति विश्रुता ।

सिद्धक्षेत्रवर श्रीमान् महालय-परिणत[1] ।
न तेन सदृश कश्चित् त्रिषु लोकेषु विद्यते ॥ ३५

कृत्तिवासा स्वय यत्र यत्र ब्रह्मा सुराधिप ।
विष्णु सन्निहित शक्रो विवस्वान् वसवोऽश्विनौ ॥ ३६

तपना शशभृद् रुद्रा सिन्धुनाथो हुताशन ।
शशाङ्कग्रहताराद्या गन्धर्वोरगराक्षसा ॥ ३७
विद्याधराप्सर सिद्धास्तत्र सन्ति ह्यनेकश ।
सनकाद्याश्च मुनयो ये चान्ये पुण्यकृत्तमाः ॥ ३८

वसन्त्येकाम्रके धन्या वीतरागा विकल्मषा ॥
स्नात्वा बिन्दूद्भवे नित्य कृत्तिवासोऽभिवन्दनम् ॥ ३९
किं तस्य बहुभिर्यज्ञै कि तस्य तपस फलम् ।
सद्य पुनाति[2] भूतानि स्नान बिन्दूद्भवे जले ॥ ४०

कि दत्तैर्बहुभिर्दानैस्तीर्थस्नानैरनेकश ।
यस्य स्नानादवाप्नोति कोटिलिङ्गेश्वरार्च्चनम् ॥ ४१
त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
अष्टायतनस्नानस्य कला नार्हन्ति षोडशीम् ॥ ४२

शिवायतनमुख्येषु शिवसयोगमूर्त्तिषु ।
दुर्लभ सर्वलोकेषु त्वष्टम्या प्रविशेद् यदि ॥ ४३
विषुवे द्वे च सप्राप्ते चन्द्र-सूर्यपरागयो ।
स्नात्वा दृष्ट्वा सरे देव तारयेन् निखिलान् कुलान ॥ ४४

महापापप्रशमन दु खसयोगभेषजम् ।
बिन्दूद्भवजले स्नान सर्वपुण्यविवर्धनम् ॥ ४५

तत्राप्रमेयः[3] परमेश्वरोऽसौ नाथ
स्वय तिष्ठति जीवलोके ।
ससारवारानिधिपारपोत शिव
यमेक प्रवदन्ति सन्त ॥ ४६

---

1 A₂, B₂, V—महाप्रलय-परिणतः ।

2. C—पुनन्ति ।

3. B₂, V—त्राताप्रमेय. ।

निद्रा समाधिर्गमन प्रदक्षिण
मुक्ति स्तुतिस्तत्र सुवर्णकूटे ।
क्षेत्रे च वक्तु महिमानमैश
शेषस्त्वशक्यो हि मुखै सहस्रै ॥ ४७

एकाम्रक क्षेत्रवर वरिष्ठ
देव सुरेश सहसा प्रयुक्तम् ।
प्रसह्य प्राप्स्याम यथा हिमाद्रेर्वय
तथा त्व कुरु शीघ्रगामी ॥ ४८
तपस्विनस्ते तु महाप्रथा
पुनर्विचेचस सन्तमिद जजल्पिरे ।
धनेश्वर ! त्व कुरुष्व ना वच
स्वस्त्यस्तु नृनाथ[1] ! महोदयात्मिका ॥ ४९

तपस्विनामिद श्रुत्वा तानुवाचाथ यक्षराट् ।
नमस्कृत्वाथ वक्ष्येऽह भवता गमन प्रति ॥ ५०
स्वायम्भूवो विमानोऽय गुरुभारसह सदा ।
कामग कामरूपी च पुष्पकेति च विश्रुत ॥ ५१
सर्वं प्रापयिता शीघ्रमस्मिन् याने हराश्रमम् ।
गन्ता स्म[2] भवता शीघ्र मनसे यदि रोचते ॥ ५२
श्रुत्वा वैश्रवणस्यैव बालखिल्या जजल्पिरे ।
साधूक्त भवता वाक्य राजन्मनुजवाहन ! ५३ ॥
तद् वाक्य पूजयामासुरस्तप्राप्तो दिवाकर ।
साय सवनमिच्छन्तोऽवतीर्णा सर्व एव ते ॥ ५४
स्वपोरेणुनदीतीरे साय सन्ध्यामुपासिरे ।
निर्वर्त्य पश्चिमा सन्ध्या स्वपन्ति स्म हिमालये ॥ ५५
सुप्रभाते समुत्थाय कृत्वा ते प्रातराह्लिकम् ।
यानमारुरुहु. सर्वे मेरु देवगणा इव ॥ ५६
सुखास्तरणमासीना यथेष्टमकुतोभयाः ।
आरुरोह धनाध्यक्षो योजितु स्यन्दनोत्तमम् ॥ ५७

---

1 B₂, V—स्वस्वस्तिरेकास्तु ।

2. A₂, C—गता स्थो; V—गतस्थो ।

समुत्पातवेगेन[1] विवस्वत् पथमाश्रित ।
उद्वहन् मुनिसघ त लेलिहन्त विहायसम् ।। ५८
ययौ मुनिमत ज्ञात्वा दक्षिणार्णव-सन्निधौ ।
प्रापयामास वेगेन हेमकूटाद्रिकाननम् ।। ५९

गन्धनद्या तटोपान्ते सिद्धचारणसेविते ।
नानाद्रुमलताकीर्णे पुष्पशैवालशाद्वले ।। ६०

सङ्गमादुच्छलत् शैत्ये कैलासशिखरोपमे ।
शैलप्रस्रवणे रम्ये योजनायतमण्डले ।। ६१

प्रदक्षिणत्रय चात्र चकार ह्यलकेश्वर[2] ।
दर्शयित्वा शिवक्षेत्र विमाने ऋषिसत्तमान् ।। ६२

अवतीर्णास्तत सर्वे विमानाद् ऋषिसत्तमा ।
बिन्दूद्भवोदके तीर्थे स्नान चक्रुरनुक्रमात् ।। ६३
कृत्तिवास यथोद्दिष्ट कोटिलिङ्गान् यथाक्रमम् ।
एकैकान् विधिपूर्वेण पूजयामासुरुत्तमा ।। ६४
अवसस्तत्र रुचिरमष्टमूर्त्त्यर्च्चने रता. ।
स्तुत्यानया स्तुवन्तीशमेकात्मनियते क्रिया ।। ६५

## बालखिल्या उचु

नित्यस्वरूप त्रिगुणैकहेतु सूक्ष्मातिसूक्ष्म पुरुष पुराणम् ।
ससारदु खेन्धनपावक च वन्दामहे त जगदादिरूपम् ।। ६६
कामप्रद कामविदग्धदेह कान्तार्धभाग कृतभिक्षुचर्यम् ।
कृशानुशुभ्राशुविभावसूक्ष्म वय सुगौरीसुकृत भजाम ।। ६७

कालस्य शत्रु हृतदक्षयज्ञ शिवकलानाथ कलावतसम् ।
कर्कोटकावद्धजटाकलाप नित्य भजाम कलिकल्मषघ्नम् ।। ६८

हिमालयाद्यद्रिनिकेतन वै कैलाससद्मानमहिघ्न-पूज्यम् ।
विरञ्चिविष्वादिसुपूज्यपाद वय नमामस्त्रिपुरद्विष हि ।। ६९

गोप्तारमीश जगता त्रयाणा कर्त्तारमानन्दसुधासमुद्रम् ।
भागीरथीभूषितमस्तकान्त सदा भजाम परम च रुद्रम् ।। ७०

---

1. $B_2$, V—समुत्पपात वेगेन ।
2. $B_2$—ह्यचलेश्वर ।

श्रीपार्वतीवक्त्रसुधाशुखण्ड-सुधाशन सामसु गीयमानम् ।
वेदार्थतत्त्वप्रतिपादन च भूयो नमाम प्रणमाम ईशम् ।। ७१

विश्वेश्वर ब्रह्मसुत विदग्ध रमापतीशक्रन-वेदवाहम् ।
रथाङ्गचन्द्रार्कमनुप्रमेय नमाम शम्भु हृदयाम्बुजस्थम् ।। ७२

गोब्राह्मणेभ्यस्तु कृतावनार गुणेतर लोकपति महेशम् ।
विभु त्रिलोकार्त्तिहर त्रिनेत्र वय नमाम प्रतिपत्तिरूपम् ।। ७३

## सनत्कुमार उवाच

इत्यादि विदितैर्हृद्यै साम्ना वरपदाक्षरै ।
गद्यपद्यपरिच्छद्यै स्तवै सपटलै शुभै ।। ७४

ससारविधिलावण्यैस्तुतोष भगवान् शिव ।
प्रोवाच मुनिसघास्तान् किमिच्छथ तपोधना ।। ७५

ददामि निखिलान् कामान् पूरयामि मनोरथान् ।
प्रार्थयध्व वर सर्वे प्रसन्नोऽह वृषध्वज ।। ७६

स्तात्रेणानेन भो विप्रा यो मा स्तौति नरोत्तम ।
स प्राप्नोति वर काम लोकद्वयफलप्रदम् ।। ७७

धमार्थी धर्ममाप्नोति सुतार्थी सुतमाप्नुयात् ।
कामानवाप्नुयात्कामी स्वर्गार्थी स्वर्गमश्नुते ।। ७८

भार्यार्थी लभते भार्यां गुणोपेतामुमासमाम् ।
मोक्षार्थी लभते मोक्ष परमानन्ददायकम् ।। ७९

ब्रह्मघ्नो वा सुरापो वा मातृघ्न[1] पितृघातक ।
स्वर्णहृद्वा[2] समाप्नोति सद्गति त्वस्य कीर्त्तनात् ।। ८०

विशेषतस्त्वह तुष्टो दास्यामीष्ट द्विजोत्तमाः ।
ब्रुवध्व वरमिष्ट भो तुष्ट स्तुत्यानया ह्यहम ।। ८१

इतीश्वरवच श्रुत्वा सर्वे प्राञ्जलयो द्विजा ।
इदमूचुर्महेशान प्रसन्न लोकसाक्षिणम् ।। ८२

विज्ञापयामो देवेश यद्यनुग्रहतास्ति नः ।
रहस्यमिदमेवाशु पृच्छाम परमेश्वर ! ।। ८३

---

1 $A_2$, $B_2$—मातृग ।

2, $B_2$—सुहृद्वास ।

देवदेव महेशान कर्त्तास्मो युष्मदालयम् ।
अस्मान् भक्तिमत सर्वाननुज्ञा दातुमर्हसि ।। ८४
अनाथास्त्वदृते नाथ वय सर्वे वृषध्वज ! ।
उद्विग्नाः स्मो वय देव वर्त्तयिष्याम आश्रमम् ।। ८५
श्रोतुमिच्छामहे सर्वे ससाराब्धि-विमोचनम् ।
ज्ञानमुक्तिप्रदातार येन मुच्येत वै सुधी ।। ८६
कृत्तिवासा स्तुत प्राह बालखिल्या मरीचिगान् ।
मा विचार कुरुध्व च श्रुयन्ता गदतो मम ।। ८७
ब्रह्मणा प्राथित पूर्व कर्त्तुमस्मिन् निकेतनम् ।
भगवान् वासुदेवोऽपि कर्त्तुकामोऽस्मदालयम् ।। ८८
प्रार्थित मुनिभि पूर्व भक्तियुक्तै सदा मयि ।
लोकपालै. समस्तैश्च गन्धर्वैश्च महोरगै. ।
केनापि नैव सिद्धि कर्त्तुकामेन मद्गृहम् ।।८९
कर्त्तव्य भवता नैव मा कृथा॰ परिभाषसे[1] ।
भवता गोचर नेद ज्ञानमन्यद् वदामि व ।। ९०
यच्छ्रुत्वा पुरुषव्याघ्रा प्रयान्ति परम पदम् ।
प्रणव परम ब्रह्म वेदादौ समजायते[2] ।। ९१
यदुच्चार्य पुमान् विप्रा पर ब्रह्माधिगच्छति ।
अकारश्च उकारश्च मकार समजायते ।। ९२
अकारश्च स्वय ब्रह्मा उकारो विष्णुरुच्यते ।
मकारस्तु अह[3] साक्षात् पर ब्रह्मोच्यते द्विजा ।। ९३
नरक प्रतिपद्येत अस्माक भेदकृत् पुमान् ।
यस्तु विष्णु स वै ब्रह्मा ब्रह्मा चैव महेश्वर ।। ९४
ईश्वर सर्वभूताना हृदये सस्थितोऽव्यय ।
व्याप्यते सर्वभूतेषु ब्रह्म आरभ्यते यत ।। ९५
महानीश्वर एवात्मा विष्णुब्रह्ममहेश्वर ।
ईश्वरस्तु स्वय साक्षादनीश्वर उदाहृत ।। ९६

---

1 $B_2$—वृथा परम भारत, V—मा वृथा परिभाषत ।

2 $B_2$—वेदादेवमजायत ।

3. B2—स्वय ।

ब्रह्माविष्णु स एवैको[1] निरञ्जन उदाहृत ।
तस्मात् परतरो देवो विख्यात परमेश्वर ॥ ९७

स बाह्यस्त्रिगुणेभ्यस्तु ईश्वर परमः स्वराट् ।
तस्मात् सदाशिवो देव पर ब्रह्म स उच्यते ॥ ९८

निर्लेपो निर्गुण शून्यस्त्वक्षर परम स्वराट् ।
सर्वेषा हृदि वर्त्तन्ते एते वै सर्वपुरुषा ॥ ९९

प्राणिना जङ्गमादीना देहमध्ये द्विजोत्तमा ।
षड्दले[2] नाभिपद्मे च परमेष्ठी प्रकीर्त्तित. ॥ १००

हृत्पद्मे द्वादशदले विष्णुरुकार ईरित ।
कण्ठाब्जे षोडशदले[3] मकारस्तु महेश्वर ॥ १०१

एव गुण तृतीय च कीर्त्तित मुनिभि पुरा ।
प्रणवस्यार्द्धमात्राच्च प्रकृति परिकीर्त्तिता ॥ १०२

तस्या स्थानं द्विजश्रेष्ठ ! मूलाधारे चतुर्द्दले ।
सत्त्वस्य रजसश्चैव तमसश्चैकता यदा ॥ १०३

प्रकृतिस्तु तदा ज्ञेया भूताना वाहिनी मता ।
भ्रूमध्ये द्विदले पद्मे विख्यात परमेश्वर ॥ १०४

प्रसन्नवदन' श्रीमान् निर्लेप पुरुष स्वराट् ।
तत सहस्र छदन[4] पङ्कजे च सदाशिव ॥ १०५

पञ्चास्य परमः पुण्य स्वराडक्षर ईश्वर[5] ।
गुणानामादिकन्दः स प्रकृत्याश्च विशेषत ॥ १०६

वक्त्रेभ्यस्तस्य देवस्य त्रिगुणाश्चैव ज्ज्ञिरे ।
अकारो जायते पूर्वादुकारो दक्षिणात्तथा ॥ १०७

मकार पश्चिमाज्जज्ञे तथा प्रकृतिरुत्तरात् ।
अकारो विद्युदाभस्तूकारो नवघनोपम ॥ १०८

1 V—एव ज्ञो, $B_2$—ब्रह्मा विष्णु च शिवो वापि ।

2 $B_2$—दशच्छदे, V—शच्छन्दे ।

3 $B_2$—कण्ठे वै द्वादशदले ।

4 $B_2$—छदे ।

5, V—स्वरान्तक्षर ईश्वर , C—स्वराजक्षर ईश्वर. ।

मकार कुन्दसदृश प्रकृति कुङ्कुमप्रभा ।
एव गुणाश्चतुभ्यस्तु पञ्चमात् परमेश्वर ॥ १०६

गोक्षीर हेमसदृश साक्षात् स तु सदाशिव ।
वरदाभयपाणिस्तु शिवदेव सनातन ॥ ११०

अव्यय पुरुष श्रीमान् अक्षर परम स्वराट् ।
स्वात्माराम समाख्यात गुणढ्यस्तु सदाशिव ॥ १११

निर्लेपो निर्गुणो नित्यो निष्प्रपञ्च स्थिर सदा ।
शाखात् शाखा समायुक्त चतुर्वेद चिरस्थितम् ॥ ११२

वामेन बाहुना देवो विभर्त्ति मृगरूपिणम् ।
ससारद्रुमच्छेत्तार कुठार दक्षिणे भुजे ॥ ११३

प्रसन्नवदनश्चासौ सहस्रदलमध्यग ।
पुरुष त पुमान् ज्ञात्वा पर ब्रह्माधिगच्छति ॥ ११४

अत पर पर गुह्य नास्ति नास्ति द्विजोत्तमा ।
भवता स्तुतिपाठेन सुदूरागमनेन च ॥ ११५

प्रसन्नो ह्यभव यस्मात् तस्मात् च कृपयाऽथवा ।
कथित पुण्ययोगाद् वा भवता पूर्वजन्मन[1] ॥ ११६

एतद् वेदेषु दुष्प्राप्य देवतासु न लभ्यते ।
एतद् ज्ञान द्विजश्रेष्ठा भवसागरतारणम् ॥ ११७

अत पर पर श्रेय. किमन्यत् परिपृच्छथ ।
एव देवपतेर्वाक्य श्रुत्वा ते मुनिपुङ्गवा ॥ ११८

इदमूचु' पुनर्भक्त्या भवितव्य न वेति वा ।
भूय एव मुनिश्रेष्ठा ऊचुस्ते परमेश्वरम् ॥ ११६

कस्मिन् कस्मिन् युगे देव किं रूपेण व्यवस्थित ।
तानुवाच ततो देव शृण्वन्तु ऋषिसत्तमा. ॥ १२०

कृते त्रेतायुगे तावन् न मा पश्यन्ति देवता ।
द्वापरे लिङ्गमाप्तोऽह प्रसादगुणवर्जित. ॥ १२१

कलौ मम स्फुट लिङ्ग प्रासादगुणवर्जितम् ।
कलावतीतपादे च मही यास्यति चन्द्रमाः ॥ १२२

---

1 $A_2$, $B_1$, C—पुण्यजन्मन ।

शासयेत् पृथिवीभाग मद्भक्तो नान्यमानस ।
यावत् कलिङ्गपर्यन्त शशाङ्क पृथिवीपति ॥ १२३

ममोपदेश-कर्त्तासौ[1] प्रासाद रुचिर पृथुम् ।
श्रुत्वा देवेरित सम्यक् श्रुतास्ते मुनिपुङ्गवा ॥ १२४

दर्शन स्पर्शन पूजा चक्रुरात्मनिवेदनम् ।
कृतकृत्या हि ते सर्वे बालखिल्या दिव गता ।
स्वपुरी तु धनाध्यक्षो ययौ पुष्पकवाहन ॥ १२५

ब्रह्मोवाच

एव देवस्य माहात्म्य श्रुत मे गिरिकन्यके ! ।
सर्वपापघ्नमतुल सर्वपुण्यविवर्द्धनम् ॥ १२६

इत्यैकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया चतुर्थेऽशे बाल-खिल्या-शिवसम्बादो नाम सप्तचत्वारिंशोऽध्याय [2] ।

---

1. $A_2$—ममोपदेशकर्त्ता , V—ममोपदेशात् कर्त्ता स ।

2. V, $B_1$, $B_2$—चतुर्थऽंशे बालखिल्या-शिवसम्बादो नाम प्रथमोऽध्याय ।

# अष्टचत्वारिंशोऽध्यायः

सनत्कुमार उवाच

स होवाच स्मित ब्रह्मा भवानी शिवसन्निधौ ।
शृणुष्वावहिता देवि ! वनमेकाम्रक यथा ॥ १

धर्मक्षेत्र समासाद्य यथा तौ प्रलय गतौ ।
बलान्वितौ च असुरौ सद्योत्सिक्तौ[1] मुमोहतु ॥ २

दृमिलस्य सुतश्चैक सुषेण इति विश्रुत ।
गवलाख्यात्मजो वीरो गोकर्ण परवीरहा ॥ ३

दु शीलस्तु दुराचारो विषयासक्तचेतन ।
यज्ञहन्ता सुरद्वेष्टा सर्वधर्मवहिष्कृत ॥ ४

कालेन महता तस्य धर्मे मतिरजायत ।
विनयेनोपसगम्य मुञ्जकेश[2] पुरोवसम् ॥ ५

पप्रच्छ कुशलान् धर्मान् नैगमानृषिभाषितान् ।
शिवतन्त्र सुविस्तीर्ण सद्भाव धार्मिक महत् ॥ ६

निवेद्य गुरवे भाव वद्धाञ्जलिपुटस्थितः ।
इङ्गिताकारतत्त्वज्ञो मुञ्जकेशो विचक्षण ॥ ७

उपदेश तमुद्दिष्ट शिवाराधनमुत्तमम् ।
सारभूत महाज्ञान ससारार्णवतारकम् ॥ ८

ध्यात्वा जगदिद कृत्स्न पुण्यक्षेत्राश्रमान् ह्लदान् ।
एकाम्रकसमुद्दिष्ट सर्वपापापनोदनम् ॥ ९

व्रज भद्र पर क्षेत्र स्वर्णकूट हराश्रमम् ।
बिन्दुह्लदजले स्नात्वा लिङ्गस्याराधन कुरु ॥ १०

1 V—मदोत्सिक्तौ ।

2 $A_2$—मुक्तकेश ।

गुरोर्वाक्यावसाने च स ययावसुरोत्तम ।
आससाद पर क्षेत्र हेटकूटाद्रिशेखरम् ॥ ११

मृगयन् त सुरारिघ्न कृत्तिवास न पश्यति ।
न चाप्यन्यविधान् शम्भून् क्षेत्रजातान् स्वयभूवान् ॥ १२

भूयो भूय सुविघ्नेन स्थले निम्ने समन्तत ।
त्रि सप्ताक्षिपरो भक्तो लिङ्गमेकमपश्यत ॥ १३

कृत्तिवासाददूरेण दशधन्वन्तरे शते ।
ऐशानी दिशमास्थाय किंचिदाग्नेयमास्थितम् ॥ १४

तद् वीक्ष्य परम लिङ्ग मूर्त्तिमच्च सुतेजसम् ।
प्रणम्य परितुष्टात्मा स्नापयामास शङ्करम् ॥ १५

शीतेन वारिणा क्षाल्य हैमभृङ्गारपूरितै ।
पञ्चगव्यैर्जलै स्नाप्य पञ्चामृतमयै· पुन· ॥ १६

दध्ना क्षीरमयैराज्यैस्तथा इक्षुरसै प्रियै ।
चन्दनागुरुभिर्मुख्यै पुष्पैर्नानाविधै स्रजै ॥ १७

विचित्रवासाभरणैर्धूपै कर्पूरमिश्रितै ।
नैवेद्यैर्विविधाकारैरुपचारै शतै शिवम् ॥ १८

स्तोत्रैरुच्चावचै सौम्यै· प्रगीतैर्मधुरस्वरै ।
पूजयित्वा जगामाशु स्वपुर बन्धुभि सह ॥ १९

प्राग्ज्योतिषपुरी नाम्ना तत्र सोऽप्यवसत् सुखी ।
तस्या प्रतिदिन चात्र आयाति शिवतत्पर ॥ २०

एव प्रतिदिन[1] चैव प्रातरायाद् भवान्तिकम् ।
अथ दौर्मिल आयातो विन्ध्यशैलान्महाबल ॥ २१

सोऽभिगम्य शिवक्षेत्र हेमकूटाद्रिशेखरम् ।
बभ्राम निखिल क्षेत्र योजनायतमण्डलम् ॥ २२

मार्जन विमले तोये चकार शिवनिर्मिते ।
ऊनकोटीन्नमस्कृत्य दृश्यादृश्यात्मनो गतान् ॥ २३

त ददर्शागत लिङ्ग रत्नदामोपशोभितम् ।
पुष्पप्रकरमत्यर्थ त देश जनवर्जितम् ॥ २४

---

1 $A_2$—प्रतिदिने ।

रोचयामास त दृष्ट्वा पराह्ने लिङ्गमुत्तमम् ।
अपवाहितनिर्म्माल्य पूर्वपूजा विसृज्य च ।। २५

गङ्ङ्काष्टसहस्रैस्तु स्नपन विधिना कृतम् ।
पुष्पैर्नानाविधैर्माल्यैर्गन्धै सागुरुचन्दनै ।। २६

धूपैर्दिव्योपचारैश्च रत्नविद्योत-भास्वरै ।
आपूर्यमाणरत्नाद्यैर्मुक्ताफल विभूषितै ।। २७

जाम्बूनदमयै पद्मै. पद्मरागसमन्वितै[1] ।
पूजा द्विगुणसम्भारै पूजयामास शङ्करम् ।। २८

जगाम भुवन सोऽपि विन्ध्य नगवरोत्तमम् ।
तत प्रभृत्यसौ विद्यादपराह्णेऽपसर्पति ।। २९

नित्यमेवाकरोत् पूजा सुषेणो द्रुमिलात्मज ।
प्रात काले च गोकर्णौ द्वावेतावसुरोत्तमौ ।। ३०

एकलिङ्गमुपासन्तौ पार्वतीयौ महासुरौ ।
अविकल्पमनावेतौ शिवाराधन-तत्परौ ।। ३१

शताब्दसाधिका[2] पूजा चक्रतुर्गतकलमषौ ।
गोकर्णौ मणिमुक्ताभि रत्नवैडुर्यकाञ्चनै· ।। ३२

विचित्ररचनोद्भावैरचयित्वा पुर ययौ ।
अनुयात सुषेणोऽपि मध्याह्नात् परतो जव ।। ३३

दृष्ट्वा रत्नमयो पूजा विस्मयोत्फुल्ललोचन ।
कोऽय स्पृशति सदिव्यामस्मत् पूजामनिन्दिताम् ।। ३४

इति सचिन्त्य उद्विग्न केनाय स्पर्शितो विभु ।
द्विगुण स्थानमाचक्रे लिङ्गपुष्पोपमार्जनम् ।। ३५

द्वैव मेध्याभिषेकैश्च स्वय पूजा चकार स ।
जाति-चम्पक-पुन्नागै कर्णिकारै सपाटलै ।। ३६

मुचुकुन्दातिमुक्तैश्च नागकर्ण-प्रियङ्गकै ।
सन्तानाशोकमन्दारैर्विल्वकुब्जामुकुन्दकै ।। ३७

पद्मोत्पलैश्च कल्हारै सौगन्धिक-सुरक्तकैः ।
जलजै स्थलजै पुष्पैर्नानावर्णै सुगन्धिभि ।। ३८

1 V—पद्मरागशताङ्कितै ।

2, V—शताङ्कसाधक ।

एव प्रतिदिन तौ तु ज्ञातावपि महाबलौ ।
ज्ञातमित्थ किमित्येव पूजितस्य विपर्यय ॥ ३९

परिवर्त्तनक चित्र वलि-पुष्पैस्तथापरै ।
समभ्यर्च्च्य पुरस्कृत्य पूर्वाह्णे विकृतस्थित ॥ ४०

लताजालान्तरे धन्वी शरी खड्गी परश्वधी ।
योजनैक बल स्थाप्य स्वय तत्रावतिष्ठते ॥ ४१

जुगोप मनुमात्मानमीक्ष्यमाणो ह्यतन्द्रित ।
निकुञ्जे गहने भीमे सागरस्य च रोधसि ॥ ४२

मध्यदिनगत सूर्य सन्ताप जनयन् भृशम् ।
मुनयस्तीरमासाद्य द्वितीयसवनार्थिन ॥ ४३

वीक्षन्ते[1] श्वापदा घोरा गजा सिह खगा नरा ।
समेत्य विविशुस्तोये निर्जराश्च तपस्विन ॥ ४४

क्षेत्रराजप्रभावोऽय सममित्रारिबान्धवा ।
अन्योऽन्य न विरुध्यन्ति महापातकिनो हि ये ॥ ४५

निवर्त्तन्ते अनेकास्ते यथाकाम वनेचरा ।
तत्राप्यासस्तुत[2] पूजामाजगाम महासुर ॥ ४६

पूजोपहारसभारै सभूय विविधायुधै ।
आसाद्य रुचिर देश लिङ्गमूले व्यवस्थित ॥ ४७

नापश्यत निजा पूजा सरब्धमिदमब्रवीत् ।
लोकपाला ग्रहा नागा राक्षसा मनुजाधिपा ॥ ४८

देवदानव भूतानि दैत्याश्चासुरकिन्नरा ।
क्षुद्रचरा विमूढा के अस्मत् पूजोपहारिण ॥ ४९

सदानुबन्धधर्मघ्न कृतघ्न पिशुनाधमम् ।
धिग्विड्नित्य तपस्तस्य व्यामिश्रित्याभिदूषणम् ॥ ५०

क्षत्रियो वा दुराचारो नयामि यमसदनम् ।
सत्य सत्य पुन सत्य साक्षिणो लोकपालका ॥ ५१

यदि पश्यामि त मूढमनर्य धर्मदूषकम् ।
अद्य मद्बाणसच्छिन्न तच्छिरो याति भूतलम् ॥ ५२

---

1 $B_2$, V - जलान्ते ।

2, $A_2$ C—तत्राप्यासस्तत ।

तस्य चैव ब्रुवाणस्य श्रुत्वा क्रोधेरित वच ।
तिष्ठ तिष्ठेति सक्रुद्धश्चापपाणिरभाषत ॥ ५३

तमपश्यत् प्रधावन्त गर्जन्त जलदोपमम् ।
दृढ चाप समादाय सज्य चक्रे महाबलः ॥ ५४

काञ्चन कवच चित्र शिरस्त्राण विकुण्डलम् ।
सायुधौ तौ समायातौ शृङ्गवन्ताविवाचलौ ॥ ५५

सरब्धघनघोराभौ सर्वास्त्रकुशलाविमौ ।
अभिप्रायन्त अन्योऽन्य प्राहेद परुष वच ॥ ५६

हेमरत्नमयीं पूजा मम दत्तामनेकश ।
प्रत्यह च प्रदानस्य हृतवानसि दुर्मते ॥ ५७

स्पर्शयित्वा महादेव लिङ्गमूर्त्ति निरामयम् ।
अनर्होऽस्यप्यनार्यस्त्व बध्ययोग्योऽसि दुर्मते ' ॥ ५८

विचिन्त्य मनसा क्रुद्धो व्याजहार स्थिरो भव ।
गोकर्ण प्रहसन् प्राह स्थिरोऽह निर्मलोदक ॥ ५९

द्रक्षस्व मत् शरैर्विद्धः पूर्वप्रेत-पितामहान् ।
इत्युक्त्वाष्टशतैर्वक्त्रे जघान वरदानव ॥ ६०

तमायान्त सुषेणस्तु चिच्छेद कृतहस्तवत् ।
भूय क्रोधसमुत्थेन विंशद् बाणान् व्यकिरत् ॥ ६१

त चापि दशभिर्बाणैर्व्याहरत् षष्टि पत्रिभि ।
योत्स्यमान तमन्योऽन्य चन्द्राविव समागतौ ॥ ६२

चापमुद्यम्य शीघ्रास्त्राववच्छिन्न कृतश्रमौ ।
अभिन्नमभिजघ्नन्तौ गोष्ठे गोवृषभाविव ॥ ६३

अन्योऽन्य तौ मदान्मत्तौ व्याघ्राविव दुरासदौ ।
मत्ताद्विरदविभ्रान्तावप्रमेया बलायुधौ ॥ ६४

अत्यन्त युद्धमानाभ्या समकम्पत मेदिनी ।
पादन्यासविनिर्भिन्ना सशैलवनकानना ॥ ६५

पातालोच्छलित शब्द मुक्ताम्भोद-नि.स्वन ।
स्वनतन्त्यो दिश सर्वा वित्रेसुर्नगचारिण ॥ ६६

हेमपुङ्खै प्रसन्नाग्रै शिलाधौतैरजिह्मगै ।
उल्काशनिसमप्रख्यौ व्यापृच्छन्तं परस्परम् ॥ ६७

सव्यापसव्यमानादौ कृतप्रतिकृताविमौ ।
एकादेकविशेषौ तौ धन्विनौ बलशालिनौ ॥ ६८

लोकपाला प्रपश्यन्ति विद्रवन्ति बनौकस ।
गोकर्णं कर्णिकैस्तीक्ष्णै शतसन्नतपर्वभि ॥ ६९

अदृश्यमकरोत् सख्ये नीहारैरशुमानिव ।
स चिच्छेद शरैर्भल्लैर्दर्शयन् कर्णिलाघवम्[1] ॥ ७०

रुरोध मार्गणैस्तस्य सर्वास्तान् दानवोत्तम ।
तत्क्षणात् पाशबद्धेन युक्त सद्य इवाभवत् ॥ ७१

इषुसक्षयमापन्नो शिलामादायतावुभौ ।
जघ्नतु. समरेऽन्योऽन्य वलिवासवयोरिव ॥ ७२

शिलाभ्या समयाताभ्यामासीच्छब्दो भयङ्कर ।
सम्बर्त्तघनघोराभौ वृक्षानुत्पाटितावुभौ ॥ ७३

विक्षिपन्त शरानुग्रान् शतशोऽथ सहस्रश ।
वद्धवैरौ महात्मानावसुराश समुद्भवौ ॥ ७४

कालस्य वशमापन्नौ सन्निकृष्टौ बलोत्कटौ ।
रक्तासक्त स सर्वाङ्गौ धातुनाद्रेश्च सन्निभौ ॥ ७५

सन्दष्टौष्टपुटावेतौ मुष्टिमुद्यम्य तावुभौ ।
चेष्टमानौ विनर्दन्तौ सव्यदक्षिणमाश्रितौ ॥ ७६

सुन्दोपसुन्दसकाशौ लेलिहानौ तु सृक्कणीम् ।
बाहुयुद्धविदावेतौ ससक्ताभोगवर्च्चसौ ॥ ७७

बाहुवन्धपदोद्गारै श्रृङ्खलोत्कर्षयोधमै ।
लोकसघातसपातै क्षोभयन्तौ च मेदिनीम् ॥ ७८

शीघ्र वभञ्जतु छिन्नाश्चूर्णयन्तौ शिलोच्चयान् ।
सृगिवाव्यक्तसर्वाङ्गौ रक्तफेनोद्वमन्तकौ ॥ ७९

पतत स्म विश्रृङ्गाभौ भूमिकम्पो भवत् तदा ।
मुष्टिनिर्घातनिर्भिन्नौ गतासू विकृताननौ ॥ ८०

---

1. $B_2$, V—पाणिलाघवम् ।

गोकर्णश्च सुषेणश्च त्यक्ता देह दिव गतौ ।
शिवस्यानुचरावेतौ गणमध्ये सुखावहौ ।। ८१

एको गौरमुखो नाम्ना गोकर्णो हेमपिङ्गल ।
तस्य लिङ्गस्य सज्ञार्थ[1] पुरा चाराधनाय वै ।
गोकर्णेश्वर इत्येव नाम चक्रे सुरासुरौ ।। ८२

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया चतुर्थेऽशे गोकर्णेश्वर-माहात्म्य नाम अष्टचत्वारिंशोऽध्याय[2] ।

1 B₂, V—शब्दार्थं ।

2 V, B₂, B₁—चतुर्थेऽशे गोकर्णेश्वरमाहात्म्य नाम द्वितीयोऽध्याय ।

# ऊनपञ्चाशत् अध्यायः

सनत्कुमार उवाच

ब्रह्मेरितमिद श्रुत्वा प्रीतिसजनन वच ।
भूयो हैमवती प्राह ब्रह्माणममितद्युतिम् ॥ १

कृत्तिवास जगद्वास स्वर्णकूटाद्रिशेखरम् ।
त्रैलोक्यवन्दित गत्वा वनमेकाम्रमुत्तमम् ॥ २

लिङ्गमाराधित येन तन्ममाख्यातुमर्हसि ।
शृण्वती न हि तृप्यामि गुणानेवास्य पद्मज ! ॥ ३

ब्रह्मोवाच

चिर ध्यात्वा उवाचेद जगद्योनि पितामह ।
यस्य प्रसादादद्यापि दिवि मोदन्ति चाक्षयम् ॥ ४

को न सेवेत देवेश कृत्तिवास जगद्गुरुम् ।
धर्मार्थकाममोक्षादीन् दद्यादायुर्न सशय ॥ ५

स्वर्गारोहणमार्गं च स्मृतमात्राघनाशनम् ।
आत्मद्रोहो विमूढास्ते ये न सेवन्ति शङ्करम् ॥ ६

शृणुष्वावहिते देवि ! यत्त्व पृच्छसि सुव्रते ! ।
यस्तु सागरपर्यन्त शशास पृथिवीमिमाम् ॥ ७

जमदग्नि सुतो राम प्रख्यात-बलपौरुष ।
त्रि सप्तकृत्वोर्वैरिका चतुर्णवमेखलाम् ॥ ८

यो नि सपत्नमकरोत स द्वितीय इवाशुमान् ।
वेदवेदाङ्ग-तत्वज्ञ स्मृतिशास्त्रविशारदः ॥ ९

निर्जितारिर्जितक्रोध क्षिति धर्मेण शासति ।
बलवान् सत्यसपन्नो विनीत कृतलक्षण ॥ १०

पुराणस्मृतिसम्पन्न आश्रमज्ञो विधानवित् ।
श्रुतिधर्मे च सतिष्ठश्चचार पृथिवीमिमाम् ॥ ११

आजगाम प्रयत्नेन वारणस्या नृपोत्तम॰ ।
तीर्थयात्रा यथोद्दिष्ट चकार विधिवत् स्वयम् ।। १२
मुनीन् स बहुमानेन पूजयित्वा ब्रवीदिम् ।
शाकल्य शसक कण्ठ च्यवन चण्डभार्गवम् ।। १३
हार्दिक्य बृहदश्व च गौतम गालव कठम् ।
शौनक भरत प्राच्य बामदेव बृहद्रथम् ।। १४
शातातपोपमन्युश्च सशिष्यान् सशितव्रतान् ।
तान् अपश्यन् मुदायुक्तो जामदग्न्यो महामति ।। १५
विनयावनतो भूत्वा पप्रच्छ मुनि-ससदि ।
भवत श्रोतुमिच्छामि शिवाराधनमुत्तमम् ।। १६
यस्मिन् दत्तेऽक्षय वित्त त देश ब्रूत मे विभो ! ।
प्रासादेनाणुमात्रेण यस्मिन् तुष्यति शङ्करः ।। १७
एतद्भूर्तांहित वाक्य श्रुत्वा ते मुनिपुङ्गवा ।
अभिनन्द्य तदा वाक्यमन्योऽन्यमभिमूचतु ।। १८
साध्वहोक्तमिद राज्ञा श्राव्य कृत्यमघापहम् ।
मार्कण्डेय समासीन सप्तकल्पान्तजीविनम् ।। १९
विनयेनोपसगम्यापृच्छन्नृपतिनोदितम् ।
मार्कण्डेयश्चिर ध्यात्वा व्याजहारानलद्युतिः ।। २०

## मार्कण्डेय उवाच

नाकपृष्ठे नगश्रेष्ठे काष्ठाया वनरोधसि ।
दिव्ययोगेन सपश्यन् कृत्स्न लोकाश्चराचरान् ।। २१
चित्रान्न्यायवतान् पुण्यान् पुराणविधिनोदितान् ।
आलोक्य निखिलाश्चाम्यान् प्राह गम्भीरया गिरा ।। २२
श्रृणु तत्त्वार्थं सक्षेप पर पृच्छसि भूपते ! ।
पुराणपुरुषै प्रोक्तमादिसर्गे सनातनम् ।। २३
अनुभूता अनेकैश्च धर्मव्युष्टिरनुत्तमा ।
दक्षिणोदधि अभ्यासे स्वर्णकूटे शिलोच्चये ।। २४
एकाम्रकवनोद्देशे भौमस्वर्गे मनोरमे ।
त्रैलोक्यतीर्थसघाते बिन्दु स्रवति सर्वदा ।। २५
तस्माद् बिन्दुसरो नाम्ना सर्वपापहरो ह्रद. ।
एकोनकोटिलिङ्गैश्च वृतो देवपति. स्वयम् ।। २६

तत्रास्ते भगवान् रुद्र कृत्तिवासा जगदगुरु ।
ब्रह्मेन्द्रविष्णुप्रमुखै पूजितस्त्रिदशोत्तमै ॥ २७

मुनिपन्नगसिद्धैश्च पूज्य प्राप्ता शुभा गति. ।
अद्यापि दिवि मोदन्ते कृत्तिवास. प्रसादत ॥ २८

स्वल्पमल्पस्य दानस्य अक्षय परिकीर्त्तित ।
प्रासादेनाणुमात्रेण लभेयु शाश्वतीं गतिम् ॥ २९

ब्रह्माद्यादेवता॰ सर्वे मुनय सिद्धचारणा ।
स्नानदानार्च्चन काले भक्तिमुद्वहता नृणाम् ॥ ३०

विषुवे द्वे च तत् शस्त त्वष्टमी प्रथमादिषु ।
ग्रहोपरागसयोगे आद्यतीर्थमुदाहृतम् ॥ ३१

सदा वसति यत्रासावष्टमूर्त्तिधर प्रभु ।
गोभूहिरण्यवासासि हेमरत्नादिकानि च ॥ ३२

अन्नदानानि शस्तानि प्रयच्छेद् य स्वशक्तित ।
आदास्यति स्वय देव कोटिमूर्त्तिधरो हर ॥ ३३

सुप्रीत परमेशानो ददात्यभिमत फलम् ।
कन्यादान वृषोत्सर्ग स्वर्णदान विशेषत ॥ ३४

अनड्वाहादि यद्दान मध्वाज्य तु सदैवतम् ।
क्षेत्रस्यास्य प्रभावेन कोटिमाहुर्मनीषिण. ॥ ३५

अनुभूतमनेकैश्च दानस्य फलमत्र च ।
तस्मात्त्वमपि राजेन्द्र ! द्रुतमेकाम्रक व्रज ॥ ३६

भज देवमनाद्यन्त कृत्तिवाससमव्ययम् ।
प्रासादमणुमात्र च विधत्स्व शिवसन्निधौ ॥ ३७

## ब्रह्मोवाच

वाढमित्येव स प्राह मार्कण्डेय नृपोत्तम ।
नमस्कृत्वा जगामाशु दक्षिणस्योदधेस्तटम् ॥ ३८

आससाद शिवक्षेत्र महाप्रलय-पर्यन्तम्[1] ।
बिन्दूद्भव सरो दिव्य हेमकूटाचलोपमम् ॥ ३९

---

1 A₂, V—परिणतम् ।

गिरिप्रस्रवणाकीर्णं चित्रपादपसकुलम् ।
मेरुमन्दरसकाश लिङ्गकोटिविभूषितम् ॥ ४०

दृष्ट्वा परमसतुष्टौ[1] यथोक्त ब्रह्मवादिना ।
स्नानदानार्च्चन कृत्वा ब्राह्मणाना च तर्पणम् ॥ ४१

प्रासादार्थं ददौ चार्घ्य मख माहेश्वर प्रति ।
शिलाकर्मकरन्यास-सूत्रधाराश्च शिल्पिनः ॥ ४२

कर्मकाराय सकत्तुं कर्मकार प्रचक्रमे ।
सदस्यान् ऋत्विजो होतृनन्याश्च परिचारकान् ॥ ४३

तपस्विना समध्वाज्यैर्जुहाव[2] च समित् कुशैः ।
कनक राजत ताम्र कन्याहस्त्यश्वकानपि ॥ ४४

गवाम्बरक्ष्मारत्नादीनन्नदान ददौ च स ।
दीयते दीयतेऽनेन नास्तीत्येव न शुश्रुम ॥ ४५

अचिरेणैव कालेन निष्पन्नो देवतालयः ।
सर्वावयवसम्पन्नो लक्षणै समलङ्कृतम् ॥ ४६

प्रतिष्ठा शिवतन्त्रोक्ता चकार विधिवत् स्वयम् ।
पूर्णाहुति हुतिस्यान्ते स्नानमावभृथात्मकम् ॥ ४७

अष्टौ च द्विरदान् मत्तान् करेणुर्दशपञ्च च ।
अश्वान् शत जवोपेतान् सहस्रावर-रोहिणी ॥ ४८

गाश्च पञ्चशत निष्क मणीना च शतत्रयम् ।
अलङ्कारवती-कन्या हसलीला सुमध्यमा ॥ ४९

कुलीना शीलसम्पन्ना स ददौ कृत्तिवाससे ।
यथाकाम ददौ वित्त धृत्युत्साह समन्वित ॥ ५०

प्रीतो देवो विरूपाक्षो यज्ञदानादिकर्मणा ।
य श्रीरामप्रतिष्ठान परमेश्वर-इरीत ॥ ५१

अभवत् तत्र सान्निध्य व्याजहार उमापतिः ।
सम्यक् तुष्टोऽस्मि भद्र ते यज्ञेनानेन सुव्रत ! ॥ ५२

देवायतनमुख्येन दानेन चरितेन च ।
वर वृणीष्व यत्काम वरदोऽहमिहागत ॥ ५३

---

1 B₂, V—परमसहृष्टो ।

2 B₂, V—तपस्विनो महामेध्यानाजुहाव ।

श्रुत्वा वाक्यमिद प्रीतो भार्गव प्राह शङ्करम् ।
यदि प्रसन्नो भगवान् वरमिच्छामि दीयताम् ।। ५४
अस्मिन स्थाने सदा पूजा स्वयमादातुमर्हसि ।
अपर वरमिच्छामि यश्च त्वा विधिना स्वयम् ।। ५५
पूजयेद् वाथ सपश्येत् तस्य पूरय वाञ्छितम् ।
एवमस्त्विति देवेश सविशेषमथावृणोत् ।। ५६
निवसेऽह सदा चात्र तथापि तिथि सन्निधौ ।
अष्टम्या शुक्लपक्षस्य आषाढे मासि भार्गव ! ।। ५७
प्रातरुत्थाय य स्नाति दिव्ये बिन्दुसरो जले ।
परशुरामेश्वर पूजा भक्तियुक्त स्वशक्तित ।। ५८
कृतोपचारैर्विमलैस्ततो मन्त्रमुदीरयेत् ।
ॐ नमस्ते परमार्थाय निर्द्देशगुरवे नम ।। ५९
पूर्वे वयसि यत् पाप क्षालयाम्यत्र जन्मनि ।
सुकृत पदमत्युग्र मनोज्ञ विपुल शुभम् ।। ६०
प्रयच्छ परमेशान इहामुत्रैकमर्जितम्[1] ।
अनेन मन्त्रयोगेन नमस्कृत्वा व्रजेच्छुचि ।। ६१
कृत्तिवासं प्रयत्नेन अष्टमूर्त्ति-प्रदक्षिणम् ।*
तेनैव विधिना भूयश्चाष्टमूर्त्तिधर शिवम् ।। ६२
नमस्कारान्तरे पूजा महादेवाय शक्तित ।
वासरान्ते तथा पूजा यावन्नस्तगतेऽशुमान् ।। ६३
कुर्याद्दिव महेशान परशुरामार्च्चित हरम् ।
प्रात क्षीरमय स्नान मध्याह्ने चाज्यमुत्तमम्[2] ।। ६४

---

1. B2 V—मूजितम् ।

*V—ततो देवगृह गत्वा देवस्याभिमुख ततः ।
अष्टाङ्गप्रणिपातेन कुर्यात् षोडशवन्दनम ।।
मध्याह्ने च पुन पूजा परशुरामाय शक्तित ।
कुर्यात् चैव नरश्रेष्ठ एवपनालम्भन वर ।।
ॐ नमस्ते स्थूल सूक्ष्माय व्यापीने परमेश्वर ।
मध्ये वयसि यत् पाप तत् पाप न क्षय कुरु ।।

2. V—गव्यमुत्तमम् ।

द्विवान्ते मधुना स्नानं जामदग्न्येश्वरं स्मृतम् ।
परशुरामेश्वरं लिङ्गमुपचारगणैः सह ॥ ६५

ततस्तद्दक्षिणे भूत्वा इमं मन्त्रमुदीरयेत् ।
ॐ नमः सुरासुराधीश सर्वज्ञ अपराजित ॥ ६६

सर्वव्यापिन् ! जगद्धाम ! प्रसीद परमेश्वर ! ।
बाल्ये कौमारवार्द्धक्ये यन्मया दुरितं कृतम् ॥ ६७

तदस्माकं व्यपोह त्वं सर्वजन्मान्तरे कृतम् ।
पूरस्वाखिलान् कामानिह प्रेत्य यदुत्तमम् ॥ ६८

प्रपन्नोऽहं सदा नाथ त्राहि मां वृषभध्वज ।
क्षामयित्वा व्रजेत् तस्मात् जगत्या त्रिविधार्च्चितम् ॥ ६९

पूर्वोक्त विधिना सम्यग् वन्दनं कृत्तिवाससे ।
एतद् व्रतं समाख्यातं ततो ब्राह्मणभोजनम् ॥ ७०

तपोजनै[1] समेतेन हविष्यं भोजयेत् स्वयम् ।
एवं यः कुरुते सम्यक् सर्वज्ञानादिकं लभेत् ।
प्राप्नोत्यविकलं तात मत् प्रसादात् न संशयः ॥ ७१

ब्रह्मोवाच

परमेशः स्वयं साक्षादादिष्टं व्रतमुत्तमम् ।
परशुराममसौ देवस्तत्रैवान्तरधीयत ॥ ७२

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां संहितायां चतुर्थेऽशे परशुरामेश्वर माहात्म्यं नाम ऊनपञ्चाशत् अध्यायः[2] ॥

1. B₂, V—तपोधनं. ।
2. B₂, V—चतुर्थेऽशे परशुरामेश्वरमाहात्म्यं नाम तृतीयोऽध्यायः ॥

# पञ्चाशत् अध्यायः

श्री ब्रह्मोवाच

अथापर प्रवक्ष्यामि क्षत्रस्यास्य महात्मन॰ ।
प्रभाव गिरिमुख्यस्य लोकद्वय-फलप्रदम् ॥ १

इक्ष्वाकुवशप्रभवो राजासीत् सत्यविक्रम ।
यज्वा च भूरिद शूरो नाम्ना दशरथेति च ॥ २

चत्वारस्तस्य तनया रामस्तेषा हि पूर्वज ।
पितृनियोगाद् धर्मात्मा वने वास चकार स. ॥ ३

हृतभार्यो विचिन्वन्तौ भ्रातरौ रामलक्ष्मणौ ।
सुग्रीव सख्यमासाद्य द्रुत वध्वा महोदधिम् ॥ ४

रावण सबल हत्वाप्यभिषिच्य विभीषणम् ।
दत्वाभय जनेभ्यस्तु दृष्ट्वा दशरथ नृपम् ॥ ५

तत. पञ्चदशाब्देन भ्रातृजाया समन्वित ।
नैर्ऋते प्लवगै सार्द्धमयोध्या प्रविशद् विभु ॥ ६

शत्रुघ्न भरत दृष्ट्वा पौरान् मातरमेव च ।
ऋषिभि॰ सह सम्पाद्य ह्यमेधादिकान् क्रतून् ॥ ७

इयाज य परो दान्त समाप्तवरदक्षिण ।
नमामि प्रत्यह देवि ! त देव रघुनन्दनम् ॥ ८

अथ रामो महाप्राज्ञ पप्रच्छ ऋषिसत्तमान् ।
वशिष्ठ वामदेव च जावालिमथ काश्यपम् ॥ ९

कौण्डिन्यागस्त्यवृषभान् गोपाल शाशपायनम् ।
विनयेनोपसगम्य रामो राजीवलोचन ॥ १०

प्लक्षद्वीपे तथाऽन्यस्मिन् उच्चे निम्ने स्थले जले ।
पुण्यायतनमुख्येषु सागरेषु सरस्सु च ॥ ११

यानि कानि तु स्थानानि पुण्यक्षेत्राणि शसत ।
स्वल्पेऽप्यक्षयता यत्र धर्मादचाति प्रवर्द्धते ॥ १२

रामोक्तमिदमाकर्ण्य मुनय साधु साध्विति।
वशिष्ठमूचुस्ते सर्वे कथ्यता परमेष्ठिज ॥ १३

वशिष्ठोऽपि चिरध्यात्वा प्रश्नस्य सदृश वच।
त्रीलोकान सर्वधर्मात्मा प्रत्येकैकानवेक्ष्य स ॥ १४

पुराणान् ऋषिभि प्रोक्तान् यत्र धर्मो महान् भवेत्।
आम्नाय निखिलान् साङ्गान् निरुक्तपदनिर्णयान् ॥ १५

एतानन्यान् समालोक्य चैकाम्र दिव्यचक्षुषा।
आद्य सनातनतर स्मृतमात्राघहारिणम् ॥ १६

ज्ञात्वोत्तर लौकिकसारभूत
साम्नायवर्जं जगदादि-लोकम्।
त चोद्भवस्थिति-लया
परस्तादनादिमध्यान्तकमप्रमेयम् ॥ १७

एकाम्रके क्षेत्रवरे वरिष्ठे
साधारणीभूत-अशेषमीश्वर ।
स्वय स्वयम्भुर्भगवान् सनातनो
नात पर तथ्यमिहास्ति लोके ॥ १८

## ब्रह्मोवाच

गुरोर्वाक्यमिद श्रुत्वा राम कमललोचन।
ययौ एकाम्रक क्षेत्र भ्रातृभी रघुनन्दन. ॥ १९

पूर्व मुनिगणा जग्मु राघवस्तदनन्तरम्।
त च देश ययौ शैव सपत्नीको बलै सह ॥ २०

आससाद यथोद्दिष्ट वशिष्ठप्रमुखैर्द्विजै।
तीर्थयात्रा चकारासौ राम कमललोचन ॥ २१

एकोनकोटिलिङ्गेभ्यो वन्दन कृत्तिवाससे।
दर्शन स्पर्शन चैव मूर्त्तिभेदान् पृथक् पृथक् ॥ २२

कृते स्तुत्यर्च्चने रामे रविरस्ताचल ययौ।
उवास रजनी राजा समेत्य मुनिभिर्वृत ॥ २३

कथयन्त कथा पुण्या पुराणविधिनोदितम्।
क्षणदा क्षयमापन्ना समुत्थाय च राघव ॥ २४

गन्धर्व-ध्वनिभिर्जुष्ट सूतमागधवन्दिभि ।
सुप्रभाते सुमङ्गल्ये ततो बिन्दुसरो ययौ ॥ २५
अवतीर्णे जले दिव्ये सिद्धचारण-सेविते ।
प्रात क्रिया च निवर्त्त्य प्रणम्य च महामुनीन् ॥ २६
अभिनन्द्य महीपालानाशीर्वाद प्रगृह्य च ।
अनन्त वासुदेवाख्य बहुमानेन पूजितम् ॥ २७
वाशिष्ठेन सुमन्त्रेण ससभारेण तोषित ।
पूजयित्वा जगामासौ जगत्या जगतीपति ॥ २८
नन्दीश्वर गणाध्यक्ष महाकाल विनायकम् ।
विघ्नेश्वर कुमार च वृषभ वृषभेक्षण ॥ २९
निदध्यात् पूजयामास देव त्रिभुवनेश्वरम् ।
ततो गोपालिनी देवी कल्पवृक्ष च सुव्रत ॥ ३०
गणचण्ड च सावित्री सप्तवारान् प्रदक्षिणम् ।
कृत्तिवास ततो भूय प्रणम्य उपसयत ॥ ३१
स्नापयामास देवेश सलिलै पयसा तथा ।
दध्ना साज्यमयै शस्तै शुभ्रै पञ्चामृतैस्तथा ॥ ३२
गन्धोदकमयैर्हृद्यैस्तीर्थाम्भि शतशो घटै ।
सुगन्धैरनुलेपैश्च दिव्यैर्माल्यैर्मनोहरै ॥ ३३
गन्धै. पुष्पैस्तथा धूपैर्दीप-नैवेद्य-वाससैः ।
स्रजै प्रवरमत्यर्थमुपचारपदैर्विभुम् ॥ ३४
स्तोत्रैरुचावचैर्दिव्यै सिद्धमन्त्रपदाक्षरै ।
छन्दोपनिषदै श्लक्ष्णै गीतवादित्र नि स्वनै ॥ ३५
वीणावेणुलयैर्नृत्यै सर्वभावेन राघव. ।
पूजयामास त देवमाचार्याश्च तपोधनान् ॥ ३६
हेमराजतवस्त्रैश्च ब्राह्मणाना च तर्पणम् ।
अददत् सर्व विप्रेभ्य शिवमुद्दिश्य दक्षिणाम् ॥ ३७
एव प्रतिदिन पूजा मणिरत्नमयी पराम् ।
चकार विधिवत् राजा राघवो रघुनन्दन ॥ ३८
यथाह स निजामात्यान् सौमित्रिभरताविमौ ।
वशिष्ठ स्थविराचार्यं वामदेव च काश्यपम् ॥ ३९

पार्थिवान् धर्मप्रवणान् सुहृत्-प्रकृतियाजकान् ।
सर्वान् प्राह महीपाल पूर्णेन्दुसदृशानन ।। ४०

इच्छेऽहमालय कर्त्तुं लिङ्गस्यास्यानुरूपतः ।
क्षिप्र संवाहय कृत्स्न पाषाणाश्ममयानि च ।। ४१

वाढमित्येव ते सर्वे चक्रु' कर्माण्यशेषत ।
प्रयच्छतः सुसहृष्टो भरतो रामशासनात् ।। ४२

वशिष्ठस्तमुवाचेद राघव मुनिभि सह ।
ब्रह्मा विष्णुश्च शक्राद्या देवदैत्योरगाप्सरा ।। ४३

यक्ष विद्याधरा साध्या मुनयश्च दिवौकस ।
व्यवस्थिता महीपाला पुरा राम अनेकशः ।। ४४

सहस्रयुगपर्यन्त सांप्रत भवतोदितम् ।
यदि प्रसन्नो भगवान् कुरुष्वाभिमत तदा ।। ४५

पुरा श्रुतिरिय राजन् ! शशाङ्क कारयिष्यति ।
तस्मात् त्वमपि राजेन्द्र ! अन्यत्रायतन कुरु ।। ४६

इत्येव वदतस्तस्य वशिष्ठस्य महात्मन ।
ततश्चान्तर्हिता वाणी गगनादवतारिता ।। ४७

राम राम महावाहो देवाना प्रीतिवर्द्धन ।
रुद्राराधनतत्त्वज्ञ श्रृणु मे परम वच ।। ४८

चन्द्रमा मुकुटाद् भ्रष्टो महीं यास्यति नाचिरात् ।
तदाऽसौ कुरुतेऽस्माक प्रासाद शिवसम्मतम् ।। ४९

विधत्सान्य महाबाहो प्रासाद रुचिरद्युतिम् ।
तत्राह स्वयमेवोच्चैरूपस्थास्ये चिर सदा ।। ५०

पूजित प्रीतिमतुल ददाम्यभिमत फलम् ।
शुश्रावान्तर्हिता वाणी रामो भ्रातृ सुहृत् सख ।। ५१

स भूय प्राञ्जलिं वध्वा त देव प्रत्युवाच ह ।
कस्मिन् देशे करिष्यामि आज्ञापय महेश्वर ! ।। ५२

तमुवाचाशरीरस्थो मधुरा लोकसाक्षिणीम् ।
बिन्दुसरादद्दूरेण वायव्येन समाश्रिते ।। ५३

धेन्वन्तर-नवशते सप्तत्युत्तर भूभृते ।
कुरुष्वायतन पुण्य शिवस्थानमनुत्तमम् ।। ५४

एषा ते शाश्वती कीर्त्ति लोके स्थास्यति सर्वदा ।
अहोऽष्टम महाक्षेत्रे पुण्यायतनमस्तु वै ।। ५५

यज्वाध्वरवर राजन् ! विशेषाच्च कपर्द्दिन ।
वाढमित्येव स प्राह जताम सहसा शिवे ।। ५६

इत्यैकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया चतुर्थेऽ शे श्रीरघवीरागमनो नाम पञ्चाशत् अध्याय ।।

1. $B_2$, V—चतुर्थेऽशे श्रीरघुवीरागमन नाम चतुर्थोऽध्याय
$B_1$—चतुर्थेऽशे श्रीरघुवीरागमने चतुर्थोऽध्याय ।

# एकपञ्चाशत् अध्यायः

## श्री ब्रह्मोवाच

अथ भूमिं समासाद्य प्रविचार्यायतेक्षण ।
शुभे योगे तथा लग्ने शिलान्यासमकारयत् ॥ १

वाशिष्ठं च मत कृत्स्नमाम्नीय-विधिनोदितम् ।
सदस्याध्वर्यु ऋत्विग्भि सहितो भ्रातृभि सह ॥ २

यज्ञशास्त्र-प्रवक्तार श्रोत्रियाश्च सदस्यका ।
ब्राह्मणा बहुशास्त्रज्ञा अग्निहोत्रपरायणा ॥ ३

गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा ।
सम्वत्सरपरा विप्रा वेदवेदाङ्ग-पारगा ॥ ४

सोमपा परमोदारा सशिष्या सपरिग्रहा ।
तथा प्राच्या प्रतीच्याश्च दक्षिणोदधि-सस्थिता ॥ ५

आजग्मु शतशो भूपा रामशासन-तत्परा ।
गजाश्व रथसघोषै पत्तिध्वजसमाकुलै. ॥ ६

महामेघौघसकाश सूर्यकोटिप्रकाशका. ।
पादमूल समासाद्य रामस्य वशवर्त्तिन ॥ ७

निवेदयन्ति चात्मान ते कोष बलवाहनै ।
चतु सागरपर्यन्त यावन्तश्च महीभुज ॥ ८

आपूर्य बलसघातैर्भाजमानो नगोत्तम ।
दूरागता नृपेन्द्रार्यान् पूजयामास राघव ॥ ९

भरतोऽप्यन्नदानेन यथोचितमकारयत् ।
सौमित्री रथमारुह्य सायुधो दुर्गरक्षक ॥ १०

शत्रुघ्नोऽनुचरो दक्षो भृत्य प्रेष्यवश गत ।
विधेया[1] सर्वभूपाला ग्रहा नित्यानुकूलका ॥ ११

---

1, $B_2$, V—मा विधेया ।

देवाश्च ऋषयस्तुष्टा प्रवृतेऽध्वरकर्मणि।
इष्टकास्तरण सम्यक् सूर्यमुख्यानि षोडश॥ १२

प्राचीनाग्रैस्तथादर्भैर्मण्डल परिचक्रिरे।
औडुखल विषाणाग्र सरणी वृष उत्पलम्॥ १३

गाश्चैव तु अनड्वाह् यज्ञायान्याश्च पावकान्।
आज्यान् व्रीहीन् यवान् होत्रान्
पञ्चाग्नीन् विधिनो[1]दितान्॥ १४

प्रणीताश्च श्रुव स्थालो[2] द्वीं चावासयत् क्रमात्।
प्रभूतकुसुमोद्वासैश्चन्दनागुरुवाससै॥ १५

यज्ञवाट सुवितत शतमान-समन्वितम्।
वितान घनमत्यन्त रत्नाकरसमप्रभम्॥ १६

भाति सीता समीपस्था सहधर्मानुसारिणो।
कृष्णाजिनधरावेतौ दण्डकाष्ठ-समेखलौ॥ १७

कुण्डलाभ्या विचित्राभ्या मुकुटेन विराजितै।
राम कमलपत्राक्ष॰ पुण्यश्रवणकीर्त्तन॰॥ १८

ऋषिमध्यगतो भाति वृतो देवै स्वयम्भूवत्।
ततोऽश्व च समानीय सर्वलक्षणलक्षितम्॥ १९

प्राक्षितो मन्त्रयुक्तेन मनो मारुतरहसम्।
मन्त्रपूत समुत्सृष्टस्त्वगात् परिप्लुतो हय॥ २०

शत्रघ्नोऽभिययौ[3] वीरस्तस्य सरक्षणाय वै।
शत शतसहस्राणि राजपुत्रा महाबला॥ २१

कवचिनो धन्विनः शूरा सर्वायुध-विशारदा[4]।
अनुजग्मुर्महावीर्यं शत्रुघ्न शत्रृतापनम्॥ २२

ब्राह्मणा याजकाश्चैव कुर्वन्तीष्टि मनोमताम्।
ऋषयो यजुषैरुक्तैर्महामखविदैर्द्विजै॥ २३

---

1 $B_2$, V—वज्रश्रीव।
2 $A_2$, $B_1$, C—अतो।
3 $B_2$, V—अनुययौ।
4 $B_2$, V—सर्वयुद्धविशारदा.।

विभ्रमुस्तरसा ऊर्वी चतुरन्ता मनोजवाम् ।
यथाहनि तथा रात्रौ सतत तु समीरवत् ॥ २४

नदीनदानरण्याश्च अतिक्रम्यागमद् हय ।
महाप्लक्षवन नाम्ना श्रीशैलान्तिकमाविशत् ॥ २५

तत्रैवासीत् तु दुष्टात्मा प्राणिना प्राणहारक ।
कालाञ्जनगिरिप्रख्य कमठाङ्गो महासुर ॥ २६

त हि दृष्ट्वा हरिश्रेष्ठ जहाराप्याशु मूढधी ।
पार्वतीयो दुराधर्षो महामोह समन्वित ॥ २७

कन्दरोदर-वासोऽसौ त जुगोप लतान्तरे ।
पारिप्लवहयोत्कृष्ट राघवेन विराजितम् ॥ २८

अवसद् बन्धभिर्जुष्ट पिवन्त[1] मधु-माधवम् ।
अनुयातोऽथ सम्भ्रान्तो मृगयन्त[2] सराघव ॥ २९

अप्रवृत्त विचिन्वन् स शत्रुघ्न शत्रुकर्षण ।
उद्विग्नमानस शान्तो[3] राघवो रघुनन्दन ॥ ३०

दिशोऽवलोक्य समूढो विनिश्वस्य मुहुर्मुहु ।
अलब्ध्वा हयरत्न स चिन्ताव्याकुललोचन ॥ ३१

मुमुर्षित इवाश्वस्थो विषयातीतवत् स्खलन् ।
अनुप्राप्ता कवचिनो राजपुत्रा सहस्रश ॥ ३२

अमात्यतनया शूरा रथनागाश्वपत्तय ।
चित्रावती नदीतीरे योजनै सह सेनया ॥ ३३

ऊषुर्विभावरी तत्र ब्राह्मणै सह मन्त्रिभि ।
चिन्तयन्तस्तमेवार्थं प्रभाता रजनी तत ॥ ३४

एकैकाब्दा शत चास्या द्यावापृथ्वी समन्तत ।
ग्रामारण्यस्थल निम्न वनान्युपवनानि च ॥ ३५

शैलान् सानूनुच्चनीचाश्चतुरन्ता वसुन्धराम् ।
समुद्रपुलिनादीश्च मृगयन्त समन्तत. ॥ ३६

---

1. $B_2$, V—बन्धुभि हृष्ट पिवन्ति ।

2 $B_2$, V—मृगयन्त ।

3. $B_2$, V—श्रान्तो ।

निरन्वयमिद मत्वा पर्यतप्यत राघव ।
अतीव मनसोद्विग्नो व्रीडितो लक्ष्मणानुज ॥ ३७

उवाच कष्टमादीनो मुखेन परितप्यता ।
अहोऽनु खलु सन्द्रोऽह धिगस्तु मम जीवितम् ॥ ३८

श्रेयो हि मरण चाद्य स्वामिसद्भावनादृते ।
द्रष्टु रामस्य पादाब्जावनर्हो निरपत्रप ॥ ३९

इत्येवं वदतस्तस्य सित जीमूतसन्निभ ।
तदा घनं भेदयित्वा ब्रह्मर्षिरमितद्युति ॥ ४०

उवाचेद च शत्रुघ्न स्वस्ति ते लक्ष्मणानुज ।
सोऽभिवाद्य मुने पादौ समुद्दिश्य मन स्वयम् ॥ ४१

उपविश्याब्रवीच्छीघ्रं नारद प्रहसन्निव ।
निरुत्साहोऽसि किं तात ! विषण्णवदन कथम् ॥ ४२

दीक्षितो वाश्वमेधेन रामोऽयमिति शुश्रुम ।
हृत्वा तमश्व पापात्मा कमठाङ्गो महासुरः ॥ ४३

गोप्यास्ते च बलौघेन योद्धुकामो महाबली ।
श्रीशैलस्यानुवासोऽसौ वने प्लक्ष(?) उदाहृत ॥ ४४

निराश्रयः सुरारातिश्छिद्रान्वेषी बलोत्कट ।
सख्ये राक्षसराजस्य द्वितीय इव रावण ॥ ४५

विकटस्यानुजस्तात ! स राम द्वेष्टि नित्यश ।
हत्वा पाप दुराचारमानयस्व निज हयम् ॥ ४६

नारदेनैवमुक्तस्तु प्रत्यागम इवाभवत् ।
व्याजहार ततो वाक्य सुमित्रानन्दवर्द्धन ॥ ४७

देवर्षे प्रियमत्यन्त भाषित मधुर हितम् ।
नाशयामि द्रुत पश्य आनन्द तव वर्द्धयन ॥ ४८

धर्मविघ्नकरो मूढो हयचौर सुरद्रुह ।
पुत्रपौत्रसुहृन्मित्रैर्वृतो याति यमालयम् ॥ ४९

अद्य मत्कार्मुकोत्सृष्टैर्बाणैरग्निशिखोपमै ।
आहरामि रणे शीघ्र रसातलगतानपि ॥ ५०

आदिदेश बलाध्यक्षं तूर्णं सेना प्रकल्प्यताम् ।
स्वयमेव ततो हृष्टो नमस्चक्रे महामुनिम् ॥ ५१

कृत स्वस्त्ययन श्रीमान् प्रययौ शीघ्रविक्रम ।
वेत्रवत्या समुद्दिष्टो नारदेन समन्वित ।। ५२

ततो ययौ स देवर्षि श्रीशैल कमठालयम् ।
त ददर्शासुर दीप्त वृत्त कोटिबलैरपि ।। ५३

स राक्षसो मुनि दृष्ट्वा चकारातिथ्यमुत्तमम् ।
नमस्कृत्वा ब्रवीदेव मुने कि करवाणि ते ।। ५४

कथमागमन नाथ आलय मे वदाचिरम् ।
नारदस्तमुवाचेद निबोध दनुजोत्तम ।। ५५

भवतो भयमापन्न त्व च सज्जीभवाचिरम् ।
हयरत्नो ह्यय यस्य हृतस्ते विजनात् वनात् ।। ५६

याज्ञीय प्रोक्षितस्तेन रामेणाश्लिष्ट-कर्मणा ।
तस्य भ्राता कनिष्ठश्च शत्रुघ्न. सबलान्वित ।। ५७

प्रयातस्त्वद्वधाकाङ्क्षी यत्सुख तत् समाचर ।
एव चागमन मह्य यच्च पृच्छसि कारणम् ।। ५८

निशम्य स मुनेर्वाक्यमुवाच मदर्दपित ।
रामो रामानुजो वापि यो वा सोऽस्तु महामुने ।। ५९

न बिभेमि रणे शक्र कि पुनर्मानुषे जने ।
हयरत्न न दास्येऽह कदाचिदपि नारद ! ।। ६०

तयोरेव विवदतौ शुश्राव सुमहाध्वनि ।
महाजलदनिर्घोषस्तूर्यशङ्खखादित ।। ६१

तन्निनादेन सक्षब्धान् पार्वतीयान् महासुरान् ।
आदिदेश ततस्तास्तु युद्ध्यतामिति चासुर ।। ६२

स्वाम्यादेश पुरस्कृत्य निर्ययुर्युद्धलालसा ।
शतशोऽथ सहस्राणि गजाश्वरथपत्तय ।। ६३

छत्रध्वजपताकैश्च नानाशस्त्रोद्यता नृपा ।
अष्टादश सहस्राणि गजाश्च वातरहसा[1] ।। ६४

उद्भिन्नोद्दामघण्टाश्च चलच्छिखरिणोपमा ।
सादयश्चाश्वसयुक्ता महापात्र[2]-प्रचोदिताः ।। ६५

1 B₂, V—वाजिजाता तु रहसा ।

2. B₂, V—महामात्र ।

सहस्राष्टौ तथाचाष्ट परानीक-विभेदिन ।
तिस्र॰ स्यन्दनसाहस्राश्चातुर्याश्चाश्मवर्षिण ।।
पताका-अग्रणी[1] साक्षात् कमठो मठरात्मज ।
विचित्रोऽगात्सन्नहन हारकेयूरमण्डित. ।। ६७

कैकेय सुप्रहृष्टश्च यजमानैश्च बन्धुभि ।
सग्रामाभिमुखो हृष्टश्चतुरङ्गबलैर्वृतः ।। ६८

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया चतुर्थेऽशे पारिप्लवे एकपञ्चाशत् अध्याय[2] ।

1 $B_2$, V—पताकी चाग्रणी
2 $B_1$, $B_2$, V— चतुर्थेऽशे पारिप्लवे पञ्चमोऽध्याय ।

# द्विपञ्चाशत् अध्याय

## श्री ब्रह्मोवाच

अन्योऽन्यमभिसप्रेक्ष्य प्रलयाभ्र समप्रभौ ।
तुर्यनिकपणादन्तौ[1] महामेघौघनि स्वनौ ।। १

तमायान्त सुदुर्द्धर्षं शस्त्राध्मात सुविस्मृतम् ।
आससाद इय सेना सङ्गमास्ते च जाह्नवीम् ।। २

शरोद्भूत रजोद्भूतमवेक्षन्त परस्परम् ।
सान्द्रशस्तौघमत्यर्थ चक्षुर्ग्रह-विवर्जितम् ।। ३

हेमपुङ्खा प्रकाशन्ते सखद्योतेव शर्वरी ।
पतन्ति रथनागाश्व-पत्तयश्चाशु मेदिनीम् ।। ४

सवभूव महाघोर सेनयोरुभयोरपि ।
न विदु स्वपरौ चैव तुमूल समजायत[2] ।। ५

प्रवृत्त सुमहद् युद्ध सबल घोरदारुणम् ।
प्रविशन्तो[3] मिथोऽन्योऽन्य छिन्नाङ्गिकारविग्रहा ।। ६

पत्तिभि पत्तिनः सख्ये वाजिभि सह वाजिन ।
हस्त्यारूढ गजारूढा रथिन रथिना वराः ।। ७

साम्येन सममाहत्य धन्वी खड्गी परश्वधी ।
बद्धवैराविमौ सैन्यौ साहसैकयुयुत्सवौ ।। ८

सप्रहारो महानासीत् पुरा देवासुरे यथा ।
छिन्नाबह्नूर्द्धकायाश्च विपादा पतिता नरा ।। ९

हयाश्च चरणोत्कृत्वा असृजन्त विचेष्टिता ।
भिन्नमस्तक-मातङ्गा विदन्ताश्च विनायकाः ।। १०

---

1. $A_2$, $B_1$, C—तुर्यनीकप्रणामन्ते ।

2. $A_2$—समजायते ।

3. V—प्रविशन्ति ।

पराङ्मुखाश्च वित्रस्ता शतशो यान्ति वारणा ।
क्षतवक्त्राश्च[1] भिन्नाश्च भग्नाक्ष-ध्वजकूवरा[2] ॥ ११

स्यन्दना स्पन्दनाहीना· हताश्वा हतसादिन ।
विध्वस्त-कवचा शूरा सममासीद् व्यतिक्रम ॥ १२

ययौ देशा महाकुल्या शतशारङ्गमालिनी ।
तोमर-ग्राह-सकीर्णा हय-हसवती सती ॥ १३

वृक्षग्राहवती[3] भीमा परलोक-प्रवाहिनी ।
इत्थ सा सरिता श्रेष्ठा यगति शीघ्र तरङ्गिणी ॥ १४

घोराद् घोरतर युद्ध महास्त्र प्लवमावभौ ।
क्रव्यादगण सकीर्णा भूतमद्ध्रुदर्शना ॥ १५

अवधूता पिशाचाश्च कङ्कगोमायव खगा ।
विद्रुता पार्वतीयास्ते त्यक्त्वा मान धन मृधे ॥ १६

व्यस्तग्रस्तसमस्ताङ्गा वेपमाना भयातुरा ।
त समीक्ष्य बल भग्न कमठ कामरूपधृक् ॥ १७

उवाच सारथिं वीरो नय मा यत्र राघव ।
शत्रुघ्न च वधिष्यामि[4] सभृत्यबलवाहनै ॥ १८

वाढमित्येव स प्राह चोदयामास तान् हयान् ।
प्रददाह रिपु सख्ये ग्रीष्मे कक्षमिवानल ॥ १९

तमपश्यत् स दुर्द्धर्षं पूर्वभग्नाननुव्रजान् ।
भूय सुतुमूल युद्ध नरनागरथक्षयम् ॥ २०

नाना तूर्यनिनादैश्च नेमिघोषौघसवृतै ।
बृहितैर्वारणेन्द्राणा हय-ह्रेषा चमत्कृतै ॥ २१

हयाना ह्रेषनिस्वानैर्ज्याघोषैर्भर्त्सितै स्वरै ।*
तेन नादेन सक्षब्ध प्रतिशब्दायते जगत् ॥ २२

गिरिकन्दरसानूषु दिङ्नभोन्तरगोचरे ।
द्रष्टुमभ्याययौ देवा यक्ष विद्याधरोरगा ॥ २३

---

1 $A_2$, $B_1$, C—अक्ष—।

2 $A_2$, $B_1$, C—भग्नाश्च रथकूवरा ।

3. $A_2$, $B_2$, C—ऋक्षग्राहवती ।

4 $A_2$, C—वधयिष्यामि ।

* V—ज्याघोषैर्भासितै शूरै शब्दमासीत् भयानक ।

विमानविधिसम्पन्ना कौतूहलसमन्विता ।
पुरस्कृत्य सहस्राख्य चान्तर्द्धाने दिवौकस ॥ २४

अपश्यन्त बल तूर्ण वितत घोरदर्शनम् ।
शस्त्रसघातमत्यर्थ पुरा देवासुरोपमम् ॥ २५

अथ आहूय अन्योऽन्य योद्धा योद्धु समागता ।
कुलिशाङ्ग सुमन्तेन प्रभद्रेण शिलीमुख ॥ २६

विनीतो भर्त्तुरातेन सूर्यघोष-प्रभोत्कटौ ।
सोम उद्विग्नतौ सख्ये इन्द्रदत्त-विशाठकौ ॥ २७

विलोचनेन भिन्नाङ्ग शिवदत्त सुलोचनौ ।
जित मह्य सुचित्रघ्न सुयज्ञो यज्ञकोपनम् ॥ २८

धर्मकीर्त्ति कृतारम्भ भास्वरन्तमथो पुर ।
अन्यैरन्यान् समासाद्य सामान्य सदृशैर्बलै ॥ २९

एतान् सर्वानतिक्रम्य अपश्यन्त रथाग्रणी ।
शत्रुघ्न कमठे सख्ये द्वावेतौ बलिनावरौ ॥ ३०

अन्योऽन्यमभिधावन्तौ स्यन्दनस्थावनुपमौ ।
धनुर्वेदविदा श्रेष्ठौ सर्वास्त्रविधिपारगौ ॥ ३१

एताविव[1] महावीर्यौ गोष्ठे गोवृषभाविव ।
विस्फर्द्धमानवन्योऽन्य सिहः सिंहमिवापर ॥ ३२

प्रेरण लाघव चित्र बलिवासवयोरिव ।
किरन्तौ शरवर्षाणि दूरान्तिक कृतश्रमौ ॥ ३३

धिङ् निर्भर्त्सनसयुक्तौ[2] दुर्लक्ष्यमतिमानिनौ ।
ततः प्राह सुसरब्ध कमठाङ्गो महासुर ॥ ३४

क्रोधरक्तेक्षणो वीरः कृतान्तवशमोहित. ।
नाह त्रिशिरसा नीच खरदूषणताडका. ॥ ३५

न विराधकवन्धौ च नैव लङ्केश्वरादय ।
विद्धि मा कमठाङ्ग तु अबध्य त्रिदशैरपि ॥ ३६

अवगच्छावगच्छ त्व मा मृत्युवदने विश ॥
वाणाक्षरपथे प्राप्ते न जीवन् प्रतियास्यति ॥ ३७

---

1 A₂, B₁, C—नेतादिव, V—नेताविव ।

2. C—दिग्भिरच्छिन्नसयुक्तौ ।

स्मर भ्रातृकलत्रादीन् अयोध्या निवसन्ति ये ।
दुर्लभ दर्शन तेषा हते त्वयि भविष्यति ।। ३८

पुन पुन कलत्रादीन् स्मर स्मर रघत्तम ! ।
श्रुत्वा त परुष वाक्य शत्रुघ्न शत्रुतापन ।। ३९

तस्य वाक्यानिलात् सृष्टो ज्वलत् सौमित्रि-पावक ।
अह भवन्त हन्मीति व्याजहार रुषान्वित ।। ४०

इत्युक्त्वा चाष्टनाराचैर्विव्याध च ननाद च ।
तमायान्त स चिच्छेद षट् त्रिशत्या पुन शरै ।। ४१

अनेनात्यलुनात् शीघ्र पञ्चाशत् चाकिरत् शरान् ।
समेन सममासाद्य विचकर्त्त शिलीमुखान् ।। ४२

शतमष्टोत्तर सख्ये प्राहिणोदसुरोत्तम ।
तमायान्त तु चिच्छेद राघव कृतहस्तवत् ।। ४३

चुकोप समरे वीर पिशाचास्त्र मुमोच ह ।
तदस्त्र व्याहनत् क्रुद्धो गन्धर्वास्त्रेण राघव ।। ४४

योजयत्यनिश सख्ये मोहमाजनन महत् ।
सन्नद्धा आसुरी सेना[1] वने च सरिता पते ।। ४५

हतशेषा द्रुता भीमा गन्धर्वास्त्रनिराकृता ।
बल भग्न समालोक्य दधत् कोप महासुर ।। ४६

तमोमय महत् चास्त्र विससर्ज ननाद च ।
अन्धकारमभूद् युद्धे दानवा परिशङ्किताः ।। ४७

क्षिप्रकारी स शत्रुघ्न सावित्र चास्त्रमाक्षिपत् ।
तमोध्वस्तमभूत् सद्य सूर्येणैव महानिशि ।। ४८

अतिहर्षमवापुश्च देवता ऋषिभि सह ।
शूलाष्टपरिघै पाशैर्भिन्दिपालैः सतोमरै ।। ४९

शूलैश्च सशरैस्तीक्ष्णै पट्टिशै कूटमुद्गरै ।
शतघ्निपरशै पाशैर्द्वाविमो ख्यातकर्मिणौ ।। ५०

विख्यातपौरुषौ तौ तु अविश्रान्तौ महोजसौ ।
सौमित्रिरथसक्रुद्धो ममार चतुरो हयान् ।। ५१

---

1 —आसुरसेना ।

यन्तुरस्य शिरः कृन्त भल्लेनोन्नतपर्वणा ।
हताश्वो हतयन्ता च समुत्तीर्य रणक्षितौ ।। ५२

वृक्षमुत्पाट्य सहसा चिक्षेप विवधान् शिलान् ।
इषुभिर्विविधैस्तास्तु व्यचूर्णयत राघव ।। ५३

पुनस्तु राक्षस क्रुद्ध प्राणिणोद् राघव तदा ।
क्रूर शकटचक्राक्षो दीप्तानल समप्रभ ।। ५४

गदामादाय गुर्वीं स तिष्ठ तिष्ठेति चाब्रवीत् ।
एकशृङ्गाचलाकारो दण्डपाणिरिवान्तक ।। ५५

प्रधावद् राघव हन्तु चालयन् स वसुन्धराम् ।
हन्तुकाम समीपस्थो दक्षिण बाहुमुद्यतम् ।। ५६

स चिच्छेदार्द्धचन्द्रेण पपात सगदो भुज ।
वाम परिघसस्थस्यालुनात्तस्यापि राघव ।। ५७

प्रसार्य च महावक्त्र ग्रसितु सोऽप्यधावत ।
त स दृष्ट्वा कुमारेण त्यक्तेन[1] निशितेन च ।। ५८

क्षुराग्रेणाहनच्छीघ्र शिरो भूमौ न्यपातयत् ।
पपात रुधिरोद्गारी भूमे कम्पमजायत ।
लेभे सरित्पतिस्तत्र सरित शोणिताप्रियाम् ।। ५९

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया चतुर्थेऽशे पारिप्लवे कमठाङ्गवधो नाम द्विपञ्चाशत् अध्याय [2] ।।

1. A₂, C, V—पीतेन ।

2 B₂— चतुर्थेऽशे पारिप्लवे कमठासुरवधो नाम षष्ठोऽध्यायः;
B₁, V—पारिप्लवे कमठाङ्गवधो नाम षष्ठोऽध्याय ।

# त्रिपञ्चाशत् अध्यायः

## श्री ब्रह्मोवाच

ततो देवा सगन्धर्वा प्रणेदु सह चारणा ।
पुष्पवृष्टि प्रमुञ्चन्ति सुरदुन्दुभिनादिता ॥ १

साधुवादेन शत्रुघ्न पूजयन्ति दिवौकस॰ ।
हत्वा तु कमठ रौद्र पुर तत्र विवेश स ॥ २

धनरत्नमय स्फीत सर्वोपस्करसाधितम् ।
जग्राह तस्य वित्तौघ याज्ञीय हयमुत्तमम् ॥ ३

महिषी तस्य दीना सा नाम्ना शैलवतीति सा ।
विक्रोशती भयाद् भीता शरण्या हृतभर्त्तृका ॥ ४

पादौ पपात सा तस्य शत्रुघ्नस्य सवेपथु ।
त्रायस्व नाथ नाथेति दुर्विज्ञेय गते प्रभौ[1] ॥ ५

दृष्टशास्त्र ! महोपाल ! अचिन्त्यबलपौरुष ! ।
रामभ्रात ! जगद्भर्त्ता ! दस्युहन्त ! महाभुज ! ॥ ६

एष मे तनयो बालस्त्वद्‌गतिस्त्वत् परायण ।
भवत शरण नाथ पादमूले व्यवस्थित ॥ ७

विलपन्तीमनाथा ता कृपा चक्रे स राघव ।
अभिषिक्तो ह्यसौ बाल सह प्रात्रादिमन्त्रिभि ॥ ८

निर्जगाम पुरात् तस्मादादाय प्रोक्षित हयम् ।
बलेन महताविष्टो निर्वृत्य सह याज्ञिकैः ॥ ९

अश्वमेधाश्वमादाय जवेन सतत तदा ।
एकाम्रक ययौ धीमान् स्तूयमानश्च बन्धुभि ॥ १०

अग्रज जननी ज्येष्ठा नमश्चके विधानवित् ।
आघ्राय तच्छिरो राम आशीर्वाद ददौ द्विजै ॥ ११

---

1. V—प्रभो ।

ततः कर्म समारेभे चाम्नाय विधिनोदितम् ।
ॐकार वषट्काराश्च स्वधा स्वाहा प्रवर्त्तकान् ॥ १२

दीयन्ते चाथ ह्यन्ते नास्तीत्येव न शुश्रुमः ।
ब्रह्मघोषध्वनि स्वस्ति सतत चानिश क्रतौ ॥ १३

वाजिमेधे तु सप्राप्ते निष्पन्ने देवमन्दिरे ।
प्रतिष्ठा विधिवच्चक्रे आचार्यप्रवरे मते ॥ १४

भरतस्य तथा चैको लक्ष्मणस्यावरस्य च ।
पृथक् प्रासादा सजाता रामस्य गुणवत्तराः ॥ १५

स्नात्वा चावभृथे राजा दान दत्वा यथोदितम् ।
देवाय स ददौ भक्त्या वसूनिच बहूनि च[1] ॥ १६

हयान्नगास्तथापूर्णा करेणु बहुपूरिता ।
विलासिनीशत साग्र हेमरत्नैरलकृतम् ॥ १७

चामरं व्यजन छत्र हेमभृङ्गारमुष्णिषम् ।
हेमरत्नमलकारान् गाश्च दोग्ध्री पयस्विनी ॥ १८

अन्यान् बहुविधान् दिव्यान् दिव्यतूर्यवरध्वजान् ।
पञ्चविंशति ग्रामान् स सर्वोपस्करणान्वितान् ॥ १९

ववे पाशुपताचार्यं स्थाप्य काञ्चनविष्टरे ।
प्रक्षाल्याशु च तत् पादौ समभ्यर्च्च्य यथार्थवित् ॥ २०

कटकोष्णीषहारेण कुण्डलाङ्गविभूषणै ।
चन्दनोत्क्षिप्त-माल्याङ्गै र्नमस्कृत्वा प्रदक्षिणम् ॥ २१

ततो निवेद्य सम्भारान् सर्वत परिकल्पितान् ।
शिवमुद्दिश्य मेधावी ददौ पाशुपताय स ॥ २२

स्वस्तीत्याहु वराचार्यं आशीर्वाद सुमन्त्रवित् ।
पञ्च पञ्चोत्तरास्थाप्य पालनार्थाय कीर्त्तनम् ॥ २३

अथ राम· स्वय साक्षात् प्राह प्राञ्जलिक सभाम् ।
प्रशस्तिमेतामिच्छामि लिख्यता[2] लेखकोत्तमै ॥ २४

---

1. $A_2$—बहूनिव ।
2. V—लिखता ।

इक्ष्वाकुवशप्रभवा पालयिष्यन्ति सत्कृतिम्[1] ।
दातारो नरक नोचेद् यावच्चन्द्रार्कमेदिनी ॥ २५

अस्मद् वशे क्षये क्षीणे यस्तु राजा भविष्यति ।
तस्य पादाब्जलग्नोऽहं पालनीय सदा[2] त्विदम् ॥ २६

भक्तिनम्रेण विज्ञप्तमनागत महीभृताम्[3] ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ २७

इत्येवमादीन् बहुश प्रार्थयामास पार्थिवान् ।
नियोगाद् देवदेवस्य विदितात्मा रघूत्तम ॥ २८

सम्पादितमिद चार्थं[4] क्रियासिद्धिरनुत्तमा ।
अथ देवा सगन्धर्वा साधु साध्वीत्यपूजयन् ॥ २९

पुष्पवर्षेण रामस्य मूर्द्धिन भ्रातृ समावृते ।
सुरदुन्दुभयोर्नेदुर्ननृतुश्चाप्सरोगणा ॥ ३०

सर्वामरपति प्राह तुष्टो देवो महेश्वर ।
राम राम महाबाहो श्रृणु मे परम वच ॥ ३१

यज्ञेनानेन दानेन प्रासादेनार्च्चनेन च ।
तुष्टोऽस्मि तव राजेन्द्र ! वृणीष्व वरमुत्तमम् ॥ ३२

श्रुत्वा त्वन्तर्हिता वाणीमानन्दोऽभूत्सराघवः ।
ततोऽपश्यद् विरूपाक्ष सर्वैर्देवगणैर्वृतम् ॥ ३३

प्रणम्य शिरसा भक्त्या शशाङ्ककृतशेखरम् ।
उवाचेद वचो रामो नलिनीदललोचन ॥ ३४

यदि प्रसन्नो भगवान् यद्यप्यनुग्रहतास्ति मे ।
सान्निध्य चास्य लिङ्गस्य भवान् भवितुमर्हति ॥ ३५

यज्ञाङ्गसम्भव कुण्ड तीर्थभूतमिहास्तु वै ।
प्रसादात् तव देवेश शाश्वती प्रीतिरस्तु मे ॥ ३६

---

1. V—कृतम् ।

2 V—मम ।

3 $A_2$, C—अनागमत महीभृताम् , V—अनागत महाभुजाम ।

4 $A_2$, $B_1$, C—चार्यं ।

एवमस्त्विति ते देवा नीलकण्ठाश्रया ब्रुवन् ।
सहोवाच हर साक्षाद् राम कमललोचनम् ॥ ३७

सदा सन्निहित चात्र भवेय रघुनन्दन ! ।
अष्टायतनमुख्योऽय क्षेत्रे चास्मिन् महाह्लद ॥ ३८

सर्वतीर्थवर श्रीमान पावन सर्वदेहिनाम् ।
रामेश्वर इति ख्यातस्त्रिषु लोके भविष्यति ॥ ३९

सदा सिद्धमिद तीर्थं यत्र सन्निहितो ह्यहम् ।
आदास्यामि स्वय पूजा सदा भक्तिमता नृणाम् ॥ ४०

विशेष तु निबोधेद देशकालमतः परम् ।
चैत्रे मासि सिते पक्षे त्वष्टम्या रघुनन्दन ॥ ४१

स्थास्येऽह सर्वभावेन स्कन्दोमानन्दिकै सह ।
समाग सुराणा हि यक्षविद्याधरोरगैः ॥ ४२

स्नानदानादिक शस्त शिवलिङ्गार्च्चन परम् ।
जाप्य होम तथा श्राद्धमक्षय परिकीर्त्तितम् ॥ ४३

स्नानमन्त्रं निबोधेद वीजन्यास-समन्वितम् ।
कर्मपाशानुद शस्त स्वर्गद सुखमुत्तमम् ॥ ४४

उपविश्य जलान्ते च सपवित्र उदङ्मुख ।
सुशान्त सुसमादिष्ट प्राणायाम-कृतक्रियः ॥ ४५

हृदयेनार्च्चयेद देवमर्द्धनारीश्वर हरम् ।
ललाटे तु न्यसेच्चन्द्र क्रोडे बिन्दुसमन्वितम् ॥ ४६

जानुमात्र जले विश्य मज्जयेत् सुसमाहित ।
शिवसूक्तेन मन्त्रेण सप्तवारान् विचक्षणः ॥ ४७

सोमवीज पिवेत्तोयं द्वितीय शक्तिमेव च ।
तृतीय शिववीजेन देवार्च्चनमत परम् ॥ ४८

अनेन मन्त्रयोगेन तीर्थस्नान समाचरेत् ।
ऋषभस्योत्तरे शृङ्गे वरुण वहसि दक्षिणे ॥ ४९

अशोकझरनामा त्व पाप हर नमोऽस्तु ते ।
प्रार्थयेच्चैव रामेशमनेन मनुना हर ॥ ५०

ॐ नमस्ते परमेशाय शाश्वताय कपर्द्दिने ।
प्रयच्छ सुकृत स्फीत रामेश्वर नमोऽस्तु ते ॥ ५१

भुक्तिमुक्तिप्रदातासि सकलेच्छा विभूतय ।
पूरयन् वासुदेवेश देवदेव महेश्वर ॥ ५२

एव य कुरुते सम्यक् महायज्ञफल लभेत् ।
भोजनादीनि यज्ञाना स्वयमत्स्याम्यह सदा ॥ ५३

ददामि विपुलामृद्धि सिद्धि चापि महोत्तमाम् ।
क्षेममारोग्यमैश्वर्यां सम्यक् स्वर्गमनुत्तमम् ॥ ५४

सर्वकामफलप्राप्ति-मेतत्स्वस्त्ययन परम् ।
इत्युक्त्वान्तर्दधे देवो महादेव सुरै सह ॥ ५५

श्रुत्वेद वाक्यमतुल रामो राजीवलोचन ।
कृत्वा बिन्दुसरो दीर्घमयोध्या प्रययौ शनै ॥ ५६

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया चतुर्थेऽशे रामेश्वरानुकीर्त्तन नाम त्रिपञ्चाशत् अध्याय [1] ॥

---

1 $B_1$, $B_2$, V— चतुर्थेऽशे रामेश्वरानुकीर्त्तन नाम सप्तमोऽध्याय ।

# चतुःपञ्चाशत् अध्यायः

## श्रीव्यास उवाच

प्रत्याख्यानमिमं श्रुत्वा मुनयः सर्वं एव ते।
धन्यं वचो मनः प्रीतो धौतात्मानो विकल्मषा ॥ १

असितः प्राह तन्मध्ये भूतानुग्रहकः परम्।
सनत्कुमारं धर्मज्ञं सर्वशास्त्रभृतां वरम् ॥ २

भूयः कथय मे तात! यद्यस्ति इह किंचन।
तस्मिन् क्षेत्रवरे पुण्ये शसाष्टायतनं हि मे ॥ ३

अनुक्रमविधानोक्तं श्रोतुमिच्छामि मानव।
ब्रूहि सर्वानशेषेण पापेभ्यो नः समुद्धर ॥ ४

असितस्य वचः श्रुत्वा समाजे जयतां वरः।
सनत्कुमारः प्राहेदं शृणुष्व मुनिपुङ्गव! ॥ ५

श्रुत्वेदं सा तदा देवी ब्रूहीति पुनरब्रवीत्।
जगादेदं परं पुण्यं ब्रह्मा लोकपितामहः ॥ ६

## ब्रह्मोवाच

मासि मार्गशिरे प्राप्ते यम-संयम-तत्परे।
प्रथमाष्टमीति विख्याता प्रशस्ता पापनाशिनी ॥ ७

तस्मिन्ने[1]काम्रके क्षेत्रे भौमस्वर्गे निरामये।
कल्य[2]मुत्थाय सुस्नाते यथा सन्ध्यामुपासते ॥ ८

जप्त्वा चाष्टशतं मन्त्रं शिवसूक्तं षडक्षरम्।
प्रदक्षिणं नमस्कृत्वा कृत्तिवासं क्रियापरः ॥ ९

प्रार्थयेद् देवमीशानं अनन्तं लोकसाक्षिणम्।
लिङ्गस्य दक्षिणे भूत्वा इमं मन्त्रमुदीरयेत् ॥ १०

---

1. V—तस्या।
2. $A_2$, C, V—कल्प।

ॐ नम शिवाय शान्ताय सर्वव्यापिन् महेश्वर।
स्नान करोमि देवेश प्रसीद परमेश्वर । ॥ ११

अष्टायतन-पुण्य वै समग्र तव शासनात्।
अविघ्नमस्तु मे नाथ । सर्वकाममनुत्तमम् ॥ १२

इत्येव देवभवनात् निर्यायाद् यम-सयमी।
जितेन्द्रियो जितक्रोध सत्यवान् नान्यमानस ॥ १३

सतो बिन्दूद्भव दिव्यमासाद्य समुपस्पृशेत्।
नाभिमात्रे विशेत् तोये सपवित्र उदङ्मुखः ॥ १४

मनसा चिन्तयेद् देव शिव शक्ति समन्वितम्।
अर्द्धचन्द्रसुमुर्द्धानि निखिल कवचेन च ॥ १५

बिन्दुमाला-स्वरूपेण प्रफुल्लसित पङ्कजे।
विन्यसेद् हृदये सौम्ये पाणिना तोयमुद्धरेत् ॥ १६

शिवसूक्त पिवेत् त्रीणि स्नायात् च तदनन्तरम्।
देवान् पितृन् च सतर्प्य भूयो देवगृह व्रजेत् ॥ १७

प्रदक्षिणनमस्कार कुर्याद्[1] देव स्वयभुवम्।
व्रजेत् सुमनसा तस्याद् ह्रद पापविनाशनम् ॥ १८

कृत्तिवास पुन पूजा द्विगुण च प्रदक्षिणम्।
गङ्गायमुनयो स्नान शिवस्य त्रि प्रदक्षिणम् ॥ १९

कोटितीर्थं ततो भूयो ब्रह्मेश्वर अत परम्।
मेघेश्वर पुनर्देव लाबुतीर्थं अत परम् ॥ २०

रामेश्वरोऽष्टम प्रोक्त कृत्तिवासोऽर्च्चन शुभम्।
अष्टमूर्त्तिनमस्कारमष्टवारप्रदक्षिणम् ॥ २१

एव य कुरुते सम्यक् यथेष्टफलमाप्नुयात्।
ॐ सान्निध्य भवता पूर्वमादिष्ट शूलपाणिना ॥ २२

प्रतिपादय चास्माक निमज्जेऽह ह्रदे तव।
इत्युच्चार्य जल गत्वा उपस्पृश्य[2] यथाविधि ॥ २३

---

1 $B_2$, V—प्रदक्षिणैकनमस्कार कृत्वा।

2, $A_2$, C—उपविश्य।

ऊरुमात्र विशेद् अप्सु सपवित्र उदङ्मुख ।
हृदि न्यस्य विरूपाक्ष ततो मन्त्रमनुस्मरेत् ॥ २४

ॐ जगद्वीज अनाद्यन्त अशरीर शरीरधृक् ।
प्रसीद देव ईशान स्थिरा भक्तिरिहास्तु मे ॥ २५

मज्जयेत् त्रीणि वाराणि पिवेत् तोय षडक्षरम् ।
मित्रावरुणयो॰ पूजामष्टमूर्त्तेरवेक्षणम् ॥ २६

प्रदक्षिणाभ्या भूतेश परम शिवमव्ययम् ।
द्वाभ्या च प्रणिपाताभ्या पूजा च द्विगुणा शिवम् ॥ २७

नमस्कृत्य व्रजेद भूयो जाह्नवी यमुनातटे ।
प्रणम्य शिवलिङ्ग तु नाभिमात्रे जले विशेत् ॥ २८

ॐ गङ्गाधर नमस्तुभ्य गङ्गायमुनासङ्गमे ।
स्नामीतीह तमत्यर्थ ब्रह्माविष्णुशिवात्मकम् ॥ २९

त्रि प्रदक्षिणक शस्त पूर्ववद वन्दन शिवम् ।
दण्डप्रणाम त्रिगुण पूजा च त्रिगुणा तथा ॥ ३०

देवस्य सदनात् भूय कोटितीर्थं व्रजेद् बुध ।
प्रविश्याप्लुत्य सलिल[1] इम मन्त्रमनुस्मरेत् ॥ ३१

ॐ स्नात्वा जगति वै कृत्स्ने यत्पुण्य समुदाहृतम् ।
तदिहाप्यक्षय पुण्य ममास्तु त्रिपुरान्तक ! ॥ ३२

स्नान-दानार्च्चन स्तोत्र देव कोटीश्वर तथा ।
कुर्यात् प्रीतमना देवि ! ततो मन्त्रमिद पठेत् ॥ ३३

ॐ नमस्ते परमार्थाय सर्वभूतहिताय च ।
कोटिभिर्दैवतै सार्द्ध कार्य च तव दर्शनात् ॥ ३४

ततश्चतस्र पूजास्तु चतुर्देव प्रदक्षिणम् ।
दण्डप्रणामाश्चतुरस्त कुर्यात्कृत्तिवाससम् ॥ ३५

निवेद्य च निजा पूजा कृत्तिवासोऽन्तिक व्रजेत् ।
ब्रह्मेश्वर महाप्राज्ञस्त्वयैव कृतमानस[2] ॥ ३६

1 C—प्रविश्याप्लुत-सलिल ।

2 V—स्वप्नैककृत-मानस, ।

प्रदक्षिण नमस्कृत्य भक्त्या तद्गतमानसः।
प्रविश्य सलिले तत्र इम मन्त्रमनुस्मरेत ॥ ३७
ॐ नमस्ते परमार्थाय प्रजाना पतये नम ।
यज्ञाङ्गसम्भवे कुण्डे मज्जयेय तवाज्ञया ॥ ३८
अथ तीरे समालिख्य शक्तिशूलायुधाविमौ।
नमस्कृत्य निवेद्य स्व मज्जयेत्पुनरुत्तमे ॥ ३९
उदक शिवमुद्दिश्य दद्यादष्ट उदङ्मुख ।
पञ्च प्रदक्षिण पूजा वन्दन कृत्तिवाससे ॥ ४०

ततो मेघेश्वर गत्वा वन्दन भूतिमिच्छुकः।
उपविश्य जलस्यान्ते इम मन्त्रमुदीरयेत् ॥ ४१
ॐ नमस्ते शितिकण्ठाय पर्जन्यपतये नम ।
प्रसीद सुमुखो नाथ मज्जये-ह तवाम्भसि[1] ॥ ४२

मार्जन तपण सन्ध्या कृत्वाभ्यर्च्च्य पुनर्व्रजेत् ।
षट् प्रदक्षिण विज्ञेय पूर्ववद् देववन्दनम् ॥ ४३

ततश्च लावुक तीर्थं गत्वा देवस्य वन्दनम् ।
उपविश्य जलस्यान्ते इम मन्त्रमुदीरयेत् ॥ ४४
ॐ नमस्ते ध्यानयोगाय शाश्वताय कपर्द्दिने।
मनोरथफलावाप्ति पूरयस्व महेश्वर ! ॥ ४५

इत्युक्त्वा मज्जयेत्तोये पञ्चवारान् प्रयत्नत ।
वन्दयित्वा व्रजेन्मौनी कृत्तिवास क्रियापर ॥ ४६

सप्त प्रदक्षिण कुर्यात्पूजा तद्वदुदाहृता।
सप्त दण्डप्रणाम च सुधी कुर्यात्प्रयत्नतः ॥ ४७

रामेश्वर ततो गत्वा कुर्यात्स्नान विधानत ।
ऊरुमात्रे जले स्थित्वा इम मन्त्रमुदीरयेत् ॥ ४८
ॐ ऋषभस्योत्तरे शृङ्गे वरुण वहसि दक्षिणे।
अशोकभरनामा त्व पाप हर नमोऽस्तु ते ॥ ४९

देवान् पितॄन् मनुष्याश्च अन्याश्चापि जलार्थिन ।
तर्पयित्वा प्रयत्नेन देवार्च्चनमत. परम् ॥ ५०

1 C—मज्जयेत्समुदीक्ष्यसे ।

प्रदक्षिण शुभ चाष्टौ स्नापयेल्लिङ्गमुत्तमम्[1]।
पुष्पैर्धूपैस्तथा गन्धैर्नैवेद्यैश्चारुभूषणैः॥ ५१

भक्त्या शक्त्याच्चर्चन कृत्वा प्रार्थयेत् तदनन्तरम्।
ॐ नमस्ते परमार्थाय सिद्धिदाय सुमेधसे॥ ५२

रजस्तमो विशुद्धाय सत्त्व सत्त्ववता वर।
प्रसीद भगवान् भर्ग सप्तलोक-पितामह॥ ५३

हरस्वाशेष दुरित प्रयच्छ सुकृत पदम्।
अष्टाङ्ग प्रणिपातेन क्षामयित्वा व्रजेच्छुचि॥ ५४

वन्दयेदनुपूर्वेण अष्टमूर्त्तिमनन्तरम्।
देवी पादहरा चादौ नन्दिन च गणेश्वरम्॥ ५५

अष्टौ मूर्त्ति समासेन कृत्तिवास प्रयत्नत।
ॐ नमस्ते परमेशाय शाश्वतायाव्ययाय[2] च॥ ५६

प्रभु प्रभवता नाथ ज्योतिषा पतये नम।
कृतोऽष्टतीर्थो भगवन्निदेशाद् भवतो ह्यहम्॥ ५७

प्रयच्छ प्रवरान् कामान् कृत्तिवास जगद्गुरो।
रथ नाग हय चापि तथान्य यानमेव च॥ ५८

निवेद्य देवमीशान भक्तितः शक्तितो बुध।
स गच्छति पर स्थान कुर्याद् य प्रयत क्रियाम्॥ ५९

सम्यक् फलमभिप्रेत्य गाश्च देया सवत्सला।
तपोधनकलाश्चैव नमस्कार प्रशस्यते॥ ६०

अष्टमूर्त्ति प्रयत्नेन अष्टाङ्गेन ततोऽब्रवीत्।
ॐ नम शिवाय हरये हरस्वाशेषकल्मषम्॥ ६१

प्रयच्छ सुकृत देव! अष्टायतन भाषितम्।
एव य प्रथमाष्टम्या कुर्याद् वै पुरुषोत्तम॥ ६२

अश्वमेधसहस्राणा फल प्राप्नोत्यसशयम्।
अपुत्र. पुत्रमाप्नोति कन्या प्राप्नोति सत्पतिम्॥ ६३

---

1 V—स्थापयेत् लिङ्गमुत्तमम्।

2. $A_2$, V—शाश्वतायादिकर्त्तृक.।

विद्यार्थी लभते विद्या धनेप्सुर्धनसम्पदम् ।
वैश्य सौभाग्यसामर्थ्यौं राजा च विजय लभेत्[1] ॥ ६४
यान् यान् कामान् अभिध्यायेत् पूरयेदखिलान् विभु ।
स्वर्ग्यमारोग्यमैश्वर्यं धन पापापनोदनम् ।
सद्भिराचरित पुण्य शिवाराधनमुत्तमम ॥ ६५

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्या सहिताया चतुर्थेऽशेऽष्टायतन-विधिर्नाम चतु पञ्चाशत् अध्याय[2] ॥

---

1 V—विजया भवत् ।

2 $B_1$, $B_2$, V—अष्टायतनविधिर्नामाऽष्टमोऽध्याय ॥

# पञ्चपञ्चाशत् अध्यायः

## श्री व्यास उवाच[1]

असित शान्तिपूर्वेण धर्मेण विनयेन च।
पप्रच्छ पुनरेवेद क्षत्रस्यास्य महात्मन ॥ १

चरित देवदेवस्य मूर्त्तियुक्त भवस्य च।
यथावदनुपूर्वेण अष्टौ मूर्त्ति समासत ॥ २

प्रचक्ष्व सुमुखो नाथ! न हि तृप्यामि सर्वथा।
सनत्कुमारस्तच्छ्रुत्वा चिर ध्यात्वा उवाच ह ॥ ३

व्यापक सर्वतो व्यापी योऽनन्तस्त्वपरिच्छद।
विश्वकृत् विश्वभृत् स्रष्टा गोप्ता पालयिता विभु ॥ ४

विश्वमूर्त्तिधरस्येह स्वर्णकूटाद्रि-रोधसि।
तस्य मूर्त्तिरतो विश्व निर्भिद्य समवस्थिता ॥ ५

यच्चक्षुग्रहण किंचिद् वाचा विषयगोचरे।
तत् सर्वं तन्मय विद्धि हेया हेयौ गुणागुणै ॥ ६

नातः परतर लोके किंचिदस्ति पुराश्रुति।
तथापि मनस शान्तिस्तेनाप्युक्ता[2] स्वयभुवा ॥ ७

विभिन्नरचना लोके लौकिकाश्च प्रवर्त्तयन्।
धर्मस्थानान्यनेकानि पुण्यान्यायतनानि च ॥ ८

परमेष्टी कृती दक्षो दर्शनान्यागमानि च।
छन्दोपनिषदाङ्गानि वीक्षमाणोऽब्रवीदिदम् ॥ ९

## ब्रह्मोवाच

स्वर्णकूटात् पर क्षेत्र न भूत न भविष्यति।
बिन्दूद्भवसम तीर्थं न सरो विद्यते क्वचित् ॥ १०

---

1. V—ब्रह्मोवाच ।—व्यास उवाच ।
2. $A_2$, $B_1$, C—शान्तिस्तेष्वप्युक्ता ।

क्षेत्रपालो यत्र विष्णुस्त्रिदशैरपि सस्थित ।
विश्वबिन्दुश्रवा यत्र कृत्तिवास सुरार्च्चित ॥ ११

एकोनकोटि विख्यातो मूर्त्तिभिः राजतेऽष्टभि ।
निर्गुणो गुणवान साक्षात् जज्ञेऽसौ स्वर्णपर्वते ।। १२

मुख्यो देव· स्वय मूर्त्ति देवी देवपराश्रिता ।
गणचण्डस्तृतीयोऽय कार्त्तिकेयो विनायक ॥ १३

वृक्ष कल्पतरुश्चैव सावित्री अष्टम स्मृता ।
अष्टावेता मया ख्याता मूर्त्तयो भुवनार्च्चिता ॥ १४

आराध्या सतत भक्त्या स्मर्त्तव्या सुरसत्तमा ।
अष्टावेता लोकपाला शिवनामाश्रिता हि ते ॥ १५

वसवोऽष्टौ दिशश्चाष्टौ अष्टकाश्चाष्ट एव च ।
वन्दिते सुरसिद्धैश्च मुनिभिर्मनुजाधिपै ॥ १६

अनेकसिद्धगुह्यैश्च[1] जुष्टो क्षेत्रे त्वनुत्तमे ।
आद्यादाद्यातरा मूर्त्ति पुराणा परमाव्यया ॥ १७

अनेककल्पपर्यन्तमनादिक्रमसस्थिता ।
कृत्तिवासा जगदवास एकान्ते परमे स्थित ॥ १८

अब्दलक्षत्रय यावद् दुर्लक्ष्य स सुरासुरै ।
अतीते दशलक्षे च ब्रह्माण स्वयमेव हि ॥ १९

सतत प्रवर क्षेत्रे स्वय रुद्रेण भाषितम् ।
कृत त्रेत्रा द्वयोर्मध्ये द्वितीया मूर्त्तिरुत्तमा ॥ २०

अत्र गोपालिनी भूत्वा सक्षेपार्थं समाश्रिता ।
हत्वा तौ दानवौ ताभ्या चकार ह्रदमुत्तमम् ॥ २१

सर्वपापहरावेतौ नाम्ना देवीपदेति च ।
तत प्रभृति सा देवी गोपालिनी प्रकथ्यते ॥ २२

पुष्कराक्षी धरापाद्या सर्वकामफलप्रदा ।
गोपयेन्निलिखिलान् जन्तून् पालयेन्मातृवत् सदा ॥ २३

तस्माद् गोपालिनी नाम्ना सुरै सिद्धैर्निगद्यते ।
ता दृष्ट्वा शङ्करः साक्षात् स्वय गोपालत्वमागत ॥ २४

---

1. $A_2$, C, V—अनेकसिद्धगुप्तैश्च ।

अर्च्चित प्रीतिमभ्येति ददात्यभिमत फलम् ।
शक्तिमूर्ति स्वरूपेण द्वितीया समुदाहृता ॥ २५

प्रीति सजनन तस्या मन्त्रमेतच्छिवोदितम् ।
अर्च्चयित्वा पठेद् यस्तु स लभेत् सर्वकामिकम् ॥ २६

ॐ विश्वधात्रि ! जगन्मात् र्गोपालिनि ! जगत्रयम् ।
सिद्धविद्याधरैर्जुष्टे वरदे कामरूपिणि ! ॥ २७

प्रसीद सुरशत्रुघ्ने ! भक्तानामभयप्रदे ! ।
सर्वसिद्धिप्रदे ! देवि ! गोपालिनि ! नमोऽस्तु ते ॥ २८

अनेन मन्त्रयोगेन भक्तिनम्रेण पूजयेत् ।
अष्टाङ्गप्रणिपातेन गोपालिन्यै नमो नम ॥ २९

देव्या अनुसमायातो गणचण्ड सुरार्च्चित ।
शिवदेहात् समुद्भूत शिवैकगतमानस ॥ ३०

येन[1] देवासुरे युद्धे विक्रमोत्कटकर्मवान् ।
निर्देशाद् देवदेवस्य तेनासौ गणनायक ॥ ३१

युयुधे स महात्मा च एकोऽपि बहुधा मृधे ।
अनेकशस्त्रपाते च भैरवे लोमहर्षणे ॥ ३२

रथानीके गजानीके हृरिवन्दे च पत्तिभि ।
दैत्यदानवरक्षासि अभिन्दत तथा सुरान् ॥ ३३

तै सर्वेश्च समग्रैश्च शस्त्रवर्षैरनोपमै ।
व्यधमच्चरणे चैको घोर मासीद् व्यतिक्रम ॥ ३४

निर्जित्य युधि वीर्येण एकस्तेजोमता वभौ ।
पूजित. सन्निवासैश्च रुद्रो रुद्राङ्गसम्भवै ॥ ३५

दुनिरीक्षतमो जातश्चण्डो मार्त्तण्डविक्रम ।
त च दृष्ट्वा सुरगणा साध्वसोपहृतास्तदा ॥ ३६

स्तुति नानाविधै. स्तात्रैश्चण्डरुद्र दिवौकस. ।
गणना प्रवरश्चण्डो देवैर्निगदित पुरा ॥ ३७

सोऽय लिङ्गवर श्रीमान् कृत्तिवासान्तिके सदा ।
मूर्त्तिमुद्वहतस्तस्य तृतीयस्त्रिदशार्च्चित ॥ ३८

---

1, V—यस्तु ।

अर्च्चित प्रीतिमभ्येति ददात्यभिमत फलम् ।
ॐ नमस्ते चण्डरुद्राय रुद्रेशायाजिताय च ॥ ३९

देवानामतिभीताना त्रायक परमेश्वर ।
त्राहि मा त्व विरूपाक्ष इहलोके परत्र च ॥ ४०

तदस्तु निखिल पुण्य चण्डरुद्र नमोऽस्तु ते ।
अनेन मन्त्रमुख्येन अर्च्चयेत् त स्वशक्तित ॥ ४१

ततश्चान्य प्रवक्ष्येऽह मूर्त्तिभेद शिवस्य च ।
कृत्तिकातनय श्रीमान् सुरसेनापति॰ प्रभु ॥ ४२

अभ्यासे देवदेवस्य कृत्तिवासस्य चोत्तरे ।
आस्ते मूर्त्तियुत साक्षात् क्रौञ्चहन्ता षडानन ॥ ४३

देवोयान्-यशोदीप्त शक्तिपाणिर्हुताशन ।
ॐ कुमारः शाङ्करो वीरो हैमवत्या सुतो विभु ॥ ४४

षण्मुख सुरशत्रुघ्नो गुह सेनावितर्दिन ।
गोप्ता गणपतिश्चण्ड सुब्रह्मण्य शिवात्मज॰ ॥ ४५

स्कन्द सर्वसहो वीर सुधन्वा समितिञ्जयः ।
एतन्नामानुकीर्त्तन स्वामिपूजा स्वशक्तित ॥ ४६

गन्धै पुष्पैस्तथा धूपैर्दीपैर्नैवेद्य-वाससै ।
अष्टाङ्गप्रणिपातेन क्षामयित्वा ततो व्रजेत् ॥ ४७

प्रत्यावृत्य पुनस्त च देवस्य पुरत स्थितम् ।
विनायकमविघ्नेश पूजयेत् सुसमाहित ॥ ४८

गन्धै पुष्पै स्रद्दीपैश्च मोदकैर्लड्डुकादिभि ।
भक्तित शक्ततोऽभ्यर्च्च्य मन्त्रमेतमुदीरयेत् ॥ ४९

ॐ नमस्ते सिद्धिदाशेषकर्मसिद्धिप्रवर्त्तक ।
अविघ्न सर्वदेवेश भुक्तिमुक्तिफलप्रद ॥ ५०

प्रभविष्णो नमस्तुभ्य माया-विघ्नोपशान्तिद ।
प्रसीद मदलोलाक्ष भृङ्गाकुलकपोलक ॥ ५१

विनायक वृषाधीर्श हृद्यमेध्यैरलकृतैः ।
पञ्चोपचारैस्तु हितै सपूज्येवमुदीरयेत् ॥ ५२

ॐ नमस्ते पृथुलाङ्गाय हेमकुन्देन्दु निर्मल।
विश्वस्याधार! अनघ! विश्वभव्य! भवत्प्रभो॥ ५३

हरयान नमस्तुभ्य वरेण्य वरदोऽसि च।
अद्वितीय अनाधृष्य यज्ञलोम (होम)-वसुप्रद॥ ५४

रुद्रमूर्त्ते प्रजानाथ प्रसीद परमेश्वर।
सर्वतीर्थमयोऽण्डस्ते पातकान्मा समुद्धर॥ ५५

वृषभेन्द्र नमस्कृत्वा व्रजेत् कल्पतरु बुध।
प्रदक्षिणत्रय कृत्वा नमस्कृत्य पुर सर॥ ५६

अभिषिच्य शितैस्तोयैर्गड्डुकाष्टेन पादपम्।
शतेनाथ सहस्रेण आयुतेन स्वशक्तित॥ ५७

गन्धै पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकैरपि।
अष्टाङ्ग प्रणिपातेन इम मन्त्रमुदीरयेत्॥ ५८

ॐ महामृतरसोद्भूत ब्रह्माविष्णुशिवात्मक।
अनादिमध्यरहित महाप्रलयपरिणत॥ ५९

त्रयी मूर्त्तिस्त्रिधा भिन्न त्रिगुणात्मक सर्वद।
सर्वदेवामयाचिन्त्य कल्पवृक्ष नमोऽस्तु ते॥ ६०

सर्वधर्ममयो मूल स्कन्धार्जव[1] (?) तपोधन।
शाखासाख्य स्मृति पत्र पुराणमुपबृंहितम्॥ ६१

कृते उग्रप्रभो[2] नाम्ना त्रेताया विश्वपूजित।
द्वापरे चामृतात्मा च कलौ कल्पतरु स्मृत॥ ६२

परा योजनमुच्छ्रेयो व्यानम्रकनकच्छद।
त्रेताया पादहीनश्च द्वापरे चार्द्धसस्थित॥ ६३

जघन्ये च जघन्योऽभूत्स्वेच्छया भासते द्रुमः।
वर्द्धमाने प्रवर्द्धेत ह्रासे ह्रसति कर्मणा॥ ६४

---

1. V—स्कन्धाजिव।
2. $B_2$, V—उग्रभवो।

स्वयम्भूर्भगवान् साक्षात् पुरा पादपता गत. ।
युगानुरूपतश्चेष्टा विदधाति यथेच्छया ।। ६५

अत पर निवोधेमा मूर्त्ति देवस्य चोत्तमाम् ।
त्रैलोक्यजननी साक्षात् सावित्री यत्र वर्त्तते ।। ६६

सर्वपापहरा सौम्या भूतानुग्रहकारिणी ।
सिद्धिदा सुरसिद्धाना पाविनी लोकभाविनी ।। ६७

अभ्यासे देवदेवस्य नैऋत दिशमास्थिता ।
निवसेच्छिवसकल्पा दुष्टमात्राघहारिणी[1] ।। ६८

स्मरणात् कीर्त्तनात् तस्या विलय यान्ति कल्मषा ।
महारोगग्रहा दुष्टा रेवती बृद्धरेवती ।। ६९

विलय यान्ति ते सर्वे तोयस्थ लवणं यथा ।
वन्द्या सा सतत पूज्या वरदा भक्तवत्सला ।। ७०

मन्त्रेणानेन विप्रेन्द्र ! योऽर्च्चयेत् सुसमाहित ।
न तस्य दुर्लभ किचित् त्रिषु लोकेषु विद्यते ।। ७१

ॐ गायत्री प्रभवत्री त्व सवित्र्यसि सरस्वती ।
देवमात[2]र्जगद्धात्रि ! त्र्यक्षस्य हृदयगमे ।। ७२

ब्रह्मोवाच

इत्येव कथित सम्यक् चाष्टमूर्त्ति समाहित[3] ।
दुर्लभ भुवि विख्याता शिववक्ताद् विनिसृतम् ।। ७३

विभूति चात्मन प्रीति विभर्त्ति परमेश्वर ।
नात[4] परतर धर्ममिहास्ते सुखसाधनम् ।। ७४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया चतुर्थेऽशे अष्टमूर्त्तिअर्च्चनविधिर्नाम पञ्चपञ्चाशत् अध्याय[5] ।।

---

1 $B_2$, V—अघनाशिनी ।

2 $B_2$, V—वेदमात ।

3 $B_2$, V—समासत ।

4 $B_2$, V—नात्र ।

5 $B_1$, $B_2$, V—चतुर्थेऽशे अष्टमूर्त्ति अर्च्चनविधिर्नाम नवमोऽध्याय. ।।

# षट् पञ्चाशत् अध्यायः

## श्रीसनत्कुमार उवाच

पितामहेनैवमुक्ता श्रीमदेकाम्रकस्य तु ।
गुणा मूर्त्तिधरस्यैव बहव कृत्तिवासस ।। १

शुश्रुवुर्मुनय सर्वे सर्वदेवगणै सह ।
पितर पन्नगाः यक्षाः पर प्रीतिमुपागताः ।। २

पार्वती परया भक्त्या पुनराह पितामहम् ।
श्रोतुमिच्छामि यद्यस्ति कथ्यभाव प्रवक्ष्व मे ।। ३

ईशानचरित पुण्य भूताना हितकामया ।
तर्हि तृप्यामि हे तात ! शृण्वती कारण विभो ।। ४

तामुवाच समाधिस्थो ब्रह्मार्थेति पितामहः ।
मूर्त्तयोऽष्टौ शिवस्यैता कथिता गजगामिनि ! ।। ५

शिव सद्भाव-भावज्ञ आत्ममूर्त्तौ व्यवस्थित ।
पूजित प्रीतिमभ्येत्य[1] ददात्यभिमत फलम् ।। ६

बिन्दुसरजले स्नानमष्टमूर्त्यर्च्चनं क्रमात् ।
विशिष्टं सर्वयज्ञाना कृत्तिवासोऽर्च्चनं तथा ।। ७

सुतप्ततपसो ये च तेषां या गतिरुत्तमा ।
सप्राप्नुवत्यसदिग्ध कृत्तिवासोऽर्च्चने तथा[2] ।। ८

स्वर्णकूटो गिरिश्रेष्ठ सुरश्रेष्ठस्त्रिलोचन ।
एकोनकोटिलिङ्गेशो दर्शन-स्पर्शनेन च ।। ९

अष्टायतनमुख्येन क्षेत्रपर्यटनेन च ।
ददात्यतुल सम्पत्ति या सुरैरपि दुर्लभाम् ।। १०

हेमकूटाद्रिशृङ्गस्थ सर्वदेवनमस्कृतम् ।
ये भजन्ति विरूपाक्ष न ते यान्ति पराभवम ।। ११

---

1 V—प्रीतिमभ्येति ।

2. $A_2$, V—यथा ।

श्लाघ्य जन्म च तस्यैव सफल तस्य जीवनम् ।
यश्च एकाम्रके तस्मिन् कृत्तिवासोऽर्च्चने रत ॥ १२

प्रदक्षिण पर्यटन य करोति समाहित ।
य करोति महापाप क्षालयेत् तत् न सशय ॥ १३

अस्मिन् क्षेत्रवरे रम्ये यै कृत त्रि प्रदक्षिणम् ।
त्रिकोटिजन्मजात् पापाद् दिनेनैकेन मुच्यते ॥ १४

सव्यापसव्य येनाद्रि क्रियते च प्रदक्षिणम् ।
तत् फल समवाप्नोति प्रवदन्ति मनीषिण ॥ १५

सुकृत येऽभिवाच्छन्ति दुष्कृतस्यापनोदनम् ।
ते व्रजन्ति शिवक्षेत्र यत्र बिन्दूद्भव सर ॥ १६

कृत्तिवासा सुरश्रेष्ठो ह्यष्टायतने मूर्त्तिभृत् ।
ददात्यभिमतान् कामान् लोकद्वयसमुन्नतान् ॥ १७

ब्रह्माविष्णुसशक्राद्यैमुनिभिर्ब्रह्मवादिभि ।
अर्च्चितो भावशुद्धेन कृत्तिवासा जगद्गुरु ॥ १८

प्राप्ता चोत्तमससिद्धि-र्लोकपालै सचारणै ।
एवमादिगुणास्तस्य क शक्त कथितु गिरा ॥ १९

परमार्थस्वरूप च सर्वै स्थावरजङ्गमै ।
सेव्यमेकाम्रक श्रीमत् कृत्तिवासो निकेतनम् ॥ २०

अत्र क्षेत्रे पुरावृत्त शृणुष्व गदतो मम ।
सोमजस्य[1] सुत श्रीमान् नाम्ना चाम्रातक स्मृत ॥ २१

सोमयाजी सदा दान्त सत्यार्जव-दयान्वित ।
वेदवेदाङ्गकुशलो नानाशास्त्रविशारद ॥ २२

ससारभयभीतस्तु हर शरणमागत ।
शुश्राव रुचिरा ख्याति तस्य श्रीकृत्तिवासस ॥ २३

हेमकूटस्य माहात्म्य क्षेत्रस्यैकाम्रकस्य वै ।
लिङ्गकोटिमग्रस्याप्यष्टायतनमेव च ॥ २४

श्रुत्वा विस्तरशो विप्र शिवभक्ति-समन्वित ।
वैदर्भनगरात् प्राज्ञ आजगाम शिवालयम् ॥ २५

---

1 $B_2$, सोमकस्य ।

साग्निक सह पत्न्या च सशिष्य सशितव्रत ।
न्यस्य भार सुते सर्वं किंचिदादाय प्रस्थित ।। २६

दिनक्रमेण सप्राप्त शिवस्मरण-तत्पर ।
ददर्श सुमहत् क्षेत्र योजनैक प्रमाणतः ।। २७

कोटिलिङ्गमयी भूमिं स्वर्णकूट हराश्रमम् ।
तद्वत् छाया तरो श्लक्ष्णा प्रासादशतसकुलाम् ।। २८

बिन्दूद्भवादि पुण्याप्सु मूर्त्तिभेदान् शिवस्य च ।
स्नात्वा ददर्श मेधावी प्रलपन् शिवमव्ययम् ।। २९

कृत्तिवासाददूरेण किंचिदाग्नेयमाश्रिते ।
धेन्वन्तरसहस्रेण शिवलिङ्ग स्वयभुवम् ।। ३०

चकाराराधन भक्त्या शिवसकल्पमानस ।
यत्र सूक्ष्मेश्वरो देव सूक्ष्मरूपी हर स्वयम् ।। ३१

पिण्डदानादिक तत्र गयाश्राद्धादिक फलम् ।
गयाया विरज क्षेत्रान्महेन्द्रादचलोत्तमात् ।। ३२

पिण्डदान शतगुण श्रीसूक्ष्मेश्वरदक्षिणे ।
पुण्येऽह्नि शिवे योगे प्रारब्ध देवमन्दिरम् ।। ३३

इयाज शिवयज्ञेन दत्त्वाचार्यमनेकश ।
सम्वत्सरेण पूर्णेन परिपूर्णं शिवालयम् ।। ३४

प्रतिष्ठा विधिना चक्रे सम्यक् ज्ञानोदितेन स ।
बहुना यज्ञभागेन सुतृप्तिरभवद् हर ।। ३५

तुष्टो देवो विरूपाक्ष आदिदेश पुरोगतान् ।
इहानयत त विप्र याज्ञिक सपरिच्छदै. ।। ३६

वाढमित्येव ते दूता शिव-शासन-तत्परा ।
विमानेनावतीर्णास्ते पश्यत्सु मनुजेषु च ।। ३७

पुरतस्तस्य गगने ऊचुरित्थ वचस्तदा ।
साधुकर्म-कृतं श्लाघ्य तुष्टो देवस्त्रिलोचन ।। ३८

आरोहस्व रथं विप्र नाकपृष्ठमितो व्रज ।
हरेणादिष्ट-वचन कुरुष्व वचनान्मम ।। ३९

एतच्छ्रुत्वा तु तद्वाक्यमादिदेश रथोत्तमम् ।
अर्च्चयामास तान् सर्वान् विधिदृष्टेन कर्मणा ।। ४०

उवाच प्रहसन् प्राज्ञ किञ्चिदिच्छामि वेदितुम् ।
लिङ्गस्य चास्य किं नाम कीर्त्तयिष्यन्ति मानवा ॥ ४१

आम्रातकेनैवमुक्ता देवा प्राहुरवस्थिता ।
आम्रातकेश्वरो देवस्तव नाम्ना भविष्यति ॥ ४२

सिद्धलिङ्गमतो लोके सर्वकामफलप्रदम् ।
सवत्सरेण सिद्ध्यन्ति योऽस्याराधन तत्परा ॥ ४३

इत्याकाशात् प्रमुञ्चन्ति पुष्पवृष्टिं दिवौकस· ।
सुरदुन्दुभयो नेदु साधुवादोऽप्य भून्महान् ॥ ४४

सुहृन्मित्रकलत्रैश्च सानुगै सह मन्त्रिभि ।
आरुरोह दिव हृष्टौ दृष्टोऽसौ बहुभिर्जनै ॥ ४५

विमानेन विचित्रेण भास्वरेणार्कवर्च्चसा ।
हसवर्हिणयुक्तेन किङ्किणोजालमालिना ॥ ४६

आतपत्र-ध्वजोत्कृष्टै सङ्गीतमधुरस्वरै ।
सुरयोषित्सहस्रैश्च रामयन्ति रमन्ति च ॥ ४७

शक्रलोकात् पर जग्मु· शिवसद्म-सनातनम् ।
शिवस्यानुचरो भूत्वा मुमुदे देववत् चिरम् ॥ ४८

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया चतुर्थेऽशे आम्रातकेश्वर माहात्म्य नामषट् पञ्चाशत् अध्याय [1] ॥

---

1. $B_1$ $B_2$, V—चतुर्थेऽशे आम्रातकेश्वरमाहात्म्य नाम दशमोऽध्यायः ॥

# सप्तपञ्चाशत् अध्याय:

### ब्रह्मोवाच

अथ सक्षेपतश्चान्य निबोध वरवर्णिनि ।
स्वयमेव हर साक्षात् प्रादुर्भूतोऽद्रिकन्यके ।। १

सूक्ष्मा म्रातकयोर्मध्ये यतो लिङ्ग स्वयभुवम् ।
ततोऽदो[1] मध्यम लिङ्ग मध्यमेश्वर ईरित ।। २

तस्य दर्शनमात्रेण नरो मुच्येत किल्विषात् ।
लिङ्गमन्यन्निबोधेद गिरिराजसुतेऽम्बिके ।। ३

देवी पदोत्तरस्थ (?) च स्मृतमात्राघहारी च ।
रुद्रैस्तु पूजित लिङ्ग लिङ्गमूर्त्तिरनामयम्[2] ।। ४

रुद्रेश्वरेति विख्यात नाम चक्रे सुरासुरै ।
सिद्धलिङ्गमिद विद्धि कीर्त्तित[3] कीर्त्तिवर्द्धनम् ।। ५

समीपे तस्य वक्ष्येऽह गङ्गेश्वरमनुत्तमम् ।
गङ्गेश्वराद्रविप्रख्य तीर्थेश्वरमनुत्तमम् ।। ६

अभ्यासे तस्य लिङ्गस्य विमलेश्वसज्ञकम्
तस्मात् च नातिदूरेण लिङ्ग चैक वटेश्वरम् ।। ७

पार्श्वे विल्वेश्वर तस्य उदकेश्वरमेव च ।
महीश्वर तु विख्यात मणिकर्णीश्वर तथा ।। ८

एते स्वयम्भुव ख्याता सर्वकामफलप्रदा ।
मुनिदेवासुरैर्जुष्टा ब्रह्मेन्द्रवासवार्च्चिता ।। ९

अथ लिङ्गवर श्रीमान् वालुकेश्वर विश्रुत ।
पूर्वस्या दिशि देवस्य धेन्वन्तरशतद्वये ।। १०

---

1 $A_2$, $B_1$, C – ततोऽह ।

2 $A_3$, $B_2$, V—निरामयम् ।

3, V—कीर्त्तिद ।

सन्निधाने पुनस्तस्य शिवलिङ्ग समुत्थितम् ।
तस्याह् सम्भव वक्ष्ये शृणु देवी शिवप्रिये ! ॥ ११

ब्रह्मणो मानस पुत्र पुलहो नाम वेदवित् ।
दायादस्तस्य मेधावी जटिलो नाम नामत. ॥ १२

शिवभक्त सदा दान्तस्तन्निष्ठस्तत्परायण ।
शिवसद्भावभावज्ञ परिचर्यामहर्निशम् ॥ १३

स्वर्णकूट समासाद्य तीव्र[1]व्रतमधारयत् ।
निर्ममो निरहङ्कारो वायुभक्षो जितेन्द्रिय ॥ १४

शिवध्यानपरश्चैकश्चक्रे मनसि निश्चयम् ।
अनुपश्यामि देवेश लिङ्गमूर्त्तिधर हरम् ॥ १५

अप्रसन्ने विरूपाक्षे त्यक्ष्यामि निज जीवितम् ।
सकल्पितमनो बुद्धि समानि दश पञ्च च ॥ १६

विज्ञाय सुमहद् धैर्यं मन. सकल्प्य सस्थित ।
ततः स भगवान् भर्ग सर्वेषा प्रपितामह ॥ १७

वभूव पुरत साक्षाज्जगद् वीज. स्वयभुव ।
द्योतमानोनिलप्रख्य· प्रभामण्डल-भासुर ॥ १८

तेजसा दीप्त ईशस्य स मुनिस्तत्रविग्रह ।
अपश्यदमलोद्भास शिवलिङ्ग सुवर्च्चसम् ॥ १९

उद्यच्छतशशाङ्काभ मरीचि विकचोज्वलम् ।
नमश्चक्रे मुदाविष्टोऽप्यष्टाङ्गेनावनीतले ॥ २०

प्रदक्षिण-नमस्कार त्रयो वारान् समाहित ।
पाणौ कुड्मलमाबध्य वन्धुरीकृतकन्धर ।
जानुमारोप्य वसुधा हर स्तोतु प्रचक्रमे ॥ २१

## जटिल उवाच

ॐ जयस्वादिजगन्नाथ ! विधातरमृताक्षर ! ।
शम्भो ! स्वयम्भो ! भूतेशो ! प्रभवाव्यय ईश्वर ! ॥२२

कर्मकारणकर्त्तासि गोप्ता वर्त्तुलमेधसे ।
सहर्त्ता चैव धातासि सर्वकारणकारण ॥ २३

---

1, V—तीर्थ ।

अवि च्छिन्न अविज्ञेय स्थूल-सूक्ष्मात्परावर ।
सर्वद सर्वग सर्व सर्वेन्द्रिय अतीन्द्रिय ॥ २४

परात् परतरो ध्येयो ज्ञानज्योति प्रदीपक ।
यज्वा यज्ञक्रतुर्हव्यो हुतभुक् हव्यवाहन ॥ २५

वेदमन्त्रमयो वीजो ज्ञानचक्रप्रवर्त्तक ।
बहुरूप नमस्तेऽस्तु बालभोग्यङ्गदाय[1] च ॥ २६

एणाङ्क[2] शिरसे तुभ्य जटात्रिपथगाभृते ।
शिवशक्तिमयो मिश्रो विश्वपाद् विश्वतो मुख ॥ २७

अनाख्येयमनाशोच्य सचिन्त्यमपरिग्रह ।
नीलकण्ठ जगन्नाथ भूतार्त्तिहरये नमः ॥ २८

प्रसीद परमेशान ! निष्कल सकलात्मक ! ।
व्योमाग्निरविमध्यस्थ (?) कलाबिन्दुस्वरूपिणम् ॥ २९

अध्यात्मध्येयकर्मस्थ योगवास नमाम्यहम् ।
सुब्रह्मण्य न नमस्तेऽस्तु चितिभूतिभृते नम ॥ ३०

त्वच्चित्तस्त्वन्मय सर्वो विश्वात्मा विश्वतोमुख ।
दासोऽहं तव देवेश त्वत्तो नान्यागतिर्मम ॥ ३१

शान्ति श्रेयवतामीश उग्रभीम नमोऽस्तु ते ।
नायक सर्वभूताना प्रपन्नार्त्तिहरो हर ॥ ३२

## ब्रह्मोवाच

स्तुवतस्तस्य पुरतो लिङ्गभूतमविद्रवत् ।
उदतिष्ठति सूर्याभो दुष्प्रेक्षो [ह्यमलद्युतिः ॥ ३३

तेजोराशि जगद्योनिं त समीक्ष्य महेश्वरम् ।
पुनराह वर काम्य महादेव महामुनि ॥ ३४

त्वद् दर्शनमपुण्याना स्वप्नेष्वपि सुदुर्लभम् ।
कृतार्थोऽह जगन्नाथ ! प्राप्त त्वद् दर्शनं मया ॥ ३५

नाम सज्ञा कथ त्वस्य लिङ्गस्य त्रिदशार्च्चनम् ।
किं फल चार्च्चने स्नाने यथावद् वक्तुमर्हसि ॥ ३६

---

1 $A_2$, $B_1$, C —बालभोग्यङ्गनाय ।

2, $A_2$—शशाङ्क ।

तमुवाच स्वय भर्गं प्रज्ञोत्पादनक वच ।
सदा पूज्यतमो विप्र नाम्नासौ जटिलेश्वर ।। ३७

अनन्तस्नानदानादिष्वनन्तफलदो ह्यहम् ।
सर्वेषा प्राणिनामत्र पूरयामि मनोरथम् ।। ३८

श्रुत्वा वाणी तु देवस्य आरुरोह रथोत्तमम् ।
जगाम त्रिदिव हृष्टो भासमानोऽनलप्रभ। ।। ३९

विमानध्वजमालाभि स्तूयमानश्च खेचरै ।
प्राविशत् पुण्यलोकेऽसौ जटिलस्तपसा वर ।। ४०

जटिलेशाददूरेण उत्पलेशो महान् प्रभु ।
तस्य दर्शनमात्रेण सर्वपापै प्रमुच्यते ।। ४१

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया चतुर्थेऽ शे जटेश्वर-माहात्म्ये सप्तपञ्चाशत् अध्याय [1] ।

1 $B_1$, V—जटिलेश्वर (जटेश्वर) माहात्म्य नामैकादशोऽध्याय ;
$B_2$—कपिलेश्वर (जटिलेश्वर) माहात्म्य नाम एकादशोऽध्याय ।।

# अष्टपञ्चाशत् अध्यायः

## ब्रह्मोवाच

अत पर निबोधेद सर्वपापभयापहम् ।
माहात्म्य क्षेत्रराजस्य स्मृतिमात्राघहारिणम् ।। १

देवताश्चासुरश्चैव स्पर्द्धमाना बलोत्कटै ।
मेरुमासाद्य तिष्ठन्तावन्योऽन्यजयमीषिणै ।। २

नित्य समरदुद्धर्षो वद्धवैरो सुरासुरौ ।
भार्गवी बुद्धिमासाद्य सग्रामे च दिते सुता ।। ३

बार्हस्पत्येन देवास्तु तुल्यमासीत् समागत ।
व्रीडित सोऽभवत् तस्माद् युद्धाद् वै पाकशासन ।। ४

अथापर गुरु साक्षात् स्वर्गधामादिहाययौ ।
आससाद वर क्षेत्रमेकान्ते समवस्थित. ।। ५

वद्धवीरासनो मौनी निराहारो जितक्लम ।
ध्यानयोगपरो धीर[1] उपास्ते वत्सरान् दश ।। ६

ज्ञात्वाथ तस्य सकल्प तुष्टो देवो महेश्वर ।
उत्तस्थे पुरतस्तस्य लिङ्गमूर्त्तिः स्वयभुव ।। ७

नाय पश्यति विप्रेन्द्रस्तन्मनो नान्यमानस ।
प्राणायामपरो धीमान् निष्प्रकम्पोऽयमास्थित ।। ८

अथ मूर्त्तिधर साक्षाद् धराधरसुताप्रिय ।
प्राह वाचस्पति स्निग्धो वर वरय सुव्रत ।। ९

इत्याकर्ण्य गुरु प्राह मूत्तिमन्त त्रिलोचनम् ।
पूजितु देव इच्छामि युष्माक लिङ्गमुत्तमम् ।। १०

यस्य प्रसादाद् देवेन्द्र सदा जेष्य त्वरातिकम् ।
स्फुरन्त विमलज्ञान येनास्मच्छत्रु-साधनम् ।। ११

---

1. $A_2$—वीर ।

अथोवाच हर शान्तो मुनिमाङ्गिरस वच ।
सिद्धार्थो भक्त काम्यो देवाना हितशसिन ॥ १२

पश्य लिङ्ग ममैवेद यत्त्व पूजितुमिच्छसि ।
इत्युक्त्वान्तर्दधे देवो लिङ्ग केवल सस्थितम् ॥ १३

ईश्वरस्य परा मूर्त्ति सुरेश्वर इतीरिता ।
कृत्तिवासाददूरेण ऐशानी दिशमाश्रिता ॥ १४

धेन्वन्तरशते साग्रे पञ्चाशद् द्विजसत्तमा ।
सुरेश्वरस्य माहात्म्य स्वर्गद सुखद शिवम् ॥ १५

सुरेश्वर समभ्यर्च्च्य दृष्ट्वा वाग् यतमानस ।
प्रयाति भुवन देवि ! शैवाख्य पदमव्ययम् ॥ १६

अथाश्विनौ समायातौ सुराणा भिषजाविमौ ।
विचेरतुर्वर क्षेत्र स्वर्णकूट हराश्रमम् ॥ १७

चतुर्धेन्वन्तरशते आग्नेय्या कृत्तिवासस ।
रोचयामासतुस्तौ तु लिङ्गाराधनमुत्तमम् ॥ १८

प्रासाद गुणसम्पन्न विश्वकर्माभिसम्मतम् ।
चकार विधिवत् तूर्णमाज्ञासिद्धो महायशा ॥ १९

प्रतिष्ठित सुरै सर्वैर्मुनिभिर्ब्रह्मवादिभि ।
वैद्याभ्या च प्रतिष्ठोऽय वैद्यनाथो भविष्यति ॥ २०

कुमारावश्विनौ तौ च कृतकृत्यौ गतावुभौ ।
वैद्यनाथात् पर लिङ्ग रावणेश्वर-सज्ञकम् ॥ २१

रावण परया भक्त्या तोषणाय पिनाकिन ।
चकार विधवत् पूजा प्रतिष्ठा च शिवालयम् ॥ २२

स तेनैवोन्नति प्राप्य स धर्मात्मा विनश्यति ।
समीपे तस्य लिङ्गस्य बृहत्पीठो महानभूत् ॥ २३

बृहत्पीठात् सुसश्लिष्टमन्यलिङ्गमत परम् ।
शैलसानुस्थिता ह्येते मयाख्याता वरानने ॥ २४

सर्वपूण्यप्रदा धन्या ब्रह्मादि सुरसेविता ।
अथ देवि निबोधेद सक्षेपात् पापनाशनम् ॥ २५

विष्वोर्वक्षस्थलाद् भक्त्या उत्थाय पुरतो बभौ ।
सा उवाच हृषीकेश केशव केशिसूदनम् ॥ २६

पद्मा पद्मसमा पाणौ प्राञ्जलिं स्मितसाध्वसा ।
ईषच्चलितलोलाक्षी सानुरागा समत्सरा ॥ २७

स्फुटेन्दुवदना शुभ्रा माधूर्यहृदयगमा ।
हरे इच्छाम्यहं कर्त्तुं किञ्चिद् धर्मं तवाज्ञया ॥ २८

यच्छ्रेयो वद गोविन्द ! त्रिषु लोकेषु साधितम् ।
तामुवाच चिरं ध्यात्वा वासुदेव उदारधी ॥ २९

शृणु पद्मालये देवि ! सुकृत प्राणवल्लभे ! ।
पुण्यस्थानान्यनेकानि यदि तिष्ठन्ति भूतले ॥ ३०

तथाप्येकाम्रकं क्षेत्रं विशेषफलदं स्मृतम् ।
यत् किंचित् क्रियते चात्र जाप्यं होमं व्रतादिकम् ॥ ३१

तदक्षयं फलं प्राहुः प्रासादस्य विशेषतः ।
अन्यं क्षेत्राच्छतगुणं दत्तस्य फलमश्नुते ॥ ३२

तमुवाच ततो लक्ष्मी पद्मनाभं पुरातनम् ।
नियोजय हृषीकेश ! विश्वकर्माणमाज्ञया ॥ ३३

स्वर्णकूटाचले चासौ विदधातु शिवालयम् ।
तथाह भगवान् विष्णुराहूय सुरवर्द्धकीम् ॥ ३४

ध्यानमात्रे स गोविन्दे आजगाम च विश्वसृक् ।
मनश्चक्रे सुरारिघ्नं प्राह किं करवाणि ते ॥ ३५

स तु प्राह हृषीकेशो वनमेकाम्रकं व्रज ।
कुरुष्वाभिमतं शम्भो श्रियश्चाभिमतेन च ॥ ३६

बाढमित्येव स प्राह सामात्यो विचचार ह ।
आसाद्य विमलं क्षेत्रं चकार विधिनोदितम् ॥ ३७

आग्नेय्यां तव तीर्थस्य सूत्रन्यासादिपूर्वकम् ।
विश्वकर्मा सुकर्मज्ञश्चकार शिवमन्दिरम् ॥ ३८

प्रतिष्ठां विधिना चक्रे सम्यक् श्रद्धोपपादिताम् ।
वासुदेवेन सहिता पद्मा पद्मनिभेक्षणा ॥ ३९

लक्ष्म्या स्वयंकृतो यस्मात् ततो लक्ष्मीश्वरः स्मृतः ।
तस्य दर्शनमात्रेण यशो लक्ष्मीर्बलं धनम् ॥ ४०

लक्ष्मीश्वराद् अदूरेण देवि ! विश्वेश्वरः स्मृतः ।
सुलोचनकृतं लिङ्गं तल्लिङ्गं सुमनोहरम् ॥ ४१

वसुभद्र पर ज्ञय सुरेश्वरमत परम् ।
विभाण्डकेश्वर चैव रक्षुविन्दु (?) तत स्मृता ॥ ४२

अथारण्येऽतिविमले केदारेश्वर विश्रुत ।
तत्र साक्षात् स्वय देवी गौरी त्रैलोक्यसुन्दरी ॥ ४३

स्वयमेवाकरोत् कुण्ड सर्वपापप्रणाशनम् ।
रूपसौभाग्यद श्लक्ष्ण पुण्य स्वस्त्ययन महत् ॥ ४४

नवम्या कृष्णपक्षस्य दत्वा कृष्णतिलान् शिरे ।
स्नात्वा तस्मिन् महाकुण्डे सम्बत्सर-समाहित ॥४५

कृत्तिवासोऽर्च्चन तदवत् सर्वकामफलप्रदम् ।
सर्वपापघ्नमतुल कुण्ड केदारसञ्ज्ञकम् ॥ ४६

लिङ्गमात्राभिधास्यामि पूज्यलिस्ङ्गवयभुवम् ।
यद्यभ्यर्च्च्य चिर प्राप्ता मुनय स्वर्गमुत्तमम् ॥ ४७

गौर्य्यश्च पुरत साक्षाद् रुद्रस्त्रिभुवनेश्वर ।
केदारेश्वर विख्यात सर्वकामफलप्रद ॥ ४८

सर्वपापघ्नमतुल कुण्ड केदारसञ्ज्ञकम् ।
अभ्यासे तस्य लिङ्गस्य पुरतस्तु स्वयभुवः ॥ ४६

भवपीठो इति ख्यातो भवतीति हरः सदा ।
तत् प्रसादात् समन्ताच्च कुन्देन्दु सदृशद्युति ॥ ५०

सदा श्रवति तेजोम्भ पुनात्यखिल भूभुव ।
तस्य नातीव दूरेण रुद्रलिङ्गो भव स्वयम् ॥५१

नाम्ना शान्ति शिवेत्येव मरुद्भिः परिपूजित ।
मारुतेश इति ख्यात सर्वसिद्धिप्रदायक. ॥ ५२

मारुतेशात् पर लिङ्ग हाटकेश्वर ईरित. ।
तस्मात् पश्चिमतो देशे विख्यातश्चोत्तरेश्वर ॥ ५३

तत्र सन्निहितो देवो ह्यद्भुताङ्ग तदर्शन ।
रौद्रोत्कटसटो भीम शशाङ्क शकलोद्वहन् ॥ ५४

ग्रहनक्षत्रमालाभिर्भाजमानस्त्रिलोचन. ।
धूम्र. पिङ्गारुणो दक्षश्चितिभूति-विभूषणः ॥ ५५

व्यालमालाकुलोरस्कः खट्वाङ्गी विकटानन. ।
गजचर्माऽशुकधरो घोरश्मश्रुरनिन्दित. ॥ ५६

ज्वलद् दष्ट्रामलज्योति शिखाश्रेणी बलोद्यत ।
महामन्द्रो महोत्साहो महाशक्तिः कपालभृत् ।। ५७

महदादिर्महाग्रासो महाभृतान्तक क्षये ।
महीधर गुहाशायी महामेघौघनि स्वन ।। ५८

दिग्वासो विगतस्नेहो भूतसघ-निसेवित ।
तत्र देवी स्वय साक्षात् स्वगणै परिवारिता ।। ५९

नानारूपमदान्मत्ता रक्तमासवलिप्रिया ।
ह्रस्वा दीर्घाप्लुता भीमा निर्मासा पृथुलोचना ।। ६०

कोटराक्षा विरूपाक्षास्तूयगीत-प्रदायका ।
तत्र तिस्र शता सन्ति योगिन्य कामगा शिवा ।। ६१

महाप्रलयनादिन्यो भैरवा वरदाः शिवा ।
वशिष्ठवामदेवौ च मूर्त्तिरूपधरावुभौ ।। ६२

तिष्ठतस्तत्र यत्नेन महापाप-विनाशकौ ।
महाश्मशानघोरौघ सिद्धस्थानमनुस्मरन् ।। ६३

उत्तरेश्वरमासाद्य सिद्धा सिद्धयन्ति सर्वदा ।
सर्वेषामपि पीठाना लोकालोके समन्तत ।। ६४

विशिष्टो[1]ऽय महापीठ प्रवदन्ति मनीषिण ।
सक्षेपमिदमाख्यात विश्ववद्य-पद विभो ।। ६५

अनादिमनघ ध्येय पापसघातभेदनम् ।
अथ तस्य समीपस्थो लिङ्गमूर्त्तौ व्यवस्थित ।। ६६

भीमेशो भयहर्त्ता च सर्वदा सर्वदेहिनाम् ।
भीमादभयद नाम्ना अभयात्कुण्डल प्रभु ।। ६७

लिङ्ग भद्रशिख नाम्ना सुभद्राङ्गमत परम् ।
यज्ञभक्षवर लिङ्ग लिङ्गमव्यग्रमीश्वरम् ।। ६८

जलेश प्रथमेश च शरजित् शत्रुजित् तथा ।
विश्वजित् कामजित् चैव अमृतेश्वरसज्ञक ।। ६९

---

1. V—विशेषो ।

एतानि चैव लिङ्गानि मया प्रोक्तानि पार्वति ।
अत परमिद गुह्य पवित्र पापनाशनम् ॥ ७०

कीर्त्तयामि समासेन सर्वपापभयापहम् ।
कृत्तिवासाददूरेण वायव्येन समाश्रिते ॥ ७१

धेन्वन्तरशतद्वे च ईशानेश्वर-सज्ञक ।
तस्याहृ सम्भव वक्ष्ये हरलिङ्गस्य भूतले ॥ ७२

स्वयमेव हर साक्षात् सर्वभावेन सस्थित ।
पूजित प्रीतिमभ्येति ददाति विपुल फलम् ॥ ७३

य य काममभिध्यायेत् त तमाप्नोति मानव ।
मासि मार्गशिरे प्राप्ते यदा स्यात् प्रथमाष्टमी ॥ ७४

ब्रह्मचयो ह्यहिस्रश्च सत्यवाक्कायमानस [1] ।
यमसयमनो धीर कृतसकल्पमानस ॥ ७५

शत सहस्रमयुत गड्डुका लक्षमेव च ।
अछिद्रेण समन्त्रेण पूजन प्रणवेन च ॥ ७६

सिद्धयन्त्यर्था प्रयत्नेन मुच्यते भवबन्धनात् ।
ॐ नमस्ते परमेशाय पराय परमात्मने ॥ ७७

ज्ञानेश्वराय देवाय प्रसीद परमेश्वर ।
सिद्धिद सिद्धिसिद्धान्त सव्यदक्षिणमध्यग ॥ ७८

सत्त्व तमो रजोजुष्ट शारीरकरणाव्यय ।
प्रसीद परमेशान ! सर्वव्यापिन् महेश्वर ॥ ७९

अमृतत्वमसख्येय प्रयच्छ अभिवाञ्छतम् ।
निश्चला निर्मला बुद्धिर्ममास्तु त्वयि नित्यश ॥ ८०

त्राहि मा परमेशान ! देहि दास्य तवाच्युत ।
अनेन मन्त्रमुख्येन ईशान-पुरत स्थित ॥ ८१

षण्मासात् लभते कामान् यथाकाम वरोत्तमम् ।
निष्कामो लभते मोक्षमेष धर्म सनातन ॥ ८२

---

1. V—सत्यबाक्यायमावस. ।

ईशान ये च पश्यंति पूजयन्ति स्तुवन्ति वा।
प्राप्नुवन्ति पर स्थान विचरन्ति शिवेन च ।। ८३

ईशानस्थानमासाद्य न च्यवन्ते कदाचन।
क्रीडन्ति शाश्वते स्थाने सर्वबाधाविवर्जिते ।। ८४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया चतुर्थेऽशे सिद्धलिङ्गानुकीर्त्तन नाम अष्टपञ्चाशत् अध्याय[1] ।।

1. B1, B2, V—चतुर्थेऽशे सिद्धलिङ्गानुकीर्त्तन नाम द्वादशोऽध्याय ।।

# ऊनषष्टितमोऽध्यायः

## श्री ब्रह्मोवाच

कीर्त्तिता कृत्तिवासस्य समीपेतरवर्त्तिन· ।
गुणा पृथग् विधास्तेषा मन्त्राराधन सत्क्रिया· ॥ १
फलदा[1] इहलोकस्य सर्वदा परमार्थदा ।
सर्वकामप्रसिद्धयर्थं देवेनाभिहिता स्वयम् ॥ २
स्वयमेवात्मनात्मान विदधाति अनेकधा ।
बहुरूपस्वरूपोऽसौ हेयाहेय क्षराक्षर ॥ ३
स्थूल सूक्ष्म पर शान्त शिव निर्वाणद्र मह ।
कारण सवकार्याणा तमेवाहुर्मनीषिण ॥ ४
वितनोति स्वतेजासि वर्त्यात्मसुखेच्छया ।
सहृत्य निखिलान्येतान्येकस्तिष्ठति सक्षये ॥ ५
विश्वधृग् वपुरस्यैव सर्वतेजोमयो महान् ।
विश्वात्मा परमात्मासावक्षोभ्योऽव्यय ईश्वर ॥ ६
शब्दस्पर्श-रसातीत प्राणरूपविवर्जित ।
निष्प्रपञ्चो निराभास· सूक्ष्ममव्यक्त-निर्गुण ॥ ७
निस्तमो विरज शान्तः सत्त्वज्योतिर्निरञ्जन ।
पूर्णमक्षोभ्यमनघ सर्वेन्द्रियमतीन्द्रिय ॥ ८
मात्राबिन्दुकलातीत स्वरस्पर्शविवर्जित ।
योगमत्यन्त निर्वीज बाह्याभ्यन्तरतो जित ॥ ९
एको निष्केवल शुद्धो व्योमातीत परापर[2] ।
अनन्तमपरिच्छदो विश्वारम्भप्रवर्त्तक ॥ १०
एवमादि गुणा यस्य स देव स्वयमेव च ।
एकाम्रकगत श्रीमान् कोटिमूर्त्तिधरो विभु[3] ॥ ११

---

1 V—फलक ।
2 V परात्पर ।
3. $A_2$, $B_1$—प्रभु ।

अर्च्चितो देवदैत्यैश्च ऋषिभिर्मनुजेश्वरै ।
गन्धर्वै-र्नागयक्षैश्च विद्याधरसुचारणै ॥ १२

बहुमन्वन्तरातीते महाकल्पसहस्रकै ।
महाकल्पशतै साग्रैरवसद् भूरितेजस ॥ १३
प्रत्येकैकास्तु ये देवा पूजिताश्च सुरासुरै ।
ते वै विभूतयस्तस्य विश्वासाय नृणा किल ॥ १४
प्रासादा बह्वश्चात्र गता यास्यन्ति चापरे ।
भविष्यन्ति अनेकास्तु क्षेत्रे क्षेत्रविदाम्बरे ॥ १५
प्रासादाश्च प्रलीयन्ते कालातीते युगक्षये ।
कर्त्तारो न प्रलीयन्ते कल्पकोटिशतैरपि ॥ १६

एव क्षेत्रस्य महात्म्य प्रासादस्य कृतस्य च ।
श्रुत्वा पापा क्षय यान्ति सुकृत परिवर्द्धते ॥ १७
गतागतानिवर्त्तन्ते वस्वश्विनी मरुद्गणा ।
अद्यापि न निवर्त्तन्ते कीर्त्तयेषा हराश्रमे ॥ १८
तेन दत्त हुत तप्त तेन चाराधित शिव ।
यस्य एकाम्रके कीर्त्तिः स च कीर्त्तिमता वर ॥ १९

कीर्त्तिरव्याहता तस्य यावदाभूतसप्लवम् ।
एतत् तु कथित तुभ्य मद्वाचा सशितव्रत ॥ २०

अत पर निवोधेद स्वर्णकूटेश्वर हरम् ।
कीर्त्तन कृत्तिवासस्य स्वप्नेष्वपि सुदुर्लभम् ॥ २१

ज्ञात्वा देवस्य माहात्म्य स्वर्णकूटगिरि स्वयम् ।
भेजे वै मूर्त्तिमास्तत्र पर देव त्रिलोचनम् ॥ २२

पञ्चवर्ष सहस्राणि शिवयोगेन[1] तत्पर ।
तन्निष्ठस्तद्गतश्चासौ तस्थे निर्वात-दीपवत् ॥ २३

ज्ञात्वा तस्य मन शुद्धि देव उचे पिनाकधृक् ।
वर ब्रूहि यथाकाममद्रिराज ! तवेप्सितम् ॥ २४

स उचे[2] भगवन् भर्ग लिङ्गे त्वा पूजयाम्यहम् ।
अद्रिमूचे ततो देवो न हि शक्नोसि पूजितुम् ॥ २५

---

1. $B_2$, V—शिवयोगे च ।
2. V—सन्ति चेत् ।

त्रिंशद् धेन्वन्तरे तात ! ऐन्द्रमाग्नेयमास्थित ।
तत्र पूजा ग्रहिष्यामि स्वर्णकूटेश्वरे हरे ॥ २६

तस्य दर्शनमात्रेण सर्वपापात् प्रमुच्यते ।
एतत् श्रुत्वा वचस्तस्य पूजयामास तत्र स ॥ २७

स्वर्णकूटाधिपो लिङ्ग स्वर्णकूटेश्वर स्मृतम् ।
ईशानस्थल्या अभ्यासे शिवलिङ्ग सुतेजसम् ॥ २८

नाम्ना भद्रेश्वर एव भृगुणाराधित पुरा ।
तुङ्गेश्वर ततो देवो मारीचेश्वर एव च ॥ २६

शिपिविष्टो[1] महादेवो माणिभद्रेश्वरस्तथा ।
विजयन्तो जयन्तश्च द्वे एते वरलिङ्गके ॥ ३०

पापघ्ने सर्वदा नृणा कामदे परमार्थदे ।
कर्कोटकस्य नागस्य कुक्कुटेश्वरमेव च ॥ ३१

कुक्कुटाण्ड प्रमाणेन लिङ्गान्यष्टौ वसन्ति वै ।
तत्र चक्रु कलिकल[2] शारीरकरणो महान् ॥ ३२

लभ्यते पुण्ययोगेन कृत्तिवास-प्रसादत ।
कपालमोचन नाम्ना लिङ्गमीशानमास्थितम् ॥ ३३

यस्मिन् स्थाने ब्रह्मशिरस्त्यक्तवान् पार्वतीप्रिय ।
धेन्वन्तरे चाष्टशते कृत्तिवासा व्यवस्थित ॥ ३४

तस्य दर्शनमात्रेण ब्रह्महत्या विनश्यति ।
देवी भगवती चैव चामुण्डा मुण्डमालिनी ॥ ३५

सरस पश्चिमे भागे अदूरे भुवि वर्त्तते ।
उग्ररूपा च सा देवी नाम्ना कापालिका स्मृता ॥ ३६

तस्या दर्शनमात्रेण सर्वसिद्धि प्रजायते ।
जरामराणदु खार्त्तं गर्भवासादि सम्भवम् ॥ ३७

सेव्यमानो दहत्याशु अभिप्रायफल लभेत् ।
तत कुन्देन्दुनागाभो हिमवत प्रतिष्ठित ॥ ३८

शिशिरेण समायात. शिशेरेणेति विश्रुत ।
परमार्थमिद शस्त त्रिषु लोकेषु दुर्लभम् ॥ ३९

---

1 V—शिवविष्णो ।

2. V—तत्र चक्रकल:स्वस्ति ।

पद रुद्रस्य च क्षेत्र यदा स्याद् देवि[1] मुच्यते ।
नैर्ऋत्यामथ देवेशि सन्निधौ कृत्तिवासस ॥ ४०

बृहल्लिङ्ग प्रवक्ष्यामि सर्वसिद्धिप्रद विभुम् ।
यमुद्दिश्य पुरा ब्रह्मा वर्त्तुल सुमनोहरम् ॥ ४१

उवाच लड्डुकाकार लड्डुकेश्वरसञ्ज्ञकम् ।
तत्र सन्निहित साक्षाद् देवदेवो महेश्वर ॥ ४२

धन्यो धन्यतरः सेव्य सर्वकामफलप्रद ।
सिद्धलिङ्गवर श्रीमान् स्वयभू कलुषापह ॥ ४३

तत्र शक्रेश्वर लिङ्ग पूर्वं शक्रार्च्चित प्रभ ।
महाप्रभावस्तेजस्वी भक्ताना भक्तवत्सल ॥ ४४

वायव्यामस्य विख्यात पुनरीशानसञ्ज्ञकम् ।
लिङ्ग सर्वगुणावास मोक्षद कलुषापहम् ॥ ४५

अथोग्रनाम यल्लिङ्ग कौवेरी दिशमास्थितम् ।
तस्य यद् दर्शनात् पुण्य प्रवक्ष्यामि शृणुष्व तत् ॥ ४६

दशलक्षादि लिङ्गैकान् दिशि लिङ्ग-व्यवस्थित[1] ।
तेषा यद् दर्शने पुण्य तत्फल चास्य तस्य दर्शने ॥ ४७

तस्याग्रे परम लिङ्ग भारभूतीश्वर स्मृतम् ।
यस्य सदर्शने पुण्यमश्वमेधफलप्रदम् ॥ ४८

सन्निधौ कल्पवृक्षस्य श्रीकण्ठेश्वरमीरितम् ।
तदग्रे लाङ्गलीश च महासिद्धिप्रदायकम् ॥ ४९

शिवो ब्रह्मा शिवो विष्णु ब्रह्मविष्णुशिवात्मको ।
त्रयस्त्रिगुणसम्पन्ना स्त्रयीमूर्त्तिभृत प्रभु ॥ ५०

एकोऽपि त्रितय याति सर्गस्थित्यन्तकारणात् ।
एको देव पर प्राहुरद्वितीयो ह्ययोनिज ॥ ५१

परिणामविहीनो सावनवस्थान-सस्थिति ।
अस्मिन् क्षेत्रे स चैकात्मा कृत्तिवासा जगद्गुरु ॥ ५२

एको मूर्त्तिरमूर्त्तस्थ स तु एकाम्रके विभु ।
ज्योतिमय पर लिङ्गमाम्रमूले व्यवस्थितम् ॥ ५३

---

1. V—लक्षव्यवस्थित' ।

एकाम्रेश्वर विख्यात चतुर्वर्गप्रदायकम् ।
तस्य सदर्शनात् चैव भुक्तिभाग् जायते नर ॥ ५४

अनेन मन्त्रयोगेन प्रार्थयेद् गिरिजापतिम् ।
ॐ नमस्ते त्रिगुणात्माय गुणभृद् गुणवर्जित ॥ ५५

ज्ञानरूपविशुद्धाय त्रायस्व परमेश्वर ।
अस्यैव सन्निधौ पूर्वे सोमनाथेश्वर श्रुत ॥ ५६

शिखण्डीश्वर लिङ्गन्तु सर्वपापप्रणाशनम् ।
तस्माद् विश्वेश्वर लिङ्ग तत् पूर्वे विमलेश्वरम् ॥ ५७

तद् याम्ये दर्दुरेश च सदा दर्दुरस्रक् प्रियम् ।
द्वे लिङ्गे त्वथ वक्ष्यामि गणनाथस्य पश्चिमे ॥ ५८

तत्र नन्दी महाकालौ स्वरूपेण स्थितौ सदा ।
चित्रगुप्ते च[1] विख्यातौ पूजनाच्चित्रगुप्तयो ॥ ५९

देवस्य सन्निधौ तस्मादनन्तेश्वरमीरितम् ।
राजराजेश्वर लिङ्ग महासिद्धि-प्रदायकम् ॥ ६०

तत्रैव तारकेश च दण्डपाणीश्वर तथा ।
उत्तरादि क्रमात् पश्चाद् देवस्य नकुलीश्वर ॥ ६१

चतुर्वक्त्रेश्वरस्तस्य निष्कलङ्केश्वरस्तथा ।
शिवोत्तमेश्वरस्तत्र सर्वसिद्धिप्रदायक ॥ ६२

सोमसूत्रेश्वरस्तस्मात् सोमसूत्र समीपत ।
एते चान्ये च बहव सन्ति देवि सहस्रश ॥ ६३

सनातनतरा लिङ्गा भूतानुग्रहबुद्धय ।
पूज्या पूज्यतमा धन्या मनोरथफलप्रदा ॥ ६४

धर्मार्थकाममोक्षाश्च प्रयच्छन्ति सदाशिवा ।
कोटिलिङ्गेश्वर साक्षादष्टमूर्त्तौ व्यवस्थित ॥ ६५

पुण्यायतनैरष्टाभि सिद्धलिङ्गैर्वृत सदा ।
सालकारविचित्राढ्यैर्वरेण्यै कामदर्शनै ॥ ६६

---

1, V—चित्रगुप्तेश ।

अर्च्यैरर्च्यतरैर्धन्यैर्लिङ्गै स्तस्थे सदा सह ।
क्षेत्रोऽस्य प्रवलो[1] लोके कामद परिच्चक्ष्यते ।। ६७

मुक्तिद सगनिर्मुक्तो[2] मानवो गिरिनन्दिनि!
फलमक्षयमाप्नोति दानस्य सुकृतस्य च ।। ६८

यत्रासते सदा स्वस्था ज्ञानिनो वै तपस्विन ।
ये त्यजन्ति निज देहमस्मिन् क्षेत्रे समाहिता. ।। ६९

ते यान्ति परम स्थान भासमाना सुतेजस ।
देवयोषित्सहस्रै श्च माल्यदामोपशोभितै ।। ७०

स्तूयमानो ह्यनेकैश्च विमानैरज्जुबन्धनै ।
शक्रलोक सुदु प्राप्त सर्वामरनिकेतनम् ।। ७१

क्वचिदूद्ध्र्वगतिस्तत्र ब्रह्मण सदन परम् ।
श्वेताख्य भवन दिव्य वैष्णव परमार्च्चितम् ।। ७२

सर्वभोगमय रम्य शिवस्य भवन तथा ।
यद् यदिच्छति कामाश्च त तमाप्नोति निश्चयम्[3] ।। ७३

विधान विहित पूर्व स्वयभूर्भगवान् स्वयम् ।
ये त्यजन्ति निज देह कृत्वा त्र्यानशनक्रियाम् ।। ७४

ते व्रजन्त्यक्षयान् लोकान् यावच्चन्द्रार्कमेदिनी ।
बिन्दुसरजलस्यान्ते बिशेषोत्तरमाश्रिते । ।। ७५

स्नात्वा हुत्वा पितृन् देवानर्च्चयित्वा त्रिलोचनम् ।
संन्यासविधिसकल्प सुदृढेनान्तरात्मना ।। ७६

आदित्याभिमुखो भूत्वा पाणौ वारि समादधे ।
ॐ नमस्ते परमार्थाय भूतान्तकरणाय च ।। ७७

नय मा परम स्थान पुनरावृत्तिर्वर्जितम् ।
शिव च सस्तुवन् वाक्यैर्विहाय करणेन्द्रियम् ।। ७८

---

1 $B_2$, V—प्रवरो ।

2 $A_2$, $B_1$, C—सगतिमुक्तो ।

3, $B_2$, V—तत् तत् प्राप्नोत्यसशय ।

तस्य यः किरणद्भूत स शान्तिमधिगच्छति ।
ज्ञानिनो अधिगच्छन्ति तदक्षयपर पदम् ॥ ७९

अत्यन्त-सुखसवास ब्रह्मभूतमकल्मषम् ।
क्षेत्रस्यास्य प्रवक्ष्यामि चातुर्मास्य-विधि परम् ॥ ८०

यस्मिन् क्षेत्रे दिनैकेन काश्या कोटयाधिक फलम् ।
अस्मिन्नेकाम्रके क्षेत्रे चातुर्मास्या करोति य· ॥८१

वारणस्या शतगुण सहस्र पुरुषोत्तमात् ।
फलमाप्नोत्यसदिग्धमेवमाह महेश्वर ॥ ८३

हरेस्तु शयने प्राप्ते यस्तस्मिन् वस्तुमिच्छति ।
प्रयागात्पुष्करात्काश्याद् द्वारावत्या फल लभेत् ॥ ८३

विष्णु· सन्निहितस्तत्र त्रिदशैर्बहुभिर्वृ त ।
स प्रियः कृत्तिवासश्च द्वाभ्या क्षेत्रमनुत्तमम् ॥ ८४

वारणस्यां युगानष्टौ तपस्तप्त्वा सदारुणम् ।
एकाम्रके दिनैकेन चातुर्मास्ये लभेद् गतिम् ॥ ८५

यो हरे· शयनादुद्‌र्ध्वमेकाम्रे निवसेद दिनम् ।
या गतिः सांख्ययोगीना व्रजत्येता गति सदा ॥ ८६

आषाढदशमीं शुक्ला प्राप्य संकल्पमानस ।
विन्दूद्भवादि तीर्थेषु स्नान कुर्याद् विधानत. ॥ ८७

आजन्मदुरिताना च क्षयाय मधुसूदन! ।
अष्टतीर्थविधि कुर्वे आज्ञापय जनार्द्दन ! ॥ ८८

इत्यनुज्ञा समादाय वासुदेवात् सुपुण्यकृत ।
तीर्थावगाहन कुर्य्याल्लिङ्गदर्शनमेव च ॥ ८९

दशम्यामेकभुक्त च नक्त वापि चरेद् बुध ।
रात्रौ कुशासने कार्यं शयन व्रतिना वर ॥ ९०

पुन प्रभाते विमले एकादश्या विचक्षण ।
कुर्वीत सरसः स्नान वासुदेवस्य वन्दनम् ॥ ९१

मौनी पूर्वमुखो भूत्वा जानुमारोप्य मेदिनीम् ।
वासुदेवमनुज्ञाप्य सकल्पविधिमाचरेत ॥ ९२

निर्विघ्नेन यथा विष्णौ चातुर्मास्याव्रत मम् ।
भवेत् तथा कुरुष्वाशु पापघ्न पुण्यवृहणम् ।। ९३

इत्यनुज्ञाप्य देवेश विघ्नराज प्रपूजयेत् ।
यथाकामेन सकल्पमेकाम्रस्य[1] समीपत ।। ९४

तत प्रतिदिन देवि! पदमेक न लघयेत् ।
प्रत्यह स्नपन कार्य बिन्दूद्भवह्रदोत्तमे ।। ९५

दर्शन नियत कार्य व्रतिना कृत्तिवासस ।
पूजन वासुदेवस्य क्षेत्रस्य फलकाक्षया ।। ९६

वर्जयेत्प्रथमे मासि शाकं विगतमत्सर ।
द्वितीये दधि वर्ज्यं च तृतीये च पय स्मृतम् ।। ९७

चतुर्थे मासि सप्राप्ते भाषा वर्ज्या प्रयत्नत ।
दीपदान सदा कार्यं वर्जयेत् तैलमामिषम् ।। ९८

कामिनी नेक्षयेद् धीमान् भाषया नैव सस्पृशेत् ।
दीक्षया ब्रह्मचर्येण क्षिपेन्मास तु कार्त्तिकम् ।। ९९

अन्नदान प्रतिदिन क्षुधार्त्तेभ्य प्रदापयेत् ।
अन्यक्षेत्राच्छतगुणमत्रान्न दानमुच्यते ।। १००

अन्नदान प्रतिदिन कर्त्तव्य पुण्यमिच्छता ।
अतिथौ विमूखे क्षेत्रे सर्व तु विफल भवेत् । १०१

एव य कुरुते तत्र चातुर्मास्यं व्रतोत्तमम् ।
दिने दिनेऽश्वमेधस्य यज्ञस्य फलमाप्नुयात् ।। १०२

धर्मार्थी धर्ममाप्नोति वित्तार्थी वित्तमश्नुते ।
पापक्षये प्सोर्दुरित विनश्यति न सशय ।। १०३

राजा विजयमाप्नोति ब्राह्मणो ज्ञानमाप्नुयात् ।
वैश्यस्तु धनसम्पत्तिं राजवल्लभता श्रियम् ।। १०४

शूद्रो ब्राह्मण-शुश्रूषा सद्गति समवाप्नुयात् ।
वर्णहीनो नरो यस्तु सवर्णमधिगच्छति ।। १०५

---

1, A2, V—एकाम्रेश ।

ब्रह्मोवाच

एव क्षेत्रस्य माहात्म्य कथित वरवर्णिनि ।
श्रुत्वा पापक्षय याति सुकृत चापि वद्धते ॥ १०६

इत्येकाम्रपुराणे षट् साहस्र यामैश्वर्या सहिताया चतुर्थेऽ शे साधारणोक्त-श्चातुर्मास्यविधान नाम ऊनषष्ठितमोऽध्याय [1] ॥

1. B$_1$, B$_2$, V—चतुथऽ शे साधारणोक्तिर्नाम त्रयोदशोऽध्याय ॥

# षष्टितमोऽध्यायः

## सनत्कुमार उवाच

श्रुत्वेव बहुशो धर्मान् प्रजापति-प्रकाशितान् ।
भूयो हैमवती देवी पप्रच्छ विनयान्विता ॥ १

धर्मक्षेत्रे जगत् क्षेत्रे यत्र भवाश्रिताह्यहम् ।
क्षेत्रपालान् स्फुट ब्रूहि तस्मिन्नेकाम्रके वने ॥ २

एव देव्या वच श्रुत्वा प्राह देव पितामह ।
अद्यावतरण भूय सर्वागम-समागमम् ॥ ३

## ब्रह्मोवाच

वापी शङ्करनिर्मणा यस्मिन् काले प्रतिष्ठिता ।
तदाऽसौ भगवान् शम्भुरनन्त पुरुषोत्तमम् ॥ ४

समाजे[1] सुरसघस्य क्षेत्रपाल चकार स ।
तत प्रभृत्यसौ विष्णु क्षेत्र रक्षेच्छिवाज्ञया ॥ ५

देवा स्वभागमश्नन्ति यातुधाना न हिसका ।
सुख वत्स्यन्ति मुनयस्तपो-विघ्न विवर्जिता ॥ ६

सिद्धार्थज्ञानसम्पन्नास्ते तु ज्ञानगतिं गता ।
स्वादुमूलफलाहारा शाकपानीयभोजिन ॥ ७

अस्मिन् क्षेत्रवरे पुण्ये ब्रह्मेन्द्रवसवार्च्चिते ।
सदा सन्निहितो विष्णुरनन्तबलपौरुषः ॥ ८

अनन्त-वासुदेवेति नाम्ना देवगणै स्तुत ।
अनेक युगपर्यन्त पालयत्यमितद्युति ॥ ९

चक्रपाणिर्गदापाणि दैत्यान्तकरण स्वयम् ।
त्रयीमूर्त्तिधरः श्रीमान् क्षेत्रपाल स्वय हरि ॥ १०

---

1. V—समीक्षे ।

## ब्रह्मोवाच

भविष्यति कृत प्रान्ते प्रभुर्दाशरथिर्हरि ।
दशग्रीव निहन्तासौ गोप्ता क्षितिभृताम्वरः ॥ ११
अभिषिच्यानुज तस्य दानवेन्द्रस्य राघव ।
विभीषण च रक्षार्थं नियुञ्जानो हराश्रमम् ॥ १२
तत प्रभृत्यसौ क्षेत्र पालयिष्यत्यहर्निशम् ।
तस्यैवाज्ञाकरा वीरा सपश्यन्ति वरानने! ॥ १३
दु काया निभृता भीमा रामनिर्देशकारिण ।
महेश्वरा महावीर्या शिवस्य वशवर्त्तिन ॥ १४
भविष्यन्ति त्रयस्तत्र क्षेत्रपाला महौजस ।
पौलस्त्या परमोदारा वीर्यवन्तो मदोत्कटा ॥ १५
महोत्साहा महासत्त्वा शिवाराधनतत्परा ।
द्वारास्तु परलोकस्य इहलोकफलप्रदा ॥ १६
नामधेय प्रवक्ष्येऽह तेषामेव पृथक् पृथक् ।
सुकेशी माल्यदा नाम्ना तस्य पुत्रो महोदर ॥ १७
महोदरस्य दायादश्छिन्नशीर्षो महाबल ।
विभीषणस्य निर्द्देशाद् उत्तराशाधिपोऽभवत् ॥ १८
पालयत्युत्तरक्षेत्र भविष्येऽमरविक्रमः ।
पूज्यो मान्यो नमस्कार्यो वरदो दीप्तविग्रह ॥ १९
तस्य पूजाविधान च वक्ष्येऽह वरवर्णिनि! ।
मासि मार्गशिरे प्राप्ते कृष्णपक्षे चतुर्द्दशी ॥
गत्वा सपूजयेत् तत्र निशाया सुसमाहित ।
गन्धै पुष्पैस्तथा धूपैर्नैवेद्य मधुपायसै ॥ २१
महिषैश्छागलैर्मेषैरन्यैर्वा वलिकर्मभि ।
तोषयेत् त प्रयत्नेन रामशासन-तत्परम् ॥ २२
सतुष्टे च भवेत् स्वस्ति पुरे राष्ट्रे नृपे जने ।
मन्त्र तस्य निवोधेद येन तुष्टि प्रजायते ॥ २३
ददात्यभिमता सिद्धि सदा भक्तियुताय स ।
करोति विमला बुद्धि परलोक-प्रबाहिनी ॥ २४

ॐ पौलस्त्याय नमस्तेऽस्तु भीमाय च यशस्विने।
शिव शासनयुक्ताय क्षेत्रपालाय ते नम ॥ २५

प्रयच्छ मेऽभय वीर भक्ताना हितमाचर।
रुद्रस्याज्ञामिमा तुभ्य स्मर स्वस्ति-प्रदायक ॥ २६

अनेन मन्त्रयोगेन तुष्टिर्भवतु पुष्कला।
तुष्टश्च कुरुते शान्ति नगरस्य नृपस्य च ॥ २७

क्षेममारोग्यमैश्वर्यं नोपसर्गभय क्वचित्।
ददात्येष निसदिग्ध स सतुष्टो विपर्य्ययम् ॥ २८

तस्मात् सर्वप्रयत्नेन पूजितव्यो हि वत्सरे।
क्षेत्रपालार्च्चनात्सम्यक् तुष्टो भवति शङ्कर ॥ २९

प्रतिवर्षमिय पूजा कर्त्तव्या सुहितेप्सुभि ।
विनश्यति भय चोग्रमग्निमारुतसम्भवम् ॥ ३०

फाल्गुने शुक्लपक्षस्य चतुर्द्दश्या प्रयत्नत ।
पूर्वोक्तेन विधानेन सपूज्य शिवतत्पर ॥ ३१

स्मरेन्मन्त्र पृथक् तस्य पूजान्ते सुसमाहित ।
ॐ नमस्ते परवीरघ्न! सर्वदुष्टनिसूदन! ॥ ३२

वलिमेत समश्नुहि त्व प्रयच्छाभय पुरे।
क्षेममारोग्यमतुल दुर्भिक्ष्य-भयवर्जितम्।
कुरक्षेत्रे महावीर क्षेम मे परमार्च्चित. ॥ ३३

## ब्रह्मोवाच

अथ दक्षिणदिक्पाल वक्ष्येऽह गिरिनन्दिनि!।
पुरा ब्रह्मोद्भवो विप्रो हेतिर्नामा[1] प्रजापति ॥ ३४

तस्य वशधरा सप्त माणिभद्रोऽग्रजः किल।
उपयेमे वरा भार्यां यक्षा पौरकटकटाम्[2] ॥ ३५

रूपयौवनसम्पन्ना सौभाग्यरतिलालसाम्।
रेमे स च तया सार्द्धं सुचिर चित्रकानने ॥ ३६

1 V—त्वेति नाम्ना।

2, V—पौरकटकटी।

कदाचित् ता वने स्थाप्य सत्वर जयता वर[1]।
ययौ यक्षेश्वर द्रष्टु कैलास भूधरोत्तमम्॥ ३७

माणिभद्रे गते तत्र एकाकिन्या वरस्त्रियाम्।
यातुधानो महाभीमो ह्यगमद् दुष्टचेतस ॥ ३८

मायया माणिभद्रस्य रूप धृत्वा प्रयत्नत ।
उवाच मधुर श्लक्ष्ण प्रिया पौरकटकटाम्॥ ३९

नाह भद्रे! गमिष्यामि हित्वा त्वा विजने वने।
कारयेच्चात्र वास च त्वत् कृते चारुहासिनि! ॥ ४०

इत्येवमुपसगम्य गाढ तामालिलिङ्ग सः।
प्रसभ रमयामास समुन्नीय स राक्षस ॥ ४१

यथेष्टमुपभुञ्जन्त विमेषमुपलक्षिता।
व्रीडिता चाभवत् साध्वी अपूर्वोऽय रतो मम॥ ४२

इत्युक्ता त विहायाशु को भवानिति चाब्रवीत्।
धिगित्याचारभ्रष्टोऽसि परदाराभिमर्षक ॥ ४३

निन्द्यो निन्द्यतर क्रूरो निस्त्रप स्वात्ममूढधी ।
अनार्य कुत्सिताचार सवलोकबहिष्कृत ॥ ४४

अपसर्प सुदुर्बुद्धे आत्ममृत्यु न बुध्यसे।
इत्येव वदमाना सा भत्सयन्ती निजा तनुम्॥ ४५

अपश्यत् त विसर्पन्त सद्यो गर्भ दधार सा।
अतीव दुखिता साध्वी सोत्कम्पा च ससाध्वसा॥ ४६

उत्ससर्ज तदा गर्भ त वने समवेक्षत।
पूर्वं देह कुमारस्य अञ्जनोचय सन्निभम्॥ ४७

रौद्र शकटचक्राक्ष हरित् श्मश्रु विमोहितम्।
त विहायागत् साध्वी माणिभद्रान्तिक शिवा॥ ४८

प्रस्थिता ता समीक्ष्यासौ प्राह नम्रानन शनै ।
पुरत प्राञ्जलिर्भूत्वा पुरयामि यशस्विनि! ॥ ४९

सा उवाच विशालाक्षी लज्जमाना अधोमुखी।
नाह पुत्र परिप्स्यामि त्वत्तो जात दुरात्मन ॥ ५०

---

1 V—जय अम्बर।

योऽसौ गर्भस्तु सम्भूत सद्य एव विवर्जित ।
सोऽसौ त्रपाकरो जातस्त्यक्त्वेन सुखमेधते ॥ ५१

तयोरेव विवदतोर्नेमिघोषा प्रशुश्रुवु ।
सुतेनान्तर्दधे रक्ष सद्योजात सुखावह[1] ॥ ५२

समागत्य ददर्शासौ स्वा भार्यां पथि रोदतीम् ।
किमित्याह सुसभ्रान्ता रथोत्प्लुत्य सुकुण्डली ॥ ५३

माणिभद्र स्फुरत्युच्चै केनेद विप्रिय कृतम् ।
गन्धर्वासुरयक्षैर्वा विद्याधरमहोरगै ॥ ५४

येन केन विमानेन नासौ जीवति दुर्मति ।
स्फुटमाख्याहि वृत्तान्त परिभूयसि केन चित् ॥ ५५

सा उवाच शनैरेव कल्मषोपहता सति ।
न वेद्मि नामजात्यादीन् दुराचारस्य तस्य हि ॥ ५६

भवता सदृश रूप कृत्वा नामादिक शठ ।
वञ्चयित्वा अनार्येण् चारित चिरसचितम् ॥ ५७

स मया विदित सद्यो दुराचारो विमूढधी ।
पुत्रमुत्पादित सद्य तेनैव सह जग्मिवान् ॥ ५८

दुष्टाह दूषिताचारा परपुसि समागता ।
दु शीला च कुलाङ्गारा दूषिता सर्वकर्मभि ॥ ५९

यशोहीना महापापा असती निन्दिताधमा ।
विशेऽह पावके दीप्ते सद्यस्त्यक्ष्यामि जीवितम् ॥ ६०

विषमालोड्य पास्यामि उद्बन्धन-जलादिभि ।
विक्रोशन्ती सुदीनात्मा आत्मन स्त्रियमीक्षताम् ॥ ६१

उवाच मधुर श्लक्ष्ण किचित्कोपवशोऽप्यभूत् ।
लम्बाख्य दुष्ट चारित्र्य शशाप[2] परिकोपित ॥ ६२

अदुष्टा दूषिता यस्मात् तस्मात् त्व न भविष्यसि ।
उक्तमात्रे ज्वलत्सद्यो यातुधानो बलै सह ॥ ६३

त पुत्र न दहत्यग्निर्मुने शापभयार्दित ।
तस्थे तत्र महारण्ये एकाकी स कुमारक ॥ ६४

---

1 C, V—सुखावहम् ।

2. A₂—शशाङ्क ।

रुरोद वनमध्ये स पितृमातृविवर्जितः।
अनाथो विजनेऽरण्ये क्षुधार्त्त परिवेपथु ॥ ६५

त शिशु विजनेऽपश्यद् राक्षसस्तु विभीषण ।
आदाय सोऽगमल्लङ्का जुगोप च पपाल च॥ ६६

लम्बाननसुत ज्ञात्वा लम्बगोधेति सञ्ज्ञितम्।
कृत नामस्थित लङ्का यावद् रावणसायुधे[1] ॥ ६७

रावणे निहते पापे रामेणाक्लिष्ट-कर्मणा ।
अभिषिक्तस्तदाकाले लङ्काया तु विभीषण ॥ ६८

सिद्धकार्य स देवस्तु विभीषणमथाब्रवीत् ।
अति दुर्वादलश्यामो राम कमललोचन ॥ ६९

लम्बाननसुत वीर कुरु एकाम्रके वने।
दक्षिणस्यस्या दिशः पाल विभीषण ममाज्ञया॥ ७०

लम्बगोध ततश्चासावब्रवीद् परमार्थवित् ।
वीरैकाम्रक-क्षेत्रस्य शाधि दक्षिणतो दिश ॥ ७१

स्वाम्यादेशाद् उवाचेद का वृत्तिमुपकल्पय।
राम प्राह परा पूजा क्षेत्रपालत्वमाप्नुहि॥ ७२

पूर्वोक्तेन विधानेन पूजा तस्यापि कीर्त्तिता।
आषाढे मासि सप्राप्ते कृष्णपक्षे चतुर्द्दशी॥ ७३

गत्वा निशि विधानेन सर्वोपस्करणान्वितः।
ॐ नमस्ते क्षेत्रपालाय नम पौरकटकटे॥ ७४

शेषोद्भव ! नमस्तुभ्य गोप्ता क्षेत्रवर त्विदम्।
बलिमेत समश्नुहि सर्वदुष्टान्निशामय॥ ७५

सन्तु पुष्टा शिवा स्वस्था एतद् हि शिवशासनम्।
तमेव पूजयित्वा तु प्रार्थयित्वा नरोत्तमा.।
कृतकृत्या भविष्यन्ति सर्वा बाधा विवर्जिता.॥ ७६

---

1. —सयुधे।

ब्रह्मोवाच

त्रय एव समाख्याताश्चतुर्थं श्रृणु चानघे ! ।
सुकेशी तनयो वीरो नाम्ना तु सुजय स्मृतः ।। ७७

तस्य पुत्रो महान् आसीत् लोहजघ प्रतापवान् ।
विभीषणसहायोऽसौ दुर्जय शत्रुतापन ।। ७८

स पश्चिमदिशो भागे पालयश्च व्यवस्थित ।
कार्त्तिके मासि सप्राप्ते कृष्णपक्षे[1] चतुर्द्दशी ।। ७९

तत्रास्य पूजा कर्त्तव्या सर्वकामफलप्रदा ।
पूर्वोक्तेन विधानेन वलिकर्मादिमाचरेत् ।। ८०

सद्भावभावनायुक्तो भवेत् पूर्णमनोरथ ।
ॐ नमस्ते प्रभव प्राज्ञ दुष्टाशेष-निसूदन ! ।। ८१

शान्तिद शान्तिकृच्छान्तो महत् स्वस्त्ययनप्रद.[2] ।
निरातङ्को वय नाथ भवन्त शरणागता ।। ८२

प्रसीद शिव सकल्प लोहजघ नमोऽस्तु ते ।
अनेन मन्त्रयोगेन पूजाकर्म वलिक्रिया ।। ८३

कुर्वन्तो नावसीदन्ति सत्यमेतच्छिवोदितम् ।
एतत् स्वस्त्ययन पुण्य महोत्पातविनाशनम् ।। ८४

सर्वदुष्टोपशमन[3] ज्वररोगार्त्तिनाशनम् ।
अग्नि-चौरभयध्वसी उल्काशनि-निवारणम् ।। ८५

कौमारग्रह सञ्जाता रेवती वृद्धरेवती ।
अभिचाराश्च कुष्माण्डान् राक्षसान् ब्रह्मराक्षसान् ।। ८६

पिशाचानवधूताश्च हन्ति सर्वानुप्रदवान् ।
बालपीडाकरान् दुष्टान् नाशयेच्च न सशय ।। ८७

चत्वारश्च महावीर्या क्षेत्रपाला प्रकीर्त्तिता ।
प्रवदन्ति सदा ह्येते वरदा. कामरूपिणः ।। ८८

---

1 V—यदा कृष्ण ।

2 V—स्वत् सयप्रद ।

3. A₃—सर्वपापप्रशमन ।

बाह्ये चाभ्यन्तरे वापि जलेष्वनलभूमिषु।
वृक्षान्तरिक्षे गेहे वै उद्यानेष्वप्यगोचरे ॥ ८९
मठे वापि तथा क्षेत्रे देवतायतनेष्वपि।
व्यवहारेषु सर्वेषु यज्ञोत्सवक्रियादिषु ॥ ९०
प्रभवन्ति समस्तेषु कार्याकार्येषु सर्वदा।
नक्त मध्यंदिने चैव सन्ध्ययोरूभयोरपि ॥ ९१
क्षेत्रपाला. प्रशसन्ति धर्माधमान् शुभाशुभान्।
तस्मात् सर्वप्रयत्नेन पूजनीया सदा हिते ॥ ९२
कृत्तिवास जगद वासस्त्वष्टमूर्त्ति प्रपूजनात्।
क्षेत्रपाले प्रसन्ने च प्रसन्न स्यात् तु शङ्कर[1] ॥ ९३
ते पूज्या सतत वन्द्या नमस्कार्या शुभप्रदा।
सर्वपापहरा धन्या मनोरथफलप्रदा ॥ ९४
विरूपाक्ष स्वय यत्र क्षेत्रे सन्निहित सदा।
त क्षेत्र पालयेद् यस्तु तत कोपाधिक स्मृत ॥ ९५
क्षेत्रपालाननभ्यर्च्च्य य सिद्धिमभिवाञ्छति।
नास्य सिद्धयन्ति सिद्धार्था न च तुष्यति शङ्कर ॥ ९६
वृथा तस्य क्रिया सर्वा गर्भमश्वतरी यथा।
अर्च्चयेद् वन्दयेद् यस्तु क्षेत्रपालान् प्रयत्नत ॥ ९७
सोपचारा कृता येन पूजा तेषा फलप्रदा।
तेन दत्त हुत चेष्ट तेन चाराधित. शिव ॥ ९८
अविघ्नास्तस्य कर्माणि सदा पूर्णा मनोरथा।
एव भविष्यमाख्यात किमन्यच्छ्रोतुमिच्छसि ॥ ९९

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया चतुर्थेऽशे क्षत्रपालोत्पत्तिर्नाम षष्टितमोऽध्याय ।[2]

---

1 V साह शकरः।

2. $B_1$, $B_2$, V—चतुर्थेऽशे क्षेत्रपालोत्पत्तिर्नाम चतुर्दशोऽध्याय ॥

# एकषष्टितमोऽध्यायः

**असित उवाच**

क्षेत्रपालोद्भव श्रुत्वा किमाह गिरिनन्दनी।
तदहं श्रोतुमिच्छामि कथयस्व ममाग्रत[1]॥ १

**सनत्कुमार उवाच**

कथयामि महाभाग यत् त्वं पृच्छसि मा द्विज ।
शृणुष्वेकमना भूत्वा सर्वपापहरा कथाम् ॥ २
क्षेत्रपालोद्भवं श्रुत्वा प्राह देवी पितामहम्।
ब्रूहि यद्यस्ति भो ब्रह्मंश्चरितं तत्र मङ्गलम् ॥ ३
एतत् श्रुत्वा वच तस्या प्राह ब्रह्मा इद वचः।
शृणु देवि प्रवक्ष्यामि भविष्य लिङ्गपूजनम्[2] ॥ ४
द्वापरे भविता देवि राजा नाम्ना युधिष्ठिर ।
कृष्ण सहायमासाद्य सर्वशत्रुनिसूदनः ॥ ५
तस्य भ्राता महावीर्यो नाम्ना भीम इति स्मृत ।
सर्वशास्त्रपरो धीमान् शिवभक्तिपरायण ॥ ६
सोऽपि हत्वा बहून् सख्ये कुरुपाण्डवयोर्नृपान्।
क्षयार्थं तस्य पापस्य पृच्छद् वै ब्राह्मणानिदम् ॥ ७

**भीम उवाच**

भो ब्राह्मणा महाभागा धर्मज्ञा सशितव्रता ।
केन पुण्य-प्रभावेन न यास्ये यमसदनम् ॥ ८
कुत्र लिङ्गार्च्चनं पुण्य सर्वपापप्रणाशनम्।
अल्पधर्मो बहुतर कथयध्व ममानघा. ॥ ९

---

1 $A_2$, V—मम प्रभो।

2. C—भविष्यल्लिङ्गपूजनम्।

### ब्राह्मणा ऊचु

दक्षिणस्योदधेस्तीरे एकाम्रकवन स्मृतम्।
तस्मिन् पुण्यमये क्षेत्रे लिङ्गस्याराधन कुरु॥ १०

इति तेषां वच श्रुत्वा भीमो भीमपराक्रम ।
भ्रातॄन् वै कथयामास करिष्यामि महाव्रषम्॥ ११

गमिष्यामि महाक्षेत्रमेकाम्रकमिति विश्रुतम्।
सर्वपापघ्नमतुलं सर्वोपद्रवनाशनम्॥ १२

सर्वशान्तिकर पुण्य सर्वलोकाभिवन्दितम्।
सर्वदेवगणैः सार्धं यस्मिन् देवोऽस्ति शङ्कर ॥ १३

इति तद्वचन श्रुत्वा स तु राजा युधिष्ठिरः।
प्राहेदं वचन देवि! भीम वीरवर [तदा॥ १४

गन्तासि कथमेकाकी यास्येऽहमपि तत्र वै।
नकुलसहदेवौ तु अर्जुनस्तु गमिष्यति॥ १५

वय सर्वे गमिष्याम क्षेत्रराज शिवप्रियम्।
आराधयामस्तत्रेश शङ्कर गिरिजापतिम्॥ १६

इत्युक्तस्तरसा राज्ञा भीमोऽसौ भ्रातृभि सह।
आजगाम महाक्षेत्र सर्वदेवगणैर्वृतम्॥ १७

दृष्ट्वा तत्र महादेव लिङ्गमूर्त्ति निरामयम्।
बिन्दूद्भवजले स्नात्वा अष्टमूर्त्त्यंर्च्चन क्रमात्॥ १८

गन्धै पुष्पैस्तथा धूपै कृत्वा पूजा महेश्वरम्।
प्राहेद वचन भीमो राजान धर्मनिष्ठितम्॥ १९

युधिष्ठिर! महाबाहो! प्रासाद भास्करप्रभम्।
करिष्ये देवदेवस्य आज्ञापय महाप्रभो॥ २०

### ब्रह्मोवाच

भीमस्य वचन श्रुत्वा पाण्डुपुत्रो युधिष्ठिर.।
इति चाज्ञापयामास जिष्णु वायुमितौजसम्॥ २१

भीमेन कथित यत्तु तत् कर्त्तास्मो महामते!।
इत्थ विचार्यमाणे तु भीमसेनो नृप बली॥ २२

प्रासादार्थं महेशस्य उद्योगमकरोत तदा ।
एतस्मिन् अन्तरे काले देवदेवो जगद्गुरु ।। २३
उवाचान्तर्हिता वाणी भीमसेन महाबलम् ।
भीम ! भीम ! महावाहो ! शशाङ्क कारयिष्यति ।। २४
कुरु प्रासादमन्यत्र सर्वत्र समसस्थिति[1] ।
इति तस्य वच श्रुत्वा देवदेवस्य शूलिन ।। २५
उवाच वचन भीम कुत्र कर्त्तास्मि भो प्रभो ।
एतच्छ्रुत्वा महादेव प्रोवाचादौ वचस्तदा ।। २६
यमेश्वरादद्दूरेण नैर्ऋत्येन समाश्रिते ।
धेन्वन्तरसहस्रैके कुरु देवालय शुभम् ।। २७
महादेववच श्रुत्वा भीमसेनो महाद्युति ।
प्रासादमकरोत् तत्र गुरु च रुचिरद्युतिम् ।। २८
युधिष्ठिरोऽर्जुनश्चैव नकुलश्च महामति. ।
सहदेवस्तदाकार्षीत् प्रासाद सुमनोहरम् ।। २९
सर्वे ते पूजयामासुर्गन्धै पुष्पैर्महेश्वरम् ।
गोभूहिरण्यवासोभी रौप्यरत्नहर्यादिभि ।। ३०
इत्थ बहुविधा पूजा भीम कृत्वा महेश्वरम् ।
कृताञ्जलिपुटो भूत्वा वाक्यमेन प्रचक्रमे ।। ३१
ॐ नमस्तेऽस्तु जगन्नाथ ! भूताना वरदायक ।
ध्यानसूक्ष्मस्वरूपोऽसि देवदेव ! जगत्पते ।। ३२
उमानाथ ! निराकार ! निर्गुणस्त्व महाप्रभो ! ।
गुणवान् गुणभोक्तासि भूताना सुखकारक ।। ३३
हेमकूटगिरेर्नाथ कैलासगिरिनायक ।
ब्रह्माविष्णुस्वरूपाय रुद्राय च कपालिने ।। ३४
दक्षक्रतुविनाशाय हेतुस्त्व गिरिजापते ! ।
सर्वानन्दकरस्त्व तु सर्वेषा प्रपितामह ।। ३५
सर्वज्ञानस्वरूपस्त्व विभो सर्वार्थसाधक ! ।
नमस्तेऽनन्तरूपस्त्व नमस्ते त्रिपुरान्तक ।। ३६

---

1 V—मम संस्थिति ।

नमस्तेऽस्तु महादेव कोटिब्रह्माण्डधारक ।
आकाशस्त्व तथा वायुरग्निरापस्तथा मही ॥ ३७

भूधरस्त्व तथा मेघ पापदस्त्व सरित्पति ।
शक्रस्त्व वरुणस्त्व च कुवेरस्त्व तथा यम ॥ ३८

सूर्यस्त्वमुडुनाथस्त्व नक्षत्राणि तथा ग्रहा ।
पातालस्त्व तथा स्वर्गश्चाधरूर्ध्वं महेश्वर ।
पाहि मा परमेशान ! देवेश ! मदनान्तक ! ॥ ३९

## ब्रह्मोवाच

देवदेवो जगन्नाथ पार्वतीशस्ततोऽम्बिके ! ।
भीमेन पूजितो देव उवाच मधुर प्रभु ॥ ४०

भीमसेन महाबाहो वर यन्मनसेच्छसि ।
तद् वृणुष्व प्रयच्छामि वरदोऽहमिहागत ॥ ४१

## भीम उवाच

वर देहि महादेव ! तव भृत्योऽस्मि सर्वदा ।
अस्य लिङ्गस्य पार्श्वे च सर्वदा तिष्ठ शङ्कर ॥ ४२

युधिष्ठिरार्जुनाभ्या च सहदेव नकुलेन च ।
पूजिताना च लिङ्गाना सान्निध्य तरसा व्रज ॥ ४३

भीमस्येद वच श्रुत्वा साक्षाद् देवो महेश्वर ।
मेघगम्भीरया वाचा प्रोवाच प्रहसन् शिव ॥ ४४

## श्री शकर उवाच

सर्वदात्र न तिष्ठामि दिनमेक महामते ।
माघमासे च सप्राप्ते शुक्लपक्षे हरेर्दिने ॥ ४५

तिष्ठामि तवपार्श्वे वै इत्युक्त्वा गतवान् शिव ।
भीमेश्वर इति ख्यातस्तस्य नाम्ना वभूव ह ॥ ४६

लिङ्गस्येम शृणुष्वाम्ब ! मन्त च कथयामि ते ।
यस्य दर्शनमात्रेण नरो याति शिवालयम् ॥ ४७

ॐ भीमेश्वर नमस्तेऽस्तु भीमसेनेन पूजित ।
त्राहि मा पातकाद् घोराद् भीमरूप नमोऽस्तु ते ॥ ४८

तत्रेत्थ पञ्चलिङ्गानि सन्ति देवि ! शिवप्रिये ! ।
सर्वपापविनाशाय मङ्गलाय च देहिनाम् ॥ ४९

## सनत्कुमार उवाच

इत्थ बहूनि लिङ्गानि सन्ति तत्र हराश्रमे ।
तीर्थानामष्टषष्टीना फलदानि च तानि ते ॥ ५०

तीर्थानि तानि वक्ष्यामि शृणुष्वेकाग्रमानसे ।
कैलास सर्वतीर्थाना वरिष्ठ प्रथम शुभम् ॥ ५१

वृषध्वज मण्डलेश मरुजाङ्गलक तत ।
कर्णिकार कनखलमाकाश च प्रभासकम् ॥ ५२

वाराणसी विश्ववनमवन्ती च रसातलम् ।
कायारोह कुरुक्षेत्र नैमिष देवदारुकम् ॥ ५३

कैरात देविका चैव हरिश्चन्द्र महालयम् ।
प्रयाग परली लङ्का यमलिङ्ग त्रिसन्ध्यकम् ॥ ५४

कालाञ्जर च केदार काश्मीर मरुकेश्वरम् ।
माकोट सप्तगोदा च श्रेष्ठ सागरसङ्गमम् ॥ ५५

गङ्गाद्वार भद्रकर्ण विन्ध्याम्रातकशर्वकौ ।
रुद्रकोटि सौम्यवन सेतु च करवीरकम् ॥ ५६

अट्टहास शकृत्कर्ण गया चापि महावनम् ।
महेन्द्र हृषित चैव सुवर्णाख्य च भैरवम् ॥ ५७

भस्त्रापद त्रिदण्ड च पुरचन्द्र च पुष्करम् ।
महेश्वरामरेशौ च नेपाल नकुलेश्वरम् ॥ ५८

गन्धमादनभूतेशौ हेमकूटभवामुखौ ।
छागलाण्ड च विरज स्थलेश्वर-जलेश्वरौ । ५९

पारेश्वर च श्रीशैलमिदमेकाम्रकाननम् ।
अष्टषष्ट्य इमे तीर्था शिवस्यातीव वल्लभा ॥ ६०

येषु पञ्चत्वमापन्ना नरा यान्ति शिव पद्म ।
एतत् सर्व यथोद्दिष्टा. शास्त्रत शिवसम्मताः ॥ ६१

एकाम्रके पुण्यकाले प्रविशन्ति यथेच्छया ।
एकाम्रकानन पुण्य क्षेत्र बिन्दूद्भव सर ।। ६२

एकोनकोटिलिङ्गात्मा कृत्तिवासादि मुक्तिद ।
अष्टषष्टितमा देवाः पुराणे परिकीर्त्तिता ।। ६३

कृत्तिवास जगद्वास यत्र वै पर्युपासते ।
अहो मोहस्य[1] माहात्म्य दुर्विज्ञेय सुरासुरै ।। ६४

स्थिते दृग्गोचरे देवे जनो यद् याति किल्विषम् ।
किञ्चिदुक्त मया ब्रह्मन् ! ब्रह्मणा परिकीर्त्तितम् ।। ६५

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया चतुर्थेऽ शे भीमेश्वरानुकीर्त्तन नाम एकषष्टितमोऽध्याय[2] ।।

---

1 $A_2$—महोस्य ।

2. $B^1B_2$, V—चतुर्थेऽ शे भीमेश्वरानुकीर्त्तन नाम पञ्चदशोऽध्याय ।

# द्विषष्टितमोऽध्यायः

सनत्कुमार उवाच

गुह्याक्षरमिद श्रुत्वा पुन प्राह पितामहम् ।
पुराणमक्लिष्टमनघ मन श्रोत्र-सुखावहम् ॥ १

अतीतानागत चैव वर्त्तमान निदर्शनम् ।
यत् किंचिदस्ति चाख्यान तन्मे ब्रूहि पितामह ! ॥ २

देव्या एव वच श्रुत्वा ब्रह्मा लोकपितामह ·
मुहूर्त्त ध्यानमाविश्य प्रोवाच वदताम्बर ॥ ३

ब्रह्मोवाच

आसीत् कृतयुगे देवि ! सिद्धभूतिर्महागण ।
सर्वागमज्ञो विद्वाश्च शिवाराधन तत्पर ॥ ४

असौ पर्यंवरद् भक्त्या देवदेव महेश्वरम् ।
सपश्यदतिसहृष्टो महाबलपराक्रम ॥ ५

एव प्रमुदिताश्चासौ स्थिते कैलासपर्वते ।
बहुकालोऽस्य सजातो भव-सस्मरणेन च ॥ ६

अतीव शिवभक्तोऽसौ सिद्धभूति सुसाधक· ।
सिद्धभूति समो देवि! शिवभक्त स्थित पुरा ॥ ७

नाद्यापि वर्त्तते लोके न भविष्ये भविष्यति ।
अद्यापि तत्समो लोके शिवतत्त्वपरायण ॥ ८

ज्ञानविज्ञानयुक्तो यो वेदवेदाङ्गतत्त्ववित् ।
वक्ष्यामि तस्य माहात्म्य शृणु देवि ! शिवप्रिये! ।
य पुरा शिरसा नम्र चकार मधुसूदन ॥ ९

श्री पार्वत्युउवाच

कुत्र स्थितो मधुरिपु कथ चक्रेऽस्य वन्दनम् ।
इद रहस्य मे ब्रूहि यदि मेऽनुग्रहस्तव ॥ १०

## ब्रह्मोवाच

शृणु देवि! रहस्य मे सिद्धभूतिर्गणो गत[1]।
एकाम्रकवन दिव्य द्रष्टुमीशस्य लिङ्गकम्॥ ११
स दृष्ट्वा तत्र मा देवि! पूजयन्त महेश्वरम्।
भुञ्जीत तस्य नैवेद्यमित्युवाच महागण॥ १२
अग्राह्य देवनैवेद्य लिङ्गस्येद श्रुत मया।
किमर्थ भुज्यते ब्रह्मन्नथोवाचाहमम्बिके!॥ १३
सिद्धभूते इद लिङ्ग साक्षाद् ब्रह्म सनातनम्।
तेनास्य पुण्य नैवेद्य ग्राह्य मम सदा शृणु॥ १४
इत्युक्त्वा ब्रह्मनैवेद्य तस्मै दत्वाऽब्रुव त्विदम्।
सिद्धभूते इम देहि नैवद्य विष्णवेऽमलम्॥ १५
स त निनाय वैकुण्ठ यत्रास्ते गरुडध्वज।
एतन्मध्ये जहुर्देवि! किञ्चित् सप्तर्षयोऽमला॥ १६
किचिन्नून स त दृष्टवा प्रोवाचेद जनार्द्दन।
सिद्धभूते किमाश्चर्यं नून ब्रह्मकरार्पितम्॥ १७
स तूचे भो प्रभो विष्णो अपराध क्षमस्व मे।
किंचित्सप्तर्षिभिर्नीत नैवेद्य पुण्यवर्द्धनम्॥ १८

## विष्णु उवाच[2]

सिद्धभूते नमस्तुभ्य यस्मात् पाणौ तवास्ति च।
नैवेद्य लिङ्गराजस्य अथ वक्ष्यामि तेऽनघ!॥ १९
इत. पर तु नैवेद्य तस्य लिङ्गस्य शोभने।
यो मा नार्प्य नरो भुक्ते भविता तस्य रौरवम्॥ २०
इत्युक्त्वा सिद्धभूति[3] स पुन. पुनर्ननाम ह।
भुक्त तदा श्रिया दत्त नैवेद्य कृत्तिवासस.॥ २१
सिद्धभूतिमथोवाच विष्णु सत्यपराक्रम।
एकाम्रकवने तस्मिन् ममार्थे शिवसन्निधौ॥ २२

---

1 V—सिद्धभूतिमयोगत।

2 A2,C—श्रीकृष्ण उवाच।

3 A,C—सिद्धभूति।

सिद्धभूते! सदा तिष्ठ पार्वतीशोपकारणात्[1]।
अथो मामुपहसत् काले स कस्मिन् कालचोदित । २३
चुकोपो मा तदा तस्मै शापमुज्झति तत्क्षणात् ।
सिद्धभूते! दुराचार! दुर्मेध! कुलपांशुल! ॥ २४
तिर्यग् योनि व्रजाशु त्व येन मामवमन्यसे ।
निस्तोये निर्जने देशे[2] कृष्णसर्पो भविष्यसि ॥ २५
शशाप पार्वती पार्वती क्रुद्धा महादेव समागत[3]।
तदोवाच शिव साक्षात् सिद्धभूतेरनुग्रहात् ॥ २६
प्रसीद देवि! भक्तोऽय सुदान्तो धर्मवत्सल ।
मद्भक्तस्तव पुत्रोऽय क्षन्तुमर्हसि सुव्रते! ॥ २७
शापस्यास्य च मोक्षत्वमिदानीमनुचिन्तय ।
तमुवाच स्मित तूमा शापोऽमोघो मया कृत ॥ २४
तथापि भवत. प्रीत्या तस्य मुक्तिमिमा शृणु ।
नित्योदय महच्छैले तृणगुल्मविवर्जिते ॥ २९
ज्वलन्त इव सूर्यादि रौद्रे तमसि दारुणे ।
सपत्स्यते महाव्यालस्त्वण्डमध्यात् भुजङ्गम ॥ ३०
त्रयोदशाहे सप्राप्ते तस्माद् भक्षयते शिखी ।
बर्हिकुक्षिगत सर्पो नासौ जीर्यत्यहर्निशम् ॥ ३१
शर्म न प्राप केकी स व्याकुलेनान्तरात्मना ।
विकल वर्हिण पश्यन् पुलिन्दो वनचारक ॥ ३२
जघान इषुणैकेन शिखी भूमौ पपात ह ।
तमादाय मुदा युक्तोऽप्यहिमार विहङ्गमम् ॥ ३३
निजवेश्म तदायातो यत्रास्ते गृहिणी प्रिया ।
सा तत्र निद्रया सुप्ता पार्श्वे तस्यास्तमाक्षिपत् ॥ ३४
ततो जगाम स्नानार्थं शवरः प्राणहिसक ।
अथ लब्धान्तर सर्पो निर्जगामोदराद् बहि ॥ ३५

---

1 A2, C, V—पार्वतीशापकारणात् ।

2. V—स्थाने ।

3. A2,C—समीपत. ।

विहाय गतसत्व त बर्हिण कालपीडितम् ।
दृष्टा ता शवरी सुप्ता व्यावत्तवदना तदा ॥ ३६

छिद्रान्वेषी विवेशाशु वल्मीकमिवचोदरे ।
निद्रायिता सुसुप्ता ता वामास्य जठरे अहि ॥ ३७

अचिरेणैव कालेन वुबोध सा तपस्विनी ।
अवसद् भर्त्तृणा सार्धं तापयन्ति पति गुणै ॥ ३८

दधार गर्भं सुश्रोणी ! शुक्रशोणित सम्भवम् ।
तस्य वीयादसौ सर्पो गर्भे मानुषता गत ॥ ३९

सुषुवे दशमासेन पुत्र सर्वाङ्गसुन्दरम् ।
जहसुस्तनय प्राप्य पिता मातापि बान्धवा ॥ ४०

कृतनामा कुमारोऽय मयूराङ्ग-जवच्छवि ।
अवसत् पितुरभ्यासे नित्ययुक्तोऽप्यतन्द्रित ॥ ४१

शताब्द साधिक जात वनमन्यत् चचार स ।
विहरन्त यथाकाल द्यावापृथ्वी समन्तत ॥ ४२

सहस्राब्द शतमेक पर्यटस्तत्स पश्यति ।
एकाम्रकवन पुण्य महाप्रलय परिणतम् ॥ ४३

यत्रावसत् स्वय साक्षात् कृत्तिवासास्त्रिलोचन ।
एकोनकोटिलिङ्गेश सुरासुर-नमस्कृत ॥ ४४

तत्र दृष्ट्वा विभु स्वामी ततो जातास्य निष्कृति ।
तत्रैव च वर प्राप्य भविष्यति विकल्मष ॥ ४५

एवमुक्त तदा देवी शितिकण्ठ-समीपत ।
सोऽपि श्रुत्वा इद वाक्य देह तत्याज तत्क्षणात् ॥ ४६

अहित्वमथ मानुष्यमनुभूत चिरायु स ।
तत स दीर्घकालेन शवरत्वमुपागत ॥ ४७

पर्यटन् स इमा पृथ्वीमनेकगिरिकन्दराम् ।
क्षुत्क्षामो मलिनो ग्लानि शुष्ककण्ठोष्ठतालुकः ॥ ४८

दुष्कृते च क्षये क्षीणे सुकृते च विवर्द्धिते ।
तदापश्यदसौ क्षेत्र स्वर्णकूट हराश्रमम् ॥ ४९

रेमे स शवर क्षेत्रेऽप्यवसद् विगतक्लम ।
कन्दमूलफलैर्वृत्ति शाकमूलफलादिभि ॥ ५०

व्रतोपवासैर्विविधै शिवपूजामहर्निशम् ।
कुर्वाणः सुचिर काल शार्पानवृत्तिमाप स ॥ ५१

स ददर्श महालिङ्ग स्फुरन्तमनलप्रभम् ।
नीललोहित-भीमाभ पावकादित्यवर्च्चसम् ॥ ५२

उग्र चोमापति भर्ग त्र्यम्बक त्रिपुरान्तकम् ।
तथाभूत समापश्यन् शवरस्तुष्टमानसः ॥ ५३

पर स्थानमवष्टभ्य वल्कलामल-धारिण ।
नातिदूरेण देवस्य पुरत समवस्थित ॥ ५४

सद्यो विकल्मषो शुद्धो दिव्यस्मृति-समन्वित ।
स्तुत्वा च वाग्भिरिष्टाभिरिद वचनमब्रवीत् ॥ ५५

देवाहमिच्छाम्यत्रैव स्थातु तव समीपत ।
पश्यन्त भवतो लिङ्ग स्थास्यामि तव सन्निधौ ॥ ५६

देव प्रीतमना भूत्वा प्राह गम्भीरया गिरा ।
सिद्धभूते ! वरान् कामान् तव दास्यामि चानघ ! ॥ ५७

शाश्वत व्रज मत्स्थान जरामरणवर्जितम् ।
या गतिर्यज्वना यागे ध्यानेन योगिना भवेत् ॥ ५८

ता गति विश रुद्रत्व शिवाख्य शाश्वत पदम् ।
स्थातव्या तव कीर्त्तिस्तु शास्वती मम सम्मता ॥ ५९

करिष्यत्यर्च्चन नित्य कलौ त्वत् सन्ततिर्मम ।
इत्याकर्ण्य शिवेनोक्त वाढमित्येव सोऽवदत् ॥ ६०

किञ्चिद् विज्ञापयामीश ! यति तेऽनुग्रहोऽस्ति मे ।
अत्र वास्तव्यमिच्छेय भवत पुरतो विभो ! ॥ ६१

अनेनैव च रूपेण शवरेश वदन्तु माम् ।
एवमस्त्विति भगवास्तत्रैवान्तरधीयत ॥ ६२

इत्येवमिदमाख्यात यद् भविष्य भविष्यति ।
माहात्म्य शवरेशस्य पुराणप्रवर शुभम् ॥ ६३

ये नमन्ति शवराख्य ते नमस्यन्ति शङ्करम् ।
प्रीतो भूयान्महादेव इत्यूचे पद्मयोनिज ।। ६४

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां संहिताया शवरेशमाहात्म्ये चतुर्थेऽ शे द्विषष्टितमोऽध्याय [1] ।।

समाप्तोऽय चतुर्थांश ।

1 B[1], B[2], C—शवरेशमाहात्मेषोडशोऽध्याये चतुर्थोऽ'श समाप्त ।।

पञ्चमांशारम्भ

# त्रिषष्टितमोऽध्यायः[1]

व्यास उवाच

श्रुत्वेव परम धर्ममसित प्राह तत्त्ववित् ।
भूय एव महाप्राज्ञ ! माहात्म्य शस क्षेत्रजम् ॥ १

इति तस्य वच श्रुत्वा असितस्य मनोरमम् ।
सनत्कुमारो भगवान् ध्यात्वा चिरमुवाच ह ॥ २

सनत्कुमार उवाच

ईश्वरस्तु पुराचष्टे ब्रह्माणमृषिसत्तम ।
ब्रह्मोवाच इद ध्यात्वा वाक्य देवी शिवप्रियाम् ॥ ३

ब्रह्मोवाच

शृणुष्वावहिते देवि ! सत्य कथयतो मम ।
भौमस्वर्गमिद रम्य भुक्तिमुक्तिफलप्रदम् ॥ ४

युगानुरूपतो धम सत्य धैर्य बल क्रिया. ।
पूर्वात् पूर्व गरीय स्याद् ह्रस्यमाने च ह्रस्यति ॥ ५

सत्यक्रिया प्रणश्यन्ति निबोध बहुधागतिम् ।
असत्य-सभृता भूमि सकृत् साधु स्मृति स्थिति ॥ ६

अल्पायुषो जनास्तत्र अल्पतेजा द्विजातयः ।
जिह्मवीर्याहि राजानो वैश्या वृत्तिविवर्जिता ॥ ७

शूद्रा शुश्रूषाहीनाश्च अनुलोमाश्चतुर्युगे ।
भविष्यन्ति युगस्यान्ते ह्रस्वमात्रावशिष्यते ॥ ८

अधर्मप्रवणा मर्त्या अल्पशस्या वसुन्धरा ।
उच्चानीच गमिष्यन्ति सिता कृष्ण युगक्षये ॥ ९

---

1, B1, B2, V—पञ्चमांशे प्रथमोऽध्यायः ।

अमेध्या मेध्यतां यान्ति प्रलीयन्ते सुरासुरा ।
विपरीता प्रवर्त्तन्ते ग्रहा युगविपर्यये ॥ १०

एव चाप्यक्षय ज्ञेय स्वाभाविकमनुत्तमम् ।
एकाम्रकवन श्रीमन् महाप्रलय-सस्थितम्[1] ॥ ११

महद्रसोपविष्ट तत्कालाग्नि-भयवर्जितम् ।
तदा ह्येवाप्यशेष्या[2] च कोटिलिङ्गावृता क्षिति ॥ १२

क्षेत्रोऽय प्रवरे लोके प्रवदन्ति मनीषिण ।
अष्टषष्ट्यस्तु ये तीर्था मर्त्त्यलोकेषु दुर्लभा ॥ १३

क्षये चानुप्रलीयन्ते क्षेत्रे नात पर भवेत् ।
विश्वेश्वर पर. साक्षाद् विश्व सहृत्य सस्थित[3] ॥ १४

सविभक्तात्मनश्चैव लिङ्गमूर्तिरनामय ।
रुद्रतेजोद्भवो वह्निस्तत्क्षेत्र नोपसर्पति ॥ १५

उल्कापाताश्च निर्घाता न बाधन्ते कथचन ।
निर्घातोत्पातवाताश्च निर्जलाऽशनयस्तथा ॥ १६

प्रवदन्ति[4] जगत्कृत्स्नमृते चैकाम्रक वनम् ।
अहो क्षेत्रस्य माहात्म्य स्मृतमात्राघहारि च ॥ १७

देवाना च शरण्योऽयमितरेषा च का कथा ।
कृत्तिवासाप्रसादेन न भय विद्यते क्वचित् ॥ १८

अन्योऽन्य न विरुध्यन्ति समभित्रारिबान्धवा ।
शरण्य शरण देव कोटिलिङ्गेश्वर विभुम् ॥ १९

परिणाम-विहीन च गुणातीताव्ययाक्षयम् ।
स्वयभुव च शास्तार परम वरद शिवम् ॥ २०

सर्वभावाश्रय देव को न पूजयते शिवम् ।
विशेषेणोत्तम क्षेत्र भौमस्वर्गमुदाहृतम् ॥ २१

---

1. $A_2$, C, V—महाप्रलयपरिणतम् ।
2 V—दहचेषाऽप्यशोष्या ।
3. V—सस्थिति ।
4. V—प्रभवन्ति ।

कीर्तित कृत्तिवासस्य नोपसर्पति किल्विषम् ।
पर परेश गतिद स्रष्टारमजमव्ययम् ॥ २२

स्वर्णकूट-स्थित नाथ कृत्तिवास जगद्गुरुम् ।
ये भजन्ति विरूपाक्ष न ते प्रकृतमानवा[1] ॥ २३

रुद्र रुद्रात्मका ज्ञेयास्तेभ्योऽपि च नमो नम ।
द्यावापृथिव्या ये देवास्तिर्यगूर्ध्वं व्यवस्थिता ॥ २४

पूजिता नात्र सन्देहः कृत्तिवासैकपूजने ।
मूर्त्तामूर्त्तौ च ये सन्ति हेयाहेय गुणोत्तरे ॥ २५

अर्च्चितास्तु समग्रास्ते कृत्तिवासैकपूजने ।
बिन्दुसरजले स्नात्वा दृष्ट्वा वै पुरुषोत्तमम् ॥ २६

चन्द्रचूड समालोक्य कृतकृत्योऽभिजायते ।
तेन यष्ट हुल दत्त येन चाराधित शिव ।
दत्त चराचर तेन येनाराधित शङ्कर ॥ २७

तेपुस्तपस्ते जुहुवुश्च होम सस्नुश्च तीर्थेषु निरन्तरेषु ।
जग्मु स्वक्षेत्राणि फलप्रदानि ये
चार्च्चयन्ते शिवमव्यय च ॥ २८

विना मन्त्रै पुराणोक्तै कृत्तिवासोऽर्च्चित सकृत् ।
अव्यलीकेन चित्तेन सोकार जनपावकम् ॥ २९

उच्चारयेच्छिव यस्तु स याति परमा गतिम् ।
कृत्तिवास समुद्दिश्य दत्त येन द्विजातये ॥ ३०

स जयत्यखिलान् दुर्गान् भङ्गशब्दो न जायते ।
भूमि गाश्च सुवर्णानि श्रद्धायुक्तेन चेतसा ॥ ३१

कृत्तिवास समुद्दिश्य ब्राह्मणाय ददाति य ।
अक्षयश्चाव्यय प्रोक्तो दानस्यान्तो न विद्यते ॥ ३२

मनसा देवमुद्दिश्य तोय विप्रकरे सृजेत् ।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥ ३३

इह जन्मनि श्लाघ्योऽसौ देहान्ते शिवता व्रजेत् ।
शिवधर्मेषु येऽभिज्ञा वैशेषिक विनिर्णया ॥ ३४

---

1. A₂ V—प्रकृति मानवा ।

सिध्यन्ति सिद्धयो व्यग्रा आगमोक्ता पृथग्विधा ।
सम्भवन्ति न लीयन्ते ईश्वराणामिति स्मृता ॥ ३५

ब्रह्म साक्षात् स्वय लिङ्ग स्वर्णकूटाद्रि-सस्थितम् ।
कृत्तिवासेति गायन्ति मुनयः सिद्धचारणा ॥ ३६

प्रासाद यस्तु वै कुर्यात् श्रीमदेकाम्रके वने ।
कीर्त्तिख्यापिता तस्य यावच्चन्द्रार्कमेदिनी ॥ ३७

यावद् देवा प्रलीयन्ते यावद् ब्रह्माच्युत श्रुति ।
तावत् प्रासादवृत्तास्य कृतस्यैकाम्रके वने ॥ ३८

व्रतोपवासनियमाद् दानानि विविधानि च ।
कृत्तिवासाश्रमे दत्तमक्षय्य परिकीर्त्तितम् ॥ ३९

भग्नस्फुटितसस्कार लिङ्गनाथ परिग्रहम् ।
पुनरर्च्च्यतम कुर्यात् साधवो धर्मसञ्ज्ञितम् ॥ ४०

स्वय कृतात् शतगुण प्रवदन्ति मनीषिण ।
असख्येय-गुणान् भोगान् शाश्वती तन्निवासिभि ॥ ४१

अत्रैवोदाहरतीममितिहास पुरातनम् ।
ब्रह्मणा निर्मितः पूर्वं कृते ब्रह्मेश्वरो विभुः ॥ ४२

त्रेताया च स शक्रेण द्वापरे पवनेन च ।
कलौ धर्मेण त देव भूयो ब्रह्मा चकार ह ॥ ४३

चतुर्युगे च सस्थान सोमेन वरुणेन च ।
वसुभिर्वित्तपालैश्च सूर्याचन्द्रमसादिभि ॥ ४४

सेवित वसुभिर्नित्य प्राप्त चाभिमत फलम् ।
ऐहिक वापि मुक्तिश्च या सुरैरपि दुर्लभा ॥ ४५

एव ब्रह्मेश्वरे लिङ्गे लिङ्गे त्रिभुवनेश्वरे ।
एकादश च पञ्चाष्टौ प्रासादाश्च गतागता ॥ ४६

सपत्स्यन्ते गता जीर्णा प्रासादाः शिवनिर्मिता ।
चान्द्री द्युति च बिभ्राणास्तुङ्गतोरणमालिन ॥ ४७

कृत्तिवास स एकस्य सप्राप्ते तु कलौ युगे ।
प्रासादशतपर्यन्त पुराणे परिपठ्यते ॥ ४८

कृते वसति भूतात्माप्यन्तर्धान स्वरूपत[1]।
प्रकाशमेति त्रेताया स्वमेवात्मानमात्मनि ॥ ४९

पूजयन्ति सुरा साध्या विश्वेदेवा मरुद्‌गणा ।
आदित्या वसवो रुद्रा यक्षविद्याधरोरगा ॥ ५०

मानवेन्द्राश्च मनुजा मनुष्या पितरस्तथा ।
द्वापरेऽपि अनेकैश्च जुष्ट लिङ्ग स्वयम्भुवम् ॥ ५१

प्रासादेन कलौ प्राप्ते जुष्ट पुण्येप्सवो ध्रुवम् ।
अनाद्यन्तमविच्छिन्न पूजयिष्यन्ति शङ्करम् ॥ ५२

स्वर्णकूट समासाद्य ससारोत्तारक हरम् ।
यथार्थं ये न पूजन्ति ते मूढा भवसम्भवे ॥ ५३

श्रुताध्ययनसम्पन्नो वृथा तस्य परिश्रम ।
येन नाराधितो देव कृत्तिवासा पिनाकधृक् ॥ ५४

महादेव भजेद् यस्तु हित्वा पापादिकान् बहून् ।
स व्रजेत् परम स्थान सनातनतर परम् ॥ ५५

अनेक सिद्धदेवाश्च बहवस्तु कृतालया ।
सन्त्यत्र कामदा धन्या पुराणे परिनिष्ठता ॥ ५६

## ब्रह्मोवाच

प्रदक्षिणत्रय चात्र कविभि समुदाहृतम् ।
निखिल क्षेत्रराजस्य चाश्वमेधायुतं फलम् ॥ ५७

माघमासे च सप्राप्ते कृष्णपक्षे चतुर्दशी ।
स्नात्वा बिन्दूह्रदे तस्या शिसूक्तहृदा जपन् ॥ ५८

पर्यक्रामत युक्तात्मा मेरु सूर्यं इवापर ।
जन्मार्जित च यत्पाप क्षालयेच्च महत्तरम् ॥ ५९

प्रदक्षिणेन चैकेन कोटिजन्मान्तरे कृतम् ।
द्वितीयेन द्वितीयस्य तृतीयेन त्रिजन्मनि[2] ॥ ६०

1 V—स्वरूपभृत् ।
2 V—त्रिजन्मन. ।

क्षालयत्याशु यत्पाप महापातकिनोऽपि ये।
ते यान्ति शिवलोक वै कृत्तिवास-प्रसादत ॥ ६१

प्रदक्षिणत्रये पूर्णे त्रिकोटिजन्मसाधिते।
उच्चारयेदिम मन्त्र पुरत कृत्तिवासस ॥ ६२

ॐ जयत्वमरनाथ ! त्व देव ! सिद्धानवन्दित ! ।
अखण्डमण्कलाकार कारणाशेषकारण ॥ ६३

महाध्यान ! अनादे ! भो जगद्वीज ! जगत्पते ! ।
प्रसीद परमेशान ! स्थिराभक्तिरिहास्तु मे ॥ ६४

अथ दण्डनमस्कारैर्निपत्य शिरसा भुवि।
शिवसूक्त शिवमन्त्र नववारान् प्रकल्पयेत् ॥ ६५

गन्धै पुष्पैस्तथा धूपैर्नैवेद्यै शक्तितोऽर्च्चयेत्।
स्तुयान्नामसहस्रैस्तु तुण्डिप्रोक्तैर्महेश्वरम्।
एव कृत्वा लभेद धीरो नरः क्षेत्रप्रदक्षिणम् ॥ ६६

भूमिलाभ यशो लाभ क्षेममारोग्य-सम्पद ।
नृपपूजा-समायुक्ता आपूर्यन्ते मनोरथाः ॥ ६७

यावज्जीव सुखाभोगी देहान्ते शृणु या गति ।
कुलैकविंशमुधृत्य पुर्वप्रेतपितामहान् ॥ ६८

अपि पातकसयुक्तास्तारयेद् अखिलान् कुलान्।
हसबर्हिणयुक्तैश्च विमानैश्च सहावृत ॥ ६९

पताकाध्वजमालैश्च किंकिणीजालमण्डितैः।
वेणु-वीणा-मृदङ्गैश्च सुरगीतैरनेकशः ॥ ७०

दिव्यगीतै रसोन्मत्तैरप्सरो व्यजनै शुभै ।
सर्वकामसमृद्धीश्च गत्वा कैलासमन्दिरम् ॥ ७१

नाना सुखानि दिव्यानि भुञ्जते शिव-सम्मतात्।
एतत्पूण्य पापहर धन्य दु स्वप्ननाशनम् ॥ ७२

क्षेत्रप्रदक्षिण देवि ! सद्भिराचरित शिवम्।
चतु सागर पर्यन्तं यै कृत त्रिः प्रदक्षिणम् ॥ ७३

क्षेत्रप्रदक्षिणस्यास्य कला नार्हन्ति षोडशीम्।
समाप्तवरयज्ञस्य वाजिमेधस्य यत् फलम् ॥ ७४

तत्फल समवाप्नोति क्षेत्रस्यास्य प्रदक्षिणे ।
अन्य क्षेत्रेषु यत्पा कर्मणा मनसा गिरा[1] ।। ७५

तत्क्षालयेन्महापाप क्षेत्रस्यैव प्रदक्षिणे ।
स्वर्णकूटकृताना च पापाना वरवर्णिनि ! ।। ७६

क्षयाय नास्ते मार्गोऽन्य शिववाक्य-प्रमाणत ।
क्षेत्रस्य पूर्वे दक्षे च पश्चिमे चोत्तरे तथा ।। ७७

क्रोशैकमण्डलाकार कुर्यात् क्षेत्रप्रदक्षिणम् ।
तत्र मौनधृतस्यैव उपवास-रतस्य च ।। ७८

छत्रोपानहहीनस्य गतिर्भूयाच्छिवोदिता ।
क्षेत्रप्रदक्षिणमृते धर्मो नास्ति शिवप्रिये ! ।
क्षेत्रप्रदक्षिणेनैव लभते शाश्वती गतिम् ।। ७९

ब्रह्मोवाच

शिववाक्यमिद पुण्य लोकानुग्रहक परम् ।
य पठेत परया भक्त्या पाठयेद् वा समाहित ।। ८०

सर्वपाप-विनिर्मुक्तो हरलोके महीयते ।
नि सशय महाभोगी [कामचारी भवेद् ध्रुवम् ।। ८१

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया पञ्चमेऽशे क्षेत्र-प्रदक्षिण नाम त्रिषष्टितमोऽध्याय [2] ।

1 $A_2$, V—क्रियते मानवेन हि ।

2. $B_1$, $B_2$, V—पञ्चमेऽशे क्षेत्रप्रदक्षिण नाम प्रथमोऽध्यायः ।

# चतुःषष्टितमोऽध्यायः[1]

## श्रीसनत्कुमार उवाच

एव हैमवती देवी श्रुत्वा क्षेत्रप्रदक्षिणम् ।
ब्रह्माणमिदमूचे तु हर्षोत्फुल्लविलोचना ॥ १

पुनर्ब्रूहि जगतकर्त्तरेतत्क्षेत्रमाहात्म्यकम् ।
कृपया परया देव ! न हि तृप्यामि शृण्वती ॥ २

भवानीवचन श्रुत्वा देवोऽसौ पद्मजस्तदा ।
उवाच वाक्य माधुर्यं कैलासाद्रौ शिवाग्रत ॥ ३

## ब्रह्मोवाच

कथयामि महाक्षेत्रे छायायात्रामथोत्तमाम् ।
भक्तिनम्रा शृणुष्वेमा दुर्गे ! पापविनाशिनीम् ॥ ४

पौर्णमास्याममावास्या द्वादश्या हरिवासरे ।
चतुर्दश्या च सक्रान्त्या छायायात्रा समाचरेत् ॥ ५

आदौ बिन्दुह्रदे स्नात्वा नित्यकर्म समाप्य च ।
गत्वा शिवालय मन्त्त भूयाद् देवाग्रमण्डपे ॥ ६

ॐ नमस्ते कृत्तिवासाय सर्वज्ञ अपराजित ।
छायायात्रा करिष्येऽहमनुज्ञा दातुमर्हसि ॥ ७

एवमुक्त्वा ततो देवि ! पश्येद् गणपति वृषम् ।
दृष्ट्वा कल्पद्रुम तस्माच्छ्रीकण्ठ-लाङ्गलीशकौ ॥ ८

द्रष्टव्य च प्रयत्नेन देवी गोपालिनी शिवा ।
ततश्चण्डेश्वर दृष्ट्वा सोमसूत्रेश्वर तथा ॥ ९

व्रजेदुग्रेश्वर लिङ्गं भारभूतीश्वर तत ।
कार्त्तिकेय समालोक्य एकाम्रेश प्रणम्य च ॥ १०

---

1. $B_1$, $B_2$, V—द्वितीयोऽध्याय. ।

सोमनाथेश्वर तस्माच्छ्रीखण्डीश्वरमुत्तमम् ।
विश्वेश विमलेश च दर्दुरेश प्रणम्य च ॥ ११

ततश्चित्रेशगुप्तेशावनन्तेश्वरमेव च ।
राजराजेश्वर लिङ्ग तारक लड्डुकेश्वरम् ॥ १२

तत्र शक्रेश्वर दृष्ट्वा सावित्री नकुलीश्वरम् ।
चतुर्वक्त्रेश्वर पश्येन्निष्कलङ्क-शिवोत्तमे ॥ १३

अथामलकमूले तु दण्डपाणि विलोकयेत् ।
ॐकारेश परेश च परमार्थेश्वर तथा ॥ १४

भैरव भूतनाथ च हयग्रीवेश्वर तथा ।
शवरेश ततो बाहये वसुभद्रे-सुरेश्वरौ ॥ १५

स्वर्णकूटेश्वर देव्यारक्षुविन्ध्या[1] विभाण्डकम् ।
तत पश्येदीशानेश कृत्तिवासस्य नैर्ऋते ॥ १६

मित्रेश वारुणेश च देवीपादहरा तथा ।
ततो गत्वा महेशानि ! दृष्ट्वा नन्त-जनार्द्दनौ ॥ १७

अनन्तस्य च ! एशान्ये नीलकण्ठेश्वर पुन ।
महीश-मणिकर्ण्याशौ पश्येद् विल्वोदकेश्वरौ ॥ १८

तीर्थेश्वरमथो दृष्ट्वा तत्पार्श्वे विमलेश्वरम् ।
वटेशमथ रुद्रेश गणेश्वर-सुलोचनौ ॥ १९

ततो लक्ष्मीश्वर पश्येद् वालुकेश्वरमेव च ।
वैद्यनाथ समालोक्य रावणेश प्रणम्य च ॥ २०

ततो दक्षिणचण्डी च नारायणीमत परम् ।
ततो यमेश्वर पश्येद् यमदण्ड-विनाशनम् ॥ २१

कामाक्षी रामचण्डी च कापाली विकृताननाम् ।
वटुक भैरव चैव ब्रह्माणी च तत परम् ॥ २२

माहेश्वरी च कौमारी वाराही भैरवी तथा ।
ऐन्द्री च नारसिही च महामाया तत परम् ॥ २३

देवी कपालिनी नत्वा शिशिरेश महेश्वरम् ।
नीलकण्ठेश्वर चैव दृष्ट्वा स्पृष्ट्वा प्रणम्य च ॥ २४

---

1. V—विद्या ।

गोसहस्रेश्वरं चाथ परदारेश्वर हरम् ।
परदाराकृतं पाप दर्शने यस्य नश्यति ॥ २५

ईशानेशं तु तत्रैव तथा भद्रेश्वर शिवम् ।
तुङ्गेश्वर महादेव मरीचेश्वरमुत्तमम् ॥ २६

शिपिविष्ट माणिभद्रं विजयन्त विलोकयेत् ।
जयन्तेशं ततः पश्येद् उत्तरेश महेश्वरम् ॥ २७

तिस्रश्च योगिनीं दृष्ट्वा वामदेव वशिष्ठकम् ।
तत्रैव पश्येद् भीमेश देहिना भयनाशनम् ॥ २८

भीमादभयद लिङ्गमभयात् कुण्डलप्रभुम् ।
लिङ्गभद्रशिखं तस्मात् सुभद्राङ्गेश्वर हरम् ॥ २९

यक्षभक्ष्यकर लिङ्गमव्यग्रेश जलेश्वरम् ।
प्रथमेश समालोक्य पश्येच्छरजिदीश्वरम् ॥ ३०

तत॰ शत्रुजिदीश च पश्येद् विश्वजित तथा ।
तत कामजितं दृष्ट्वा अमृतेशमत॰ परम् ॥ ३१

स्वर्णजालेश्वरं चैव तत्रैव शवरेश्वरम् ।
कोटितीर्थेश्वरं दृष्ट्वा तत्पार्श्वे च सुरेश्वरम् ॥ ३२

तत पुण्यवने देवि! पश्येद् गौरीमनिन्दिताम् ।
तत्र केदारकुण्डे तु कुशैर्मार्जनमाचरेत् ॥ ३३

केदारे चोदक प्राश्य न पुनर्मानुषो भवेत् ।
केदारेशं समालोक्य मारुतेश्वरमेव च ॥ ३४

दृष्ट्वा सिद्धेश्वर सिद्धकूपे स्नान समाचरेत् ।
ततो मुक्तेश्वर दृष्ट्वा तत्र शक्रेश्वर हरम् ॥ ३५

वायुवरुणयोर्लिङ्गे दृष्टवाथ धनदेश्वरम् ।
तत्रैव पावकेश च चन्द्रेश वीक्ष्य मानव ॥ ३६

पश्येद् दैत्येश्वर लिङ्ग हिरण्यकशिपोर्विभुम् ।
तत्र इन्द्रेश्वर दृष्ट्वा पश्येत्तु जटिलेश्वरम् ॥ ३७

उत्पलेश महादेव ततो भीमेश्वर विभुम् ।
सूक्ष्मेश्वर मध्यमेश तथा चाम्रातकेश्वरम् ॥ ३८

स्नात्वा कपिलकुण्डेऽथ पश्येच्च कपिलेश्वरम् ।
तत्राष्टौ चैव लिङ्गानि दृष्ट्वा भीमेश्वर व्रजेत् ॥ ३९

युधिष्ठिरेश्वर तत्र भीमेश चार्जुनेश्वरम् ।
सहदेवेश्वर पश्येत् ततस्तु नकुलेश्वरम् ।। ४०

कुक्कुटेश समालोक्य पश्येद्रामेश्वर शिवम् ।
सीतेश च ततो दृष्ट्वा पश्येद्धनुमदीश्वरम् ।। ४१

लक्ष्मणेश समालोक्य लिङ्ग तु भरतार्च्चितम् ।
शत्रुघ्नेश ततो लिङ्ग लवेश्वरमनुत्तमम् ।। ४२

वाशिष्ठ वामदेव च जावालेश सुमन्तकम् ।
भूयो रामेश्वर पश्येत् परशुरामार्च्चित यत. ।। ४३

ततस्तु लावुकेश च दृष्ट्वा स्नायात् तु तद् ह्रदे ।
कपालमोचन लिङ्ग तत पश्येदतन्द्रित ।। ४४

भास्करेश च मेघेश ब्रह्मेश्वरमत परम् ।
ततो देवि ! नदीपारे गोकर्णेश विलोकयेत् ।। ४५

तत काली प्रणम्याथ हनुमन्त महोत्कटम् ।
बालीश च सुग्रीवेश पूर्वेश्वरमत परम् ।। ४६

नरसिंह महोदर मङ्गलेश्वरमेव च ।
ततस्त्रिभुवनेश च दृष्ट्वा मन्त्रमुदीरयेत् ।। ४७

ॐ नमस्तेऽस्तु महादेव ! नमस्ते शशिभूषण ! ।
छायायात्रा प्रयत्नेन त्वत्प्रसादात् कृता मया ।। ४८

देहि त्वत्पादभक्ति मे प्रसीद परमेश्वर ! ।
जन्मजन्मार्जित पाप विलय यान्तु[1] शङ्कर ! ।। ४९

पशून् देहि श्रिय देहि देहि सौभाग्यमुत्तमम् ।
पुत्र पौत्र प्रपौत्र च देहि मे त्रिपुरान्तक ! ।। ५०

एवमुक्त्वा ततो देवि ! क्षण निर्वाणमण्डपे ।
विश्रम्य च ततो यायात् स्वगृह पुण्यकृत्तम ।। ५१

शुक्लमाल्याम्बरधरो हविष्याशी भवेन्निशि ।
एव य कुरुते देवि ! छायायात्रामनुत्तमाम् ।। ५२

सर्वपापविनिर्मुक्तो शिवलोके महीयते ।
एकानि यानि पापानि तानि नश्यन्ति तत्क्षणात् ।। ५३

---

1 V—यातु ।

सर्वं कार्याणि सिद्ध्यन्ति कृत्तिवास प्रसीदति ।
लिङ्गाना दर्शन कृत्वा दद्याद् धारामपा किल ।। ५४
अक्षतैः पूजयेद् देवं पञ्चाक्षरमुदीरयन् ।
क्रम एष मया प्रोक्त श्रृणु त्व गिरिकन्यके ! ।। ५५

इमा यात्रा नर कृत्वा न मातुस्तनपो भवेत् ।
इमा य पठते नित्य छायायात्रा नरोत्तम ।
छायायात्राकृत पुण्य स प्राप्नोति न सशय ।। ५६

छायायात्रा पठन् यस्तु दद्यात् पिण्ड नगेन्द्रजे ! ।
पितरस्तस्य तुष्यन्ति कल्पकोटिशतान्तरम् ।। ५७

विशेषान्मोक्षदा देवि ! वैशाखस्य पौर्णमी ।
तत्र देवान् शतत्रिश दृष्ट्वा मुच्येत बन्धनात् ।। ५८

एषा रहस्या कथिता छायायात्रा मया शिवे ! ।
अत पर महेशानि ! किमन्यच्छ्रोतुमर्हसि ।। ५९

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया पञ्चमेऽशे छायायात्रा नाम चतु षष्ठितमोऽध्याय [1] ।।

---

1. $B_1$, $B_2$, V—पञ्चमेऽशेछायायात्रा नाम द्वितीयोऽध्याय ।।

# पञ्चषष्टितमोऽध्यायः

## श्रीपार्वत्युवाच

सम्यक् प्रोक्ता त्वया ब्रह्मन्! छायायात्रा तपोधन! ।
मनुजाना हितार्थाय इव पृच्छाम्यहं तव ॥ १

तत्र क्षेत्रे सुरश्रेष्ठ का का यात्रा महाफला ।
कासां च दर्शनेनैव शिवो नृणां प्रसीदति ॥ २

भविष्य ब्रूहि मे ब्रह्मन् सर्वज्ञस्त्वं तपोधन! ।
का का यात्रा भविष्यन्ति कस्तु वा कारयिष्यति ॥ ३

कथं देवस्य भविता प्रभावं तत्र कानने ।
एतदिच्छाम्यहं श्रोतुं प्रसादात् तव पद्मज! ॥ ४

## ब्रह्मोवाच

सम्यक् पृष्टं त्वया देवि! नृणां हितमनुत्तमम् ।
कथयिष्ये रहस्यं ते समाहितमना शृणु ॥ ५

एतदर्थं पुरा पृष्ठो मया तव पति शिवे ।
भक्त्या परमया तुष्टः स यदाह शृणुष्व तत् ॥ ६

कैलासे देववृन्दाना मध्ये नृत्याभिलाषिण ।
शम्भोर्ललाटाच्चन्द्रो वै भ्रष्टो भूमौ कलौ युगे ॥ ७

शिवभक्तो महातेजाः सर्वशत्रुनिसूदनः ।
आक्रम्य पृथिवीं सर्वां स तु राजा भविष्यति ॥ ८

शताष्टवर्षपर्यन्तं स एव पृथिवीपति ।
पृथिव्यां यानि लिङ्गानि पूजयिष्यति भक्तित ॥ ९

स तु राजा महाप्राज्ञो लिङ्गं त्रिभुवनेश्वरम् ।
आर्यया पूजया भक्त्या वाक्यै सन्तोषयिष्यति ॥ १०

तमुवाच तत शम्भु शृणु राजन् महामते! ।
तवार्थं स्थापिता ह्येषा मया कीर्त्तिरनिन्दिता ॥ ११

ब्रह्मणा विष्णुना पूर्व भास्करेण यमेन च ।
प्रासाद कारयिष्याम इति सम्प्रार्थितो ह्यहम् ।। १२

तदानीं तानुवाचाह चन्द्रमा मुकुटान्मम ।
भ्रष्टो भूत्वा भवेद्राजा स एव कारयिष्यति ।। १३

अधुना शुद्धभक्त्या च प्रासाद मम कारय ।
इत्युक्त्वान्तर्दधे शम्भु राजा विस्मय-मानस ।। १४

तत स भक्त्या राजा च माहेन्द्रसमये शुभे ।
विश्वकर्माणमाहूय प्रासाद कारयिष्यति ।। १५

कुन्द-कर्पूर-धवल दिव्यशूल विराजितम् ।
तोरणाभि समायुक्तं पताकाकुलसकुलम् ।। १६

प्राङ्गणैर्विततै शुभ्र साधु गोपुरशोभितम् ।
मणिभि सचित दिव्य शिवस्यापि मनोहरम् ।। १७

तत स राजा देवेश साष्टाङ्गेनावनीतले ।
प्रणम्य परया भक्त्या शिव शरणमागत ।। १८

ततस्त्वन्तर्हिता वाणी राजान भगवान् शिव. ।
वदिष्यन्ति इमा देवि ! लोकानुग्रहकारक ।। १९

## श्रीशङ्कर उवाच

मदङ्गभूतोऽसि श्रृणुष्व भूपते
भक्त्याह परितोषितस्तव ।
इतो व्रज त्व मम मन्दिर शुभ
ध्रुवं च कैलासमनुत्तम नृप ! ।। २०

कीर्त्तिस्तवैषा नरलोकरञ्जनी दिव्या
सदा स्थास्यति भूमिमण्डले ।
लिङ्ग सम ब्रह्मइद पुरातन
जानीहि मामत्र सनातन विभुम् ।। २१

चतुर्द्दश इमा यात्रा कुरुष्वात्र महीपते ! ।
यासा दर्शनमात्रेण प्रसन्नोऽह सदा नृणाम् ।। २२

मार्गशीर्षे शुभे मासे आदौ च प्रथमाष्टमी ।
तत्रैक मासे षष्ट्या तु मम प्रावरणोत्सवम् ।। २३

स्नपन पुष्य पौर्णम्यां तथा वन्दापना नृप ।
ततो मकरसंक्रान्तौ मल्लिङ्गे घृतकम्बलम् ।। २४

याश्रा मे माघ-सप्तम्या भास्करेश्वर-सन्निधौ ।
माघ कृष्णचतुर्द्दश्या शिवरात्रिव्रत मम ॥ २५

कुरुष्व नपशार्दूल! महास्नान महोत्सवम् ।
पुरा तुष्टेन च मया राघवाय महामते ॥ २६

वरो दत्तस्तदर्थ च यास्येऽह रथ-सस्थित ।
अशोकाख्यामिमा यात्रा कुरुष्व नृपपुङ्गव ॥ २७

रथस्थ तत्र मा दृष्ट्वा मम लोक व्रजेन्नर ।
चैत्रशुक्लचतुर्दश्या यात्रा दमनभञ्जिकाम् ॥ २८

मम कारय राजेन्द्र! श्रीतीर्थेश्वर-सन्निधौ ।
वैशाखस्य तृतीयाया लिङ्ग चन्दनभूषितम् ॥ २९

आषाढ शुक्लाष्टम्या तु पर्शुरामस्य सन्निधौ ।
नय मा तत्र यत्नेन शिविकास्थ त्रिलोचनम् ॥ ३०

ततो नृप! मदग्रे तु मण्डपे शयन मम ।
ततो यमद्वितीयाया यमनाथस्य सन्निधौ ॥ ३१

यात्रा कुर्यादथोत्थान सर्वलोक-सुखप्रदम् ।
चतुर्दशसु यात्रासु यो मा पश्यति मानव ॥ ३२

स याति मम लोक वै सप्तपूरुषसयुत ।
इदमुक्त्वा नृपश्रेष्ठ शम्भुरन्तर्दधे तदा ।
तथैव कृत्वा राजाऽसौ शैव गणमवाप ह ॥ ३३

## ब्रह्मोवाच

एवमेकाम्रके देवि! कलिकाले समागते ।
राज्ञस्त्रिभुवनेशस्य सम्बादस्तु भविष्यति ॥ ३४

तत्र एकाम्रके देवि! इमा यात्रा चतुर्दश ।
विलोक्य गतिमेष्यन्ति या सुरैरपि दुर्लभा ॥ ३५

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया पञ्चमेऽशे (चतुर्दशयात्रा विवरणो) नृपशम्भुसम्बादो नाम पञ्चषष्टितमोऽध्याय[1] ॥

---

1. $B_1$, $B_2$, C—पञ्चमेऽशे भविष्य नृपशम्भु सम्बादो नाम तृतीयोऽध्याय ।

# षट् षष्टितमोऽध्यायः

ब्रह्मोवाच

शृणु देवि ! भविष्यन्ति यात्रा वक्ष्यामि तेऽनघे ।
यासा श्रवणमात्रेण पुण्यभाग् जायते नर ॥ १

मार्गशीर्षे शुभे मासे यदा स्यात् प्रथमाष्टमी ।
तस्या शिवस्य प्रतिमा नयेत पापविनाशिनीम् ॥ २

चर्च्चरीशङ्खकाहालमृदङ्गमुरजस्वनैः ।
आरोप्य शिविकाया तु महोत्सव समन्विनाम् ॥ ३

एव नीत्वा महादेव तत्र वै पापनाशने ।
उद्धतै सलिलैर्दिव्यैश्चन्द्रचन्दनमिश्रितै ॥४

स्नापयेत्परमेशान पूजयेद् भक्तित शिवे ! ।
तदानी य शिव पश्येन्महोत्सवसमन्वितम् ॥ ५

स याति भवन शम्भोरिन्द्राद्यैरपि वाञ्छितम् ।
तत सायाह्न समये देव गर्भगृह नयेत् ॥ ६

मित्रावरुणयोर्देवि ! पूर्ववद् गमन पुन ।
इत पर महेशानि शृणु षष्टि महोत्सवम् ॥ ७

मार्गशुक्लस्य पञ्चम्या वस्त्रशुद्धि समाचरेत् ।
देवाग्रमण्डपे तानि वसनान्यधिवासयेत् ॥ ८

तत प्रभातसमये लिङ्ग तीर्थजलै शुभै ।
स्नापयित्वा महेशानि कुर्वीताथ महोत्सवम् ॥ ९

द्वाराग्रे पूर्णकुम्भ च छत्रचामरनिस्वना ।
तत पञ्चामृतैर्दिव्यै स्नायात् त्रिभुवनेश्वरम् ॥ १०

दिव्यै गोधूमचूर्णैस्तु दृष्ट्वा दिव्यजलै पुनः ।
ततस्तैर्दिव्यवसनै कुर्यात् प्रावरण शिवे ! ॥ ११

उपचारै षोडशभिर्भक्त्या देव प्रपूजयेत् ।
पश्येत् त्रिभुवनेश यः षष्ठ्या प्रावरणोत्सवे ॥ १२

ब्रह्महत्यादि पाषानि तस्य नश्यन्ति नान्यथा ।
सुकृत पदमाप्नोति योगिभिर्वाञ्छनीयकम् ।। १३

न भूयो भूमिमायाति दृष्ट्वा प्रावरणोत्सवम् ।
अथ शृणु प्रवक्ष्यामि स्नानवन्दापना विभो ।। १४

पुषमासस्य पौर्णम्या पुष्यानक्षत्र-सयुताम् ।
ऋक्षाभावे तिथौ कार्या शम्भार्वन्दापना शिवे ! ।। १५

मुक्तिदा सर्वलोकाना दिदृक्षूणा महात्मनाम् ।
चतुर्दशी निशामध्ये नवीनै कलशै शुभै ।। १६

आनयेत् तीर्थसलिल स्थापयित्वाधिवासयेत् ।
शुभे लग्ने ततो देवि ! लिङ्ग त्रिभुवनेश्वरम् ।। १७

स्नाप्य पञ्चामृतैर्दिव्यै घृष्ट्वा विल्वस्य चूर्णकैः ।
ततश्च तीर्थसलिलेर्गन्धपुष्पाक्षतार्चितै ।। १८

स्नापयेच्छ्रोत्रियो विप्रो रुद्राध्याय पठन् शुभम् ।
पुनर्जयजयेत्युक्त्वा पुष्पैश्च स्नापयेद् विभुम् ।। १९

ततो न्यासादिक कृत्वा पूजाकर्म समाचरेत् ।
अष्टाक्षरेण मन्त्रेण भवानीशङ्करौ शिवे ! ।। २०

सपूज्य परया भक्त्या दत्वा माला च सार्षपीम् ।
ततो वन्दापयेदेतौ घृतदीपैर्मनोहरैः ।। २१

पुष्पाणि विकिरेद् भूयो लोकाना पावनाय च ।
आशीर्वाद ततो दद्यात् पञ्चब्रह्म समुच्चरन् ।। २२

"अम्बे अम्बिक" इत्यादि मन्त्र देवि ! उदीरितम् ।
उपस्वास ? इति प्रोच्य तत्र भूपाय चेश्वरी ।। २३

ॐ नमस्ते परमानन्द ! सर्वज्ञ ! परमेश्वर ।
क्षमस्व जगता नाथ अपराध मया कृतम् ।। २४

इत्युक्त्वा प्रणमेद् भूमौ साष्टाङ्गेनावनीतले ।
तत पुण्याह वाक्य तु कुर्याद् भक्तिसमाहित ।। २५

अभिषेकमिम कुर्याद् यस्तु भक्तिसमाहितः ।
सोऽभिषिक्तो भवेद् राजा पृथिव्या नात्र सशय ।। २६

योऽभिषेकमिदं पश्येद् भक्त्या परमयाम्बिके ! ।
स याति परम स्थान यतो नावर्त्तते पुनः ।। २७

सकृद् बिन्दुह्रदे स्नात्वा सकृद् दृष्ट्वा जनार्दनम् ।
अभिषेक सकृद् दृष्ट्वा न भूयो योनिजो भवेत् ॥ २८

शृणु देवि ! महापुण्य देवस्य घृतकम्बलम् ।
तत्र कुर्याद् विभोर्लिङ्गे महोत्सवसमन्वितम् ॥ २९

दिव्यानि गव्य सर्पिषि पर्वाह्णे चाधिवासयेत् ।
तत सक्रमणे काले लिङ्ग पञ्चामृतै शुभै ॥ ३०

स्नात्वा तु सस्कृत दिव्य दद्याद् तद् घृतकम्बलम् ।
ततो गन्ध सुपुष्पाणि दत्वा वै पूजयेच्छिवम ॥ ३१

एव य कुरुते देवि ! लिङ्गे च घृतकम्बलम् ।
तस्य पापानि नश्यन्ति ब्रह्महत्यादिकानि च ॥ ३२

समाहितमना भूत्वा य. पश्येद् घृतकम्बलम् ।
स प्राप्नोति पर भोग यदाकाक्ष्य सुरैरपि ॥ ३३

शृणुष्वाथाघनाशाय यात्रा वै माघसप्तमीम् ।
यस्या दर्शनमात्रेण सूर्यलोक व्रजेन्नर ॥ ३४

सस्थाप्य शिविकाया तु देव त्रिभुवनेश्वरम् ।
छत्रचामरवाद्याद्यैर्नयेत् त भास्करेश्वरम् ॥ ३५

तत्र गन्धादिभिः पूज्य नैवेद्य तिलयावकम् ।
दत्वा तु प्रार्थयेल्लिङ्ग पूर्वोक्तविधिनाम्बिके ! ॥ ३६

तत. सायाह्नसमये देव निजगृह नयेत ।
यस्तु कुर्याद् इमा यात्रा पश्येद् वा माघसप्तमीम् ॥ ३३

स लोक प्राप्नुयात् सत्य प्रासादाच्छम्भुसूर्ययोः ।
भास्करस्य इमा यात्रा प्रयत्नेन विलोकयेत् ॥ ३८

सर्वपापविनाशाय सत्यलोकप्रदाप्तये ।
अथ वक्ष्ये शुभा यात्रा शिवरात्रीति विश्रुताम् ॥ ३९

शिवरात्रिव्रत कृत्वा चाण्डालोऽपि व्रजेच्छिवम् ।
शिवरात्रिव्रत नाम्ना सर्वत्र विहित शिवे ! ।
सर्वपापघ्नमतुल सर्वपुण्यविबर्द्धनम् ॥ ४०

पूजा त्रिभुवनेशस्य यामे यामे च कारयेत् ।
दुग्धेन दधिना चैव सर्पिषा मधुना तथा ॥ ४१

खण्डेन चैव देवेशि ! महास्नान च कारयेत् ।
क्षीरेण तत्पुरुष वक्त्र अघोर दधिना तथा ।। ४२

सद्योजात घृतेनैव मधुना वाममेव च ।
खण्डेनेशानमास्य तु स्नाप्य लिङ्ग प्रपूजयेत् ।। ४३

द्वात्रिशदुपचारैस्तु यामे यामे महेश्वरम् ।
वृष्टि च विल्वपत्राणा कारयेल्लिङ्ग-मूर्धनि ।। ४४

महावन्दापना कुर्याद् दीपवृक्षादिभि शिवे ! ।
एव य कुरुते विद्वान् यात्रा वै शिवरात्रिकाम् ।। ४५

सर्वपापविनिर्मुक्तो ध्रुव हि शिवमाविशेत् ।
एक पूजयते भक्त्या भक्त्या चान्य प्रपश्यति ।। ४६

तुल्यमेव फल ताभ्या भक्तिरेवात्र कारणम् ।
शिवरात्र्यास्तु यात्राया दर्शनेनैव मानवः ।। ४७

सर्वपापविनिर्मुक्तो शिवमाप्नोत्यसशय ।
एषा पापहरा यात्रा मयोक्ता किल पार्वति ! ।
अस्या दर्शनपूजाभ्या समानफलमिष्यते ।। ४८

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया पञ्चमेऽशे यात्राकथन नाम षट्षष्टितमोऽध्याय [1] ।।

---

1. B1, B2, V—पञ्चमेऽशे यात्राकथन नाम चतुर्थोऽध्याय ।

# सप्तषष्टितमोऽध्यायः

## ब्रह्मोवाच

अथ देवि ! प्रवक्ष्यामि यात्रा मुक्तिप्रदायिनीम् ।
यस्याश्च श्रवणेनैव सर्वपापक्षयो भवेत् ॥ १

अशोकाख्या महायात्रा[1] शम्भो सन्तोषवर्द्धनी ।
रामेण सार्द्ध समयस्तस्य शम्भोरभूत् पुरा ॥ २

देव त्रिभुवेश त समारोप्य रथोत्तमे ।
नयेच्छनै शनैर्भक्त्या लिङ्ग रामेश्वर प्रति ॥ ३

तदर्थं ब्रह्मणान्मन्त्र्य वनयाग तु कारयेत् ।
ततस्तु वर्धकी पुष्पवस्त्राद्यैश्चैव पूजयेत् ॥ ४

काष्ठाना छेदनार्थाय प्रेरयेत् त सुकर्मणि ।
तानि काष्ठानि चाहृत्य पताकाघण्टनि स्वनै ॥ ५

रथ तै कारयेच्छुभ्र चतुश्चक्र मनोहरम् ।
एकविशत्करोच्छ्राय षोडश करमण्डलम् ॥ ६

चतुस्तोरणसयुक्त सुवर्णकलशान्वितम्[2] ।
सौरभेयध्वज चैव त्रिशूलोपरिशोभितम् ॥ ७

चतुरश्व-समायुक्त ब्रह्मसारथिमुत्तमम् ।
दिव्यसिंहासन चैव कुर्यादेव रथोत्तमम् ॥ ८

एव रथोत्तम कृत्वा सर्वावयवसुन्दरम् ।
देवाना तेजसोद्भूत रथ त्रैलोक्यपूजितम् ॥ ९

देवैश्च वन्दन सर्वैर्नाम्ना देवदलनेति च ।
त देवदलन शम्भो स्यन्दन नन्दनोपमम् ॥ १०

मनोजव हैमवर्णं मुक्तादाम-विभूषितम् ।
हसर्वाहिण-सयुष्ट आलेख मुनिसेवितम ॥ ११

---

1. C—तु या यात्रा ।

2. $A_2$, C—सुवर्णकलश शुभम् ।

नानारत्नमयं दिव्य नानाधातु-विभूषितम् ।
सुचक्र सुधुर सौम्यमश्व परमशोभितम् ॥ १२

एव रथवर कृत्वा प्रतिष्ठाविधिमाचरेत् ।
देवानां दलन नाम्ना प्रतिष्ठाविधिमाचरेत् ॥ १३

शान्तो दान्तस्तपः शुद्धो वेदान्तार्थं विभावकः ।
श्रोत्रियो ह्यग्निहोत्रश्च वेदगर्भो जितेन्द्रियः ॥ १४

धीमान् सहिष्णुवान् सत्यो भिक्षाशी दमनो द्विजः ।
मन्त्रतत्त्वार्थविच्चैव प्रतिष्ठा-कर्मणि स्मृतः ॥ १५

न नास्तिकाय मूर्खाय कुण्डाय गोलकाय च ।
पवनव्याधि-युक्ताय ह्रस्वाय निन्दकाय च ॥ १६

एवं विधाय विप्राय पतिताय न कारयेत् ।
रथस्य उत्तरे भागे प्रतिष्ठामण्डपं शुभम् ॥ १७

बहुमण्डल[1]सयुक्त वेदिका मध्य-सस्थितम् ।
तत्र वै वेदिका मध्ये शुभ कुण्ड च कारयेत् ॥ १८

विधाय देहे मतिमान् भूतशुद्धि च मातृकाम् ।
शिवन्यासान् स्वदेहे च कृत्वा कर्माण्यशेषत ॥ १९

तत शैवाग्निसस्कार कृत्वात्र जुहूयात्सुधी· ।
विल्वपत्राण्यखण्डानि शत पञ्चाक्षरेण तु ॥ २०

देवी च गणचण्ड च कार्त्तिकेय विनायकम् ।
वृषं कल्पद्रुम चैव सावित्री तदनन्तरम् ॥ २१

प्रत्येकं तु शतेनाष्टौ भक्त्या परमयाम्बिके । ।
स्वनाम्नाश्च चतुर्थ्यन्त जुहूयाज्जातवेदसि ॥ २२

सर्पिषा च ततो देव पुनरष्टोत्तर शतम् ।
ततो वरुणपूजा तु कुर्यात्कुण्डस्य दक्षिणे ॥ २३

अथो कलशमादाय नवीन जलपूरितम् ।
गन्धपुष्पाक्षतान् क्षिप्त्वा रुद्राध्याय पठेत् सुधी ॥ २४

पञ्चब्रह्म ततो मन्त्रानथर्वशिरस तथा ।
ततस्तु वृषभ पूज्य गन्धमाल्याम्बरादिभि ॥ २५

---

1. $B_1$, V—बहुमण्डन ।

तेनैव वारिणाभ्युक्ष्य वृषभ रथमेव च।
त तु वाद्यादिक कृत्वा छत्रचामरकेतुभि ॥ २६

नयेत् शनै शनैश्चैव स्थापयेच्च रथोपरि।
रथस्य दक्षिणे भागे नन्दिन पूजयेत् तत ॥ २७

उत्तरे च महाकाल शूलिन भीमतेजसम्।
रथस्य पृष्ठभागे तु एकदन्त विनायकम् ॥ २८

अग्रे तु पूजयेद् देवि ! कुमार च सवाहनम्।
अनन्त चैव सूक्ष्मेश शिवोत्तममनन्तरम् ॥ २९

एकनेत्र चैकरुद्र त्रिमूर्त्ति तदनन्तरम्।
श्रीकण्ठ च शिखण्ड पूर्वादिषु क्रमाद् यजेत् ॥ ३०

सप्तम्याश्चैव मध्याह्ने सर्वमेतद् विधीयते।
सायाह्ने चैव सप्राप्ते मण्डयेत् रथमुत्तमम् ॥ ३१

किङ्किणीवेष्टित सर्वं पताकाभिर्विराजितम्।
छत्रचामर सयुक्त पुष्पमालावलम्बितम् ॥ ३२

इत्थ रात्रौ विधायाथ प्रभाते समुपागते।
स्नात्वा च सविधानेन[1] चक्रपूजा समाचरेत् ॥ ३३

भास्कर दक्षचक्रे तु वामे चन्द्रमस तथा।
सपूज्य परया भक्त्या ततो मन्त्रमुदीरयेत ॥ ३४

ॐ नमस्ते भानवे तुभ्य चक्रसस्थाय शूलिन ।
गमने शीघ्रगामी त्व भव विघ्नविवर्जित ॥ ३५

ॐ नमश्चन्द्रमसे तुभ्य चक्रसस्थाय शूलिन ।
गमने शीघ्रगामी त्व भव विघ्न विवर्जित ॥ ३६

चतुरस्तुरगाश्चाथ ऋग् यजु साम सज्ञितान्।
अथर्वाण समभ्यर्च्च्य मन्त्रानेतानुदीरयेत् ॥ ३७

ॐ ब्रह्मणः पूर्व-लपनात् सभूतस्त्व सनातन !।
ऋग्वेदाय नमस्तुभ्य वायुवद् गमन कुरु ॥ ३८

नमस्ते यजुषे तुभ्य नमस्ते चाश्वरूपिणे।
मम भक्तिफल देहि गमन शीघ्रमाचर ॥ ३९

---

1. V—स्नात्वाचम्य विधानेन।

सामवेद नमस्तुभ्य मद्भक्ति सफला[1] कुरु ।
कुरु कार्यं महेशस्य मनोवद् गमन चर ।। ४०

अथर्वाण नमस्तेऽस्तु शत्रुपक्षक्षय कुरु ।
ब्रह्मणा प्रेरितस्त्व च नाथ शीघ्र गमिष्यसि ।। ४१

ब्रह्माण पूजयेच्चाथ नित्य सारथिरूपिणम् ।
गायत्र्या चैव गन्धाद्यैस्ततो मन्त्र मनुस्मरेत् ।। ४२

नमस्ते ब्रह्मणे तुभ्य प्रजाना पतये नम ।
चोदयाश्वाश्च शीघ्रेण सूतवेशपरिग्रह ।। ४३

तत शान्त्युदक देवि ! सिञ्चेद्रथ समतत ।
भूय पृथिवीवीजेन रथ चैव तु पूजयेत् ।। ४४

पृथ्वीदेवि ! नमस्तुभ्य शिवानन्दप्रवर्द्धिनि ! ।
रथरूपधरासि त्व मरुद्वद् गमन कुरु ।। ४५

यथा पुरवधे देवि ! पुरा त्व शीघ्रगामिनी ।
तथा त्व रामचन्द्रस्य प्रीतये गमन कुरु ।। ४६

इत्युच्चार्य नमस्कृत्य प्रणमेत्तु धरा सुधी ।
रथ प्रदक्षिण कृत्वा ततो गच्छेद् यथेच्छया ।। ४७

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया पञ्चमेऽशे रथप्रतिष्ठाविधिर्नाम सप्तषष्टितमोऽध्याय[2] ।।

1. $A_2$—सफली, V—सफल ।

2 $B_2$, V—पञ्चमेऽशे रथप्रतिष्ठा नाम पञ्चमोऽध्याय

$B_1$—रथप्रतिष्ठाविधिर्नाम पञ्चमोऽध्याय. ।

# अष्टषष्टितमोऽध्यायः

ब्रह्मोवाच

शुभे लग्ने ततो देवि! देव त्रिभुवनेश्वरम् ।
नयेन्महोत्सव कृत्वा शिविकाया रथ प्रति ॥ १

तथा गोपालिनी देवी कुमार नन्दिमेव च ।
पुरसर क्रमेणैव घण्टचामरछत्रकै ॥ २

त रथ त्रि परिक्रम्य रथे सिंहासनोपरि ।
शङ्कर पार्वती चैव कुमार विनिवेशयेत् ॥ ३

सिंहासन अधस्तात्तु नन्दिन शूलधारिणम् ।
ततो पञ्चोपचारेण मूर्त्ति देवस्य पूजयेत् ॥ ४

देवी स्कन्द तथा नन्दि ब्रह्माण सूतरूपिणम् ।
देवी वन्दापयेद् धीमान् घृतदीपैर्मनोहरै· ॥ ५

तत सप्रार्थयेद् भक्त्या कृताञ्जलिपुटोऽग्रतः ।
ॐ नमस्ते परमानन्द सच्चिदानन्दरूपिणे ॥ ६

पुनीहीमान् स्वय दृष्ट्वा लोकान् पापपरायणान् ।
राघवाय पुरा देव त्वया दत्तो वरो महान् ॥ ७

तदन्तिक गमिष्यामीदानी परिचिन्तय ।
त्वा च नेतु समर्थं को नृदेव पापकृत्तमः ॥ ८

स्वेच्छया व्रज भो नाथ! रामानुग्रहकारक! ।
इत्युच्चार्य नमस्कृत्य ब्रह्माण चैव वन्दयेत् ॥ ९

ॐ नमस्ते ब्रह्मणे तुभ्य कमलापति-सम्भव! ।
शिवकायरतोऽसि त्व वेदध्वनिनिनादकृत् ॥ १०

ततो जय जयेत्युक्त्वा कुर्याद् वाद्य तु मङ्गलम् ।
भेरीमृदङ्गशङ्खाना वल्लकीना च नि स्वनम् ॥ ११

प्रणवाना गोमुखाना चर्च्चरीणा च वादनम् ।
रथस्य सर्वतो पार्श्वे रथोपरि ततोऽम्बिके! ॥ १२

घनसाराम्बुपुष्पाणि प्रक्षिपेत् श्रोत्रियो द्विज ।
शनै शनै नयेच्चाथ रथ त्रिपुरवैरिण ॥ १३

महोत्सवसमायुक्त गीतवाद्यादिमङ्गलम् ।
तदानी यो नर पश्येच्छिव देव रथोपरि ॥ १४

तस्य यादृक् फल देवि ! तद् वदामि शृणुष्व मे ।
धनधान्य समायुक्त पुत्रपौत्रविभूषित ॥ १५

इहलोके सुखी भोगी देहान्ते शृणु या गति ।
ब्रह्मलोक समासाद्य मोदते ब्रह्मणा सह ॥ १६

शत वर्षसहस्राणि ततो विष्णुपुर व्रजेत् ।
तथैव विष्णुना सार्द्धं कीडित्वा सुचिर शिवे ! ॥ १७

लक्ष वर्षसहस्राणि भूय शिवपुर व्रजेत् ।
तत्राप्सरोभिर्दिव्याभिरुमया शङ्करो यथा ॥ १८

कीडित्वा हि तथा चासौ भोगान्ते लीयते शिवे ।
इदृक् फल महेशानि ! दर्शनेनैव केवलम् ॥ १९

किं फल तन्नजानेऽह कुर्वतो भ्रमरकर्म च ।
अशोकाख्ये तु कुण्डे वै यो नर स्नानमाचरेत् ॥ २०

पश्येद्रथस्थित शम्भु स नरो मन्समो भवेत् ।
उत्तराभिमुख यान्त देव्या स्कन्देन शङ्करम् ॥ २१

रथस्थ त समालोक्य न जन्म पुनराप्नुयात् ।
स्वर्णकूटे गिरिवरे रथस्थ गिरिजापतिम् ॥ २२

सकृद्रक्ष्यन्ति ये लोका पुनरावृत्तिदुर्लभा ।
रथस्थ वामदेव च पश्चिमाभिमुख हरम् ॥ २३

तत्र क्रतुशत पुण्य दर्शने गिरिकन्यके ! ।
एव देवि ! फल प्रोक्त दिदृक्षूणा नृणा मया ॥ २४

अथ चान्यानि वक्ष्यामि फलानि शृणु पार्वति ! ।
रुद्राध्याय पठन् यस्तु रथ कृत्वा प्रदक्षिणम् ।
मनुष्यचर्मणा वद्ध स रुद्रे ! नात्र सशय ॥ २५

चक्रमार्गे नरो यस्तु दण्डवत् प्रणमेद् भुवि ।
रेणुनेकैन देवेशि ! स्वर्गङ्गास्नानज फलम् ॥ २६

य शङ्करमुख दृष्ट्वा पठेन्नाम सहस्रकम् ।
रथस्य गमने काले सोपमन्युसमो भवेत् ॥ २७

दण्डप्रणामेनैकेन कोटिजन्माघनाशनम् ।
किं पुनर्बहुभिर्देवि ! फल वक्तु न इष्यते ॥ २८

रामाभिमुखगच्छन्तमशोकविजयप्रदम् ।
अशोकाख्ये शिव दृष्ट्वा न पुनर्योनिमाप्नूयात् ॥ २९

एतन्मध्ये यदा देवि ! छत्रस्य स्यन्दनस्य च ।
अक्षभङ्गश्चक्रभङ्गो ध्वजभङ्गोऽभिजायते ॥ ३०

कलशस्य च भङ्गस्तु शिरोभङ्गस्तथाम्बिके ! ।
पताका तोरणाना तु अश्वाना सारथेस्तथा ॥ ३१

तदानी विपरीत तु फल राज्येऽभिजायते ।
अक्षभङ्गेन राष्ट्रस्य भङ्गश्चैव तु जायते ॥ ३२

चक्रभङ्गेन देवेशि ! मन्त्रिणा नाशन ध्रुवम् ।
ध्वजभङ्गेन शीघ्र तु राजा मृत्युमवाप्नुयात् ॥ ३३

भवेत् कलशभङ्गेन दुर्भिक्ष प्राणिना क्षय ।
शिरोभङ्गेन भूपस्य पुत्र-भ्रातृ-धनक्षयः ॥ ३४

पताकाछेदने राज्ये भवेद् वायोरुपप्लव ।
तोरणाना विभङ्गेन शत्रूणा वर्द्धन महत् ॥ ३५

अश्वाना पतने नित्यमनावृष्टिस्तु जायते ।
सारथेर्भङ्गमात्रेण सर्वभङ्गोऽभिजायते ॥ ३६

एव देवि ! मया प्रोक्त विपरीतफल महत् ।
इदानीं सप्रवक्ष्यामि प्रायश्चित्त महोदयम् ॥ ३७

राष्ट्रभङ्ग-निवृत्यर्थं सिद्धेश विष्णुपूजितम् ।
महास्नानेन देवेशि ! पूजयेद् भक्तितत्पर ॥ ३८

चक्रभङ्गे तथा चैन ध्वजे च कपिलेश्वरम् ।
गोदोहनैः सहस्रैस्तु लक्षत्र्यम्बक-जापनात् ॥ ३९

तोषयेद् भक्तित प्रीत्या दिव्यै पञ्चामृतैस्तथा ।
अथ कलशभङ्गे तु देवी गोपालिनी यजेत् ॥ ४०

दिव्यै प्रपानकैश्चैव कदलीफलसयुतै ।
मिष्टन्नैश्चैव बहुभिर्भवेद् दुर्भिक्ष्य-नाशनम् ॥ ४१

शिरोभङ्गे तया देवि! पूर्वोक्तविधिना शुभान् ।
भक्त्या त्रीन् क्षेत्रपालाश्च पूज्य शान्तिमवाप्नुयात् ।। ४२

पताका-तोरणाना च भङ्गे विष्णो सुपूजनम् ।
अष्टोत्तरसहस्र तु स्नायाद् बिन्दुह्रदाम्बुभि ।। ४३

सर्वभङ्गे महेशानि! ब्रह्मलिङ्गस्य पूजनम् ।
इक्षुरसमहास्नानैस्तदा शान्तिर्भवेद् ध्रुवम् ।। ४४

प्रायश्चित्तमिद देवि! मया प्रोक्त नृणा हितम् ।
अर्थेन शङ्कर देवि! नीत्वा रामेश्वर प्रति ।। ४५

पूजयेत्तत्र यत्नेन उपचारैस्तु षोडशै ।
ततः प्रभातसमये स्नापयित्वा महेश्वरम् ।। ४६

शिविकाया समारोप्य छत्रचामरकेतुभि ।
काहालैर्डिण्डिमैश्चैव चर्च्चरीशङ्खनि स्वनै ।। ४७

नयेत्त्रिभुवनेश तु स्वलिङ्ग स्वर्णपर्वते ।
एषाशोकाख्या यात्रा हि नृणा मुक्तिप्रदायिनी ।
कथिता तव तुष्टयर्थ शङ्कराय नमो नम ।। ४८

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्या सहिताया पञ्चमेऽशे अशोक-रथयात्रा कथन नाम अष्टषष्टितमोऽध्याय [1] ।।

---

1 $B_1$, $B_2$, V—पञ्चमेऽशे अशोकरथयात्राकथन नाम षष्ठोऽध्याय ।।

# ऊनसप्ततितमोऽध्यायः

## सनत्कुमार उवाच

पद्मजस्य इद वाक्य श्रुत्वा सा गिरिनन्दिनि ।
पुन प्रीतमना प्राह कथयन्त पितामहम् ।। १

अशोकरथयात्रा तु सम्यक् प्रोक्ता त्वयानघ ।
इमा श्रुत्वा मम प्रीतिर्भूय एवाभिवर्द्धते ।। २

इत पर जगन्नाथ ! या या यात्रा वदस्व माम् ।
इति तस्या वच. श्रुत्वा प्रोवाचासौ चतुर्मुखः ।। ३

## ब्रह्मोवाच

शृणु देवि ! प्रवक्ष्यामि यात्रा दमनभञ्जिकाम् ।
चैत्र शुक्लचतुर्दश्यामश्वमेधफलप्रदाम् ।। ४

तीर्थनाथ समीपे तु दिव्योद्याने मनोरमे ।
सर्वर्तुफलपुष्पाढ्ये कूजत्कोकिलषट्पदे ।। ५

महोत्सवान्विता तत्र कुर्याद् दमनभञ्जिकाम् ।
देवस्य द्वारि विमले नारिकेल-फलान्वितम् ।। ६

स्थापयेत् पूर्णकुम्भ तु वस्त्र-चूताङ्कुरादिभि ।
ततो भेरीमृदङ्गादि-शङ्खचच्चरी-नि स्वनम् ।। ७

कृत्वा च पूजयेद् देवमित्थ भक्तिपरायण ।
ॐ नमस्ते करुणाम्भोद ! ब्रह्मोपेन्द्रेन्द्रवन्दित ! ।। ८

विजयस्व महेशान ! यात्रा दमनभञ्जिकाम् ।
इति सप्रार्थ्य देवेश शिविकाया निवेशयेत् ।। ९

चामरैर्जयशब्दैस्तु नयेद् देव शनै शनै ।
नीत्वेमा हरिणा सार्द्धं पल्यङ्कोपरि स्थापयेत् ।। १०

तत प्रक्षाल्य पाण्यघ्री शुद्धचित्तो द्विजोत्तम ।
छिन्द्याद् दमनपत्राणि पञ्चब्रह्म समुच्चरन् ।। ११

अथ तानि स्रज कृत्वा स्थापयित्वाधिवासयेत् ।
शिव सपूज्य भक्त्या तु उपचारैर्मनोहरै ॥ १२

दद्याच्छिरसि ता माला कुर्वन् वाद्यादिमङ्गलम् ।
तत पुण्याहवाक्य तु कुर्याद्राष्ट्रस्य शान्तये ॥ १३

शिव तीर्थेश्वर नीत्वा कृत्वा चोभयमेलनम् ।
पूर्ववत् स्वगृह देव नयेद् गीतादिमङ्गलै· ॥ १४

इमा यात्रा नरो देवि ! यस्तु भक्त्या प्रपश्यति ।
क्षयित्वाशेष-पापानि स व्रजेद्रजताचलम् ॥ १५

यात्राणा प्रवरामेता महापुण्यप्रदा शुभाम् ।
या दृष्ट्वा मुच्यते जन्तु सप्तपूर्वान् परावरान् ॥ १६

अस्या व्रजन्त देवेश शिविकाया सदाशिवम् ।
उत्तराभिमुख चैव कोटियज्ञफलाधिकम् ॥ १७

पद्भ्या शिविकाया देश यान्त दमनभञ्जिकाम् ।
दृष्ट्वाप्नोति शिव सत्य सुरापो ब्रह्महापि सन् ॥ १८

सर्वासा चैव यात्राणा मुख्या दमनभञ्जिका ।
नराणा प्रीतिदा पुण्या शिवलोक सुखप्रदा ॥ १९

शिवपादौ च या भक्ति प्रीतिरुत्पादकारिणी ।
भवेत् सा सतत नृणा दृष्ट्वा दमनभञ्जिकाम् ॥ २०

प्राप्नोति परम लोक शिवाख्य परम महत् ।
वैशाखस्य तृतीयाया प्रकर्याच्चन्दनोत्सवम् ॥ २१

कुङ्कुम चन्दन चन्द्रमेकीकृत्य ततोऽम्बिके ! ।
स्नाप्य पञ्चामृतैर्लिङ्ग लेपयेच्चन्दनादिभि ॥ २२

य पश्येत्तु तृतीयाया लिङ्ग चन्दनलेपितम् ।
ब्रह्महत्यादि पापानि क्षयित्वा याति[1] शङ्करम् । २३

अथान्यामभिधास्यामि यात्रा मुक्तिप्रदायिनीम् ।
इमा दृष्ट्वा नरः सत्य प्राप्नोति शिवमव्ययम् ॥ २४

यात्रामाषाढशुक्लायामष्टम्यां शृणु पार्वति ! ।
पूर्ववत् शिविकाया तु स्थापयित्वा महेश्वरम् ॥ २५

---

1. $A_2$ यान्ति ।

भक्त्या परमया देवि ! नयेद्रामेश्वर प्रति ।
नीत्वा तत्र महास्नान ? मधुना कारयेच्छिवम् ।। २६
उपचारैरुपहारैः पूजयेद् भक्तितत्पर ।
तदानी शङ्कर दृष्ट्वा शिवलोक व्रजेन्नर ॥ २७
अथान्यामभिधास्यामि यात्रा मुक्तिप्रदायिनीम् ।
आषाढशुक्लाष्टम्या तु परशुरामाभिसमुखम् ।। २८
शिविकाया शिव दृष्ट्वा शिवलोकमवाप्नुयात् ।
तत सायाह्ने-समये आनयेत् परमेश्वरम् ।। २९
दक्षिणाभिमुख शम्भुमायान्त परशुरामत ।
दृष्ट्वा पदे पदे देवि ! ब्रह्महत्या विनश्यति ।। ३०
अथ वक्ष्यामि देवेशि ! यात्रा च शयनोत्तमाम् ।
आषाढस्य च शुक्लाया चतुर्दश्या समाचरेत् ।। ३१
देवाग्रमण्डप दिव्य मण्डयेत् सर्वमालकै ।
पल्यङ्क स्थापयेत् तत्र मृदुशय्यासमन्वितम् ।। ३२
तत सायाह्नेसमये सौवर्णी राजतीमपि ।
शम्भोरुमाया प्रतिमा महोत्सवसमन्विताम् ।। ३३
पूजयित्वा प्रयत्नेन गन्धमाल्याम्बरादिभि ।
नयेच्च मण्डप पश्चात् स्थापयेच्छिवमण्डले ।। ३४
तत्रेमौ पङ्कजैर्दिव्यै सितैरक्तैर्विकाशितै ।
पूजयित्वाऽनर्घ्यवस्त्रा वेष्टयित्वा पठेदिदम् ।। ३५
त्व सर्वजनकश्चासि त्व सर्वजननीयसि ।
उभयोर्दर्शनादेते लोका पूता भवन्तु हि ।। ३६
त्वमेव जगता श्रेष्ठो ब्रह्मसावित्रीरूपत. ।
लक्ष्मीविष्णुस्वरूपेण पालकोऽपि महेश्वर ।। ३७
शिवोमारूपयोगेन मुक्तिदोऽसि नृणा किल ।
शयन कुरु भो शम्भो पल्यङ्केऽस्मिन् सहोमया ।। ३८
त्वयि सुप्ते जगन्नाथ ! जना सर्वे तु निश्चला ।
भविष्यन्ति कृतार्थाश्च दर्शनात् तव शङ्कर ! ।। ३९
इति सुप्त्वा तु पल्यङ्के शङ्खभेर्यादिनिस्वनै. ।
स्नापयेत् पार्वतीशानौ पुष्पाणि विकिरेत् तत. ।। ४०

ततो द्वाराणि वै दत्व निसङ्ग च समाचरेत् ।
यः पश्येच्छयने काले शङ्कर चोमया सह ॥ ४१

स याति विष्णु सान्निध्य भासमान सुतेजसा ।
देवयोषित सहस्रैस्तु माल्यदामोपशोभितै ॥ ४२

क्रीडते विष्णु लोके च विष्णुतुल्य-पराक्रमः ।
शृणुष्वाचलकन्तके ! त्व पवित्रारोपणोत्सव ॥ ४३

पवित्रारोपणाद् देवि ! वर्षं पुण्य लभेन्नर ।
श्रावण्या चैव शुक्लाया चतुर्दश्यामुमापतिम् ॥ ४४

पवित्र्यैरर्च्चयेत् रात्र्या कुर्वन् दिव्यमहोत्सवम् ।
द्वादश्याश्च निशाया तु पूजयित्वा महेश्वरम् ॥ ४५

प्रार्थयेच्च ततो देव मन्त्रेणानेन पार्वति ।
ॐ क्रियालोपविघातार्थ तत् त्वया विहित प्रभो ! ॥ ४६

मया तत् क्रियते शम्भो ! तव तुष्टो पवित्रकम् ।
न भे विघ्नो भवेत् तत्र कुरु नाथ दया मयि ॥ ४७

सर्वदा सर्वथा शम्भो ! मम त्व परमा गति ।
ततो रात्र्यन्तर नीत्वा सुप्रभाते समागते ॥ ४८

प्रात क्रिया तु निवर्त्य व्रजेत् शकर-मन्दिरम् ।
ब्रह्मणा कतित सूत्र कार्पासि शोधयेत् जलै ॥ ४९

द्वादशग्रन्थिसयुक्त गुवाकफलमध्यगम् ।
पट्टसूत्रो परिग्रस्त ज्येष्ठ सूदमिद शिवे ! ॥ ५०

तथा नवग्रन्थियुक्त मध्यम सूत्रमम्बिके ! ।
कनीय च ततो देवि ! षड्भिर्ग्रन्थिभिरन्वितम् ॥ ५१

इमानि च पवित्राणि कर्पूरागुरुकुङ्कुमै ।
ग्रन्थि ग्रन्थि ततो देवि ! रञ्जयेत् सुसमाहित ॥ ५२

तत्पुरुषाघोरसद्योश्च वामेशानाश्च पञ्च च ।
तत्त्वानि विन्यसेत् तेषु मूलमन्त्रमथो जपेत् ॥ ५३

ज्येष्ठे जपन्त्रिवार च द्विवार मध्यमे तथा ।
कनिष्ठे च सकृत् जप्त्वा शुक्लवस्त्र पिधाय च ॥ ५४

शङ्खतूर्यादिघोषैस्तु देवाग्रे स्थापयेत् तत ।
रात्रौ गृह्योक्त-विधिना वह्नौ पञ्चाक्षरेण तु ॥ ५५

अष्टाविंशति सख्यास्तु जुहूयादाहुतिर्घृतै ।
हुतशेष ततस्त्वाज्य सिञ्चेत्तेष नगेन्द्रजे ! ।। ५६

अथ शम्भु यथाशक्त्या दिव्यै पञ्चामृतैर्यजेत् ।
एव पूज्य महादेव पवित्राण्यपि पूजयेत् ।। ५७

सम्बत्सरस्य यागस्य पवित्रीकरणाय भो ! ।
शिवलोकात् पवित्र त्वमागच्छेह नमोऽस्तु ते ।। ५८

सर्वाभरणचित्राङ्ग सर्वदेवनमस्कृत [1] ।
लावण्यत्वे तु विश्वात्मन् ! ज्येष्ठ सूत्र समाश्रय ।। ५९

सर्व सम्पत्करोमेश ! सर्वयज्ञरसाधिक ! ।
निवृत्तिरूप ! विश्वात्मन् ! मध्यम सूत्रमाश्रय ।। ६०

अतिभोग मरुद्योने ! पुरुषात्मन् ! दिवस्पते ! ।
तेजसा शङ्करेशान ! कनीय सूत्रमाश्रय ।। ६१

प्रकृते जगत कत्रि ! सवलावण्यदायिनि ! ।
गिरिजे ! नित्यकल्याणि ! सान्निध्य कुरुते नम ।। ६२

इत्युक्त्वा च महेशानि ! प्रत्येकमभिसस्पृशेत् ।
नीलसूक्तेन च तत शङ्कर परितोषयेत् ।। ६३

आमन्त्रितोऽसि देवेश ! पूराणपुरुषेश्वर ।
प्रातस्त्वा पूजयिष्यामि सान्निध्यो भव ते नम ।। ६४

इति नत्वा महादेव नयेद्रात्रि हि जाग्रत ।
तत प्रभाते गौरीश पूज्य पञ्चामृतै शुभै ।। ६५

अनेन प्रार्थयेद् देवि ! शङ्कर तव बल्लभम् ।
ॐ महादेव नमस्तुभ्य गृहाणेद पवित्रकम् ।। ६६

पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ।
पवित्रक कुरुष्वाद्य यन्मया दुष्कृत कृतम् ।। ६७

शुद्धो भवाम्यह देव ! त्वत् प्रसादात् सुरेश्वर ! ।
इति मन्त्रेण देवेशि ! मूलमन्त्रेण वै तत ।। ६८

दद्याल्लिङ्गे पवित्राणि क्रमात् प्रत्येकमम्बिके ! ।
ततो वन्दापयेल्लिङ्गे पञ्च ब्रह्म समुच्चरन् ।। ६९

---

1. V सवदेव नमस्तु ते ।

क्षमापयेदनेनाथ मन्त्रेण परमेश्वरम् ।
जानताजानतावापि न कृत यत् तवार्च्चनम् ।
केनचिद्विघ्नरूपेण परिपूर्णं तदस्तु मे ।। ७०

जयेश्वर महादेव ! जय शम्भो ! उमापते ! ।
जयानन्त ! जयाचिन्त्य ! जय कामद ! मोक्षद ! ।। ७१

एव य कुरुते देवि ! पवित्रारोपण शिवे ! ।
स याति ब्रह्म भवन यावदाचन्द्रतारकम् ।। ७२

पवित्रारोपण दृष्ट्वा नरो निर्धूतकल्मष ।
प्राप्नोति शिवसायुज्य सप्तभि सह पुरुषै ।। ७३

ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पग ।
पवित्रारोपणे शम्भु दृष्ट्वाप्नोति शिव पदम् ।। ७४

यात्रा यमद्वितीयाया श्रृणुष्वाघविनाशिनीम् ।
यस्या दर्शनमात्रेण यमदण्डो न वाधते ।। ७५

पूर्ववच्च समारोप्य शिविकाया महेश्वरम् ।
नयेद् यमेश्वर देवि ! शम्भु त्रिभुवनेश्वरम् ।। ७६

यमेशाख्यान-विधिना पूजयेत् त तु शकरम् ।
पूर्ववच्च नयेच्छम्भु स्वगृह किल पार्वति ! ।। ७७

पश्येद् यमद्वितीयाया य शिव भक्तिमानस ।
स याति शिवसान्निध्य यमदण्ड-विवर्जित ।। ७८

कार्त्तिकस्य सिते पक्षे चतुर्दश्या महेश्वरि ! ।
शम्भोरुत्थापन कुर्यात् त्वया सह नगेन्द्रजे ! ।। ७९

उत्सव पूर्ववत् कृत्वा शङ्खभेरीरवादिभिः ।
उद्घाटयेत् कपाट तु इम वाक्यमुदीरयेत् ।। ८०

ॐ नमस्तेऽस्तु महादेव ! नमस्ते गिरिकन्यके ! ।
युवामुत्तिष्ठत चाद्यानुग्रह कुरुत नृणाम् ।। ८१

इत्युक्त्वा चानयेद् देवी देव त्रिभुवनेश्वरम् ।
लिङ्गेऽस्थ पूजयेत् पुष्पैर्निलये परमेश्वरम् ।। ८२

इमां यात्रा नरो दृष्ट्वा शकरोत्थापना शिवे ! ।
सर्वपापविनिर्मुक्त शिवलोके महीयते ।। ८३

ब्रह्मोवाच

एता पुण्यतमा यात्रा मया प्रोक्तास्तवाग्रत ।
मयापि भक्तिनम्रेण इमा शङ्करत श्रुता ॥ ८४

एतासा श्रवणाद् देव पुण्यभाग् जायते नर ।
इत पर महेशानि ! किमन्यच्छ्रोतुमिच्छसि ॥ ८५

इत्येकाम्रपुराणे षट् साहस्र्यामैश्वर्यां सहिताया पञ्चमेऽशे चतुर्दशयात्राकीर्त्तन नाम ऊनसप्ततितमोऽध्याय [1] ॥

1 B₁, B₂, V—पञ्चमेऽशे चतुर्दशयात्रानुकीर्त्तनं नाम सप्तमोऽध्यायः ।

# सप्ततितमोऽध्यायः

## व्यास उवाच

श्रुत्वा सनत्कुमारोक्ति सर्वे ते मुनिपुङ्गवा ।
उत्फुल्लनयना सर्वे इदमूचु सुविस्मिता ॥ १

## असितादय ऊचु

पितामह-वच श्रुत्वा किमाह गिरिजा द्विज[1] ।
तत्त्वमाख्याहि तत्त्वज्ञ[1] श्रोतुमिच्छामहे वयम् ॥ २

## सनत्कुमार उवाच

यात्राश्चतुर्दश श्रुत्वा ब्रह्मणो लोकपावनी ।
कौतूहलमना देवी ब्रह्माणमिदमब्रवीत् ॥ ३

## श्रीपार्वत्युवाच

पितामह[1] महाप्राज्ञ[1] सर्वलोकनमस्कृत[1] ।
पुराणप्रवर दिव्य यत् त्वया परिकीर्त्तितम् ॥ ४
दुर्लभ च शिवज्ञान परमार्थ-प्रदर्शनम् ।
अनुक्रममथो ब्रह्मन्[1] अशानामनुकीर्त्तय ॥ ५

## ब्रह्मोवाच

कथित च मया देवि[1] शिववक्त्राद् विनिर्गतम् ।
पुराण प्रवर ह्येतत् सर्वामर-नमस्कृतम् ॥ ६
मोक्षद सर्वलोकाना सर्वयज्ञफलप्रदम् ।
मुनिभिर्वसुभि सेव्य लोकपालै सुरासुरै ॥ ७
शृणुष्वावहितेदानी सम्यक् कथयतो मम ।
क्षत्रदर्शनसस्थान-मनुक्रमविशेषणम् ॥ ८

---

1, $B_1$, $B_2$ - ब्रह्मोवाच ।

वस्तुनिर्देशन विद्धि प्रथमाध्यायमुत्तमम् ।
आदिप्रश्न द्वितीय च ज्ञानवीजमत परम् ॥ ९

कथन ब्रह्मगीताया आदिसर्गस्य कीर्त्तनम् ।
कीर्त्तन युगधर्मस्य सप्तद्वीपानुकीर्त्तनम् ॥ १०

प्रोक्त भारतवर्षस्य सप्तपातालनिर्णयम् ।
तत शिवे ! पर विद्धि उर्ध्वलोकस्य कीर्त्तनम् ।

इत्येतत्प्रथमाशे च कथित वरवर्णिनि ! ॥ ११
अनुक्रम द्वितीयाशे निबोधाथ ममाम्बिके ! ।

एकाम्रवर्णन पुण्यमुद्विग्न ब्रह्मणस्तथा ।
तत पर निबोधेद लिङ्गदर्शनमुत्तमम् ॥ १२

ब्रह्मेश्वरस्य माहात्म्य सर्वदेवोपदेशकम् ।
भास्करेश-प्रभाव च श्रीयमेश्वर-कीर्त्तनम् ॥ १३

भूतानुग्रहक वाक्य तत सिद्धेश्वर हरम् ।
बिन्दूद्भव-स्वरूपोक्त बिन्दूद्भवह्लदोद्भवम् ॥ १४

प्रतिमास व्रतविधि बिन्दुह्लद माहात्म्यकम् ।
समन्तात् क्षेत्रमाहात्म्य रक्षसा ऋतु दर्शनम् ॥ १५

देवासुर सनहन सम्मुख सेनयोर्द्वयो ।
कालनेमे शक्तिविद्ध महेशागमन तत ॥ १६

हिरण्याक्षबध चैव भृगोर्वाक्यमनुत्तमम ।
तपसोश्चोपदेश च द्वितीयाश समीरित ॥ १७

तृतीयाशे निबोधादौ देव्यावतरण शुभम ।
ततो विद्धि प्रयत्नेन चाख्यान कीर्त्तिवासयो ॥ १८

देव्या सवोधन चैव कीर्तिवासविमर्दनम् ।
देविपादद्वय पुण्य ततो मेघेशकीर्त्तनम् ॥ १९

पापनाशनमाहात्म्य भूय पापहरा च वै ।
इन्द्रेशालावुतीर्थं च ततस्तु कपिलेश्वरम् ॥ २०

कोटिलिङ्गार्च्चनविधि पितापुत्रस्य सकथा ।
पितृसवोधनाख्यान प्रासादात्ममहाफलम् ॥ २१

चतुर्थांशे निवोधेदमनुक्रममनुक्रमात् ।
बालखिल्यागत नाम गोकर्णेश्वरकीर्त्तनम् ॥ २२

जामदग्न्येश्वरस्यापि कीर्त्तन पापनाशनम् ।
श्रीरामचन्द्रागमन तथा पारिप्लव हयम् ।। २३
शत्रुघ्नेन सम युद्धे कमठाङ्गबध तथा ।
रामेश्वरप्रतिष्ठान तथाष्टायतन स्मृतम् ।। २४
अष्टमूर्त्तेश्च माहात्म्यथाम्रातक-कीर्त्तनम् ।
जटिलेशस्य माहात्म्य सिद्धलिङ्गानुकीर्त्तनम् ।। २५
तत साधारणोक्ति च क्षेत्रपालोद्भव तथा ।
भीमेश्वरस्य माहात्म्य शवरेश्वरकीर्त्तनम् ।। २६
इत्येतच्चरित देवि ! चतुर्थांशेषु चोदितम् ।
पञ्चमाशे निवोधादौ क्षेत्रस्यास्य प्रदक्षिणम् ।। २७
छायायात्रामथो देवि ! भविष्यनृपकीर्त्तनम् ।।
यात्राणा कीर्त्तन चाथ प्रतिष्ठा वै रथस्य तु ।। २८
अशोकरथयात्रा वै सर्वयात्रानुकीर्त्तनम् ।
अनुक्रममिदं देवि ! पुराणैकाम्रक शुभम् ।। २९
नानास्तोत्रपदाद् दिव्यसौपदेशिकमुत्तमम् ।
ब्रह्महत्यादिपापघ्न मन्त्रवीजपदाक्षरम् ।। ३०
अणिमादिगुणैश्वर्यदायक सिद्धिद शिवम् ।
अनाख्येयमनालोक्यं प्रवदन्ति मनीषिण ।। ३१
सर्वदोषविनिर्मुक्त तदक्षयपदप्रदम् ।
अमृत ज्योतिराकाशशब्दस्पर्शगुणैरितम् ।। ३२
सत्त्व सत्त्वविवेकाख्य निर्वाणपदसगतम् ।
श्रवणादमृतज्ञान कथनादमृताद् गिरम् ।। ३३
ईश्वरेश स्वय साक्षाद् विश्वोपकरणाय च ।
पुराणमिदमेकाम्र समाविष्ट तु योगत ।। ३४
विद्या कामदुधा धेनुस्त्रैलोक्याप्यायिनी मता ।
विद्याना परमा विद्या शिवस्योक्ता पुरातनी ।। ३५
लौकिक वैदिक चार्थं सर्वागमविनिर्णयम् ।
व्यापक वीजसयुक्त महामोहोद्भवानुदम् ।। ३६
प्रशान्तकरण दिव्यमज्ञानतिमिरापहम् ।
दिव्यमीश्वरसभूत पुराणमिदमव्ययम् ।। ३७

विख्यापयति यो भक्त्या वित्ताशाठ्यविवर्जित ।
निवेदयति विप्राय तस्य पुण्यफल शृणु ॥ ३८

वापी कूप-तडागस्य उद्यानाना सहस्रश. ।
मण्डपस्य सहस्रस्य प्रासादस्य कृतस्य च ॥ ३९

राजसूयाश्वमेधस्य यत्फल समुदाहृतम् ।
तत्फल समवाप्नोति सत्य शृणु नगेन्द्रजे ! ॥ ४०

नाभक्ताय त्वदत्ताय वक्तव्य परम त्विदम् ।
विशेषेण तु दातव्य शिवभक्ताय धीमते ॥ ४१

विद्यादानात् पर दान न भूत न भविष्यति ।
विद्यादानप्रदानेन बृहस्पतिपद व्रजेत् ॥ ४२

अग्निष्टोमस्य यज्ञस्य सौत्रामणीकृतस्य च ।
सहस्र साधिक पुण्य विद्यादानमनुत्तमम् ॥ ४३

पुस्तकस्य च दानस्य विशेष समुदाहृतम् ।
लक्ष्य लक्षाधिक पुण्य विद्यादानात् न सशय ॥ ४४

चयनस्य च यज्ञस्य वाजपेयकृतस्य च ।
न तत् फल समाख्यात यत्फल पुस्तकस्य च ॥ ४५

चतु सागरपर्यन्ता यो दद्याच्च वसुन्धराम् ।
रत्नपूर्णां द्विजाग्र्याय न तत् फलमवाप्नुयात् ॥ ४६

योगिनो या गतिं यान्ति वीतरागा विकल्मषा ।
तस्मात् परतर यान्ति पुराण य प्रयच्छति ॥ ४७

प्रवक्ष्येऽहृ यथावृत्त शिवेन गदित पुरा ।
अष्टम्या च चतुर्दश्या पुण्येऽहनि शुभे क्षणे ॥ ४८

रात्रौ जागरण कार्यमग्निकार्यं तथैव च ।
एकादशाहुती शस्ता रौद्रमन्त्रेण मन्त्रिता. ॥ ४९

समिद्भिरक्षतैश्चाज्यसिक्तैश्चैव द्विजोत्तमै ।
होमान्तर ततो न्यस्येत् पञ्चतत्त्वानि पुस्तके ॥ ५०

मण्डलेन विचित्रेण पुष्पप्रकरशोभितै ।
गन्धै पुष्पैस्तथा धूपै समभ्यर्च्च्य प्रयत्नत ॥ ५१

यथा गुरुस्तथा विद्या यथा विद्या तथा गुरु ।
विद्या च गुरुवश्चैव द्वावेतौ शिवसज्ञकौ ॥ ५२

गुरुपूजा तत. कृत्वा पूजयेत् कृत्तिवाससम् ।
तपस्विन भोजयित्वा शक्तित सुसमाहित ।। ५३

तत श्रृण्वन्ति ये देवि ! पुराणमिदमव्ययम् ।
आदिमध्यावसान च तेषा पुण्यफल श्रृणु ।। ५४

सप्तजन्मकृत पाप स्वल्प वाप्यथवा बहु ।
क्षालयेन्मात्र सन्देह शिवस्याज्ञा प्रमाणत ।। ५५

तत स्वर्गपुर गत्वा क्रीडित्वा सुचिर शिवे ! ।
शिवलोक व्रजेत् तस्मात् सप्तपुरुषसयुत ।। ५६

यस्मिन् राष्ट्रे पुरे वापि पठ्यतेऽद सकृच्छिवे ! ।
स धन्य प्रवरो देशस्तस्मिन् धर्मं प्रतिष्ठिन ।। ५७

राज्ञो जनपदाना च पौराणा च द्विजन्मनाम् ।
क्षेममारोग्यमैश्वर्यं सुभिक्ष्य रोगवर्जितम् ।। ५८

सर्वाबाधाविनिर्मुक्त सर्वपूर्णमनोरथ ।
अकालमरण नात्र नोपसर्पभय क्वचित् ।। ५९

कुष्माण्डाश्च ग्रहारोगा प्रभवन्ति कदाचन ।
नित्यमागमसयुक्त ग्रहणामनुकूलता ।। ६०

श्रोतव्य सतत मर्त्त्यैरानाख्येय पुरातनम् ।
नमस्य पावन श्रेष्ठ सुरासुरनमस्कृतम् ।। ६१

त्रिदशैर्मुनिभि पूज्य सर्वमङ्गलदायकम् ।
आराध्य परम ध्येय श्रीमत् स्वस्त्ययन परम् ।। ६२

## सनत्कुमार उवाच

एव पुरा द्विजश्रेष्ठास्तत्र कैलासपर्वते ।
भवान्या शङ्करस्यादौ जातसम्बाद उत्तम ।। ६३

तत शिवे प्रेरितेन ब्रह्मणा गौरिसम्मुखे ।
प्रोक्तमेतत् पुराण तु तत् सर्वं च मया श्रुतम् ।। ६४

शिवस्य तु प्रसादेन भवता कृपया मया ।
सर्वलोकपवित्राय पुराण कथित शुभ ।। ६५

इत पर द्विजश्रेष्ठास्तत्र गन्तु समुद्यता ।
भवध्व भवपाशात् च विमुक्ताश्च भविष्यथ ।। ६६

## व्यास उवाच

सनत्कुमारवचन श्रुत्वा ते ऋषिसत्तमाः।
आनन्दा शिवसकल्पा जहुस्तापत्रय तत ॥ ६७

मनुष्य चर्मगा वद्धा रुद्रा जातास्तु तत्क्षणात्।
प्रणेमु शिरसा वद्धा बाल सनत्कुमारकम् ॥ ६८

एतस्मिन्नन्तरे राजन् ! कृत्तिवासा शिव. स्वयम्।
आगत्य स्वगणै सार्द्धमाह तान् ऋषिसत्तमान् ॥ ६९

सनत्कुमारस्तु महान् मदशो नान्यथा द्विजा ।
एतत् पुराणकथनादस्मिन् प्रीतिरभून्मम ॥ ७०

पुराणमेतदेकाम्र यस्तु कीर्त्तयते मम।
स प्राप्नोति पर स्थान दिव्य लोक सुदुर्लभम् ॥ ७१

इत्युक्त्वा स महादेवो धृत्वा तत् करपङ्कजम्।
वृषे निवेशयित्वा त खस्थस्तान्नाह शङ्कर ॥ ७२

यूयं मुनिकुला सर्वे मम नामानुकीर्त्तनात्।
मम सायुज्यममलमचिरात् प्राप्स्यथाशु च ॥ ७३

इत्युक्त्वान्तर्दधे शम्भु ऋषिणा स्वगणै सह।
ते च विप्रास्तथा कृत्वा गता शिवगृह ततः ॥ ७४

य इद शृणुयाद् दिव्यमेकाम्राख्य पुराणकम्।
स याति भवन शम्भोर्नान्यथा शृणु भूपते ॥ ७५

पठेद् य परया भक्त्या पाठवेद् वा समाहित ।
तस्य पापानि नश्यन्ति ब्रह्महत्यादिकानि च ॥ ७६

अथवा बहुनोक्तेन किं ज्ञानेन महीपते ! ।
लभेत् फल ब्रह्मणोक्त याति सायुज्यमैश्वरम् ॥ ७७

शिवमादौ शिव मध्ये शिवमन्ते प्रतिष्ठितम्।
गोब्राह्मणनृपाणा च शिव भवतु सर्वदा ॥ ७८

एकस्तेजोभिरेभि परिह्वृतविमले ज्योतिषा यो विभाता-
स्त्वष्टौ ते लोकपाला सुविधृतशिरसा शासने नित्ययुक्ता.।
स्रष्टाव्याभूतसघाश्चतुरजनि जगत् पञ्चभौतात्मक यो
योऽसौ मूर्त्ति विभर्ति द्विगुणितचतुरा पातु व. कृत्तिवास. ॥ ८०

इत्येकाम्रपुराणे षट्साहस्र्यामैश्वर्यां सहिताया पञ्चमेऽशे अनुक्रमफलश्रुतिकथनं नाम सप्ततितमोऽध्यायः[1]।

समाप्तमिदमेकाम्रपुराणम् ।



1. $B_1$, $B_2$, V—पञ्चमेऽशे अनुक्रमश्रुतिकथनं नाम अष्टमोऽध्याय.